श्रीमदनन्तरामविरचित:

# वेदान्ततत्त्वबोधः

संस्कृत-हिन्दी-व्याख्याद्वयोपेत:

।।श्रीमते निम्बार्काचार्याय नमः।।

डॉ. जयप्रकाशनारायण त्रिपाठी

॥ श्रीः ॥
चौखम्भा संस्कृतभवन ग्रन्थमाला
११५

श्रीमदनन्तरामदेवविरचितो

# वेदान्ततत्त्वबोधः

श्रीमदमोलकरामशास्त्रिकृतया 'बालबोधिनी'-टीकया
डॉ. जयप्रकाशनारायणत्रिपाठिकृतया 'हिन्दी'-व्याख्यया च विभूषितः

सम्पादकः
**डॉ. जयप्रकाशनारायणत्रिपाठी**
उपाचार्यः, वेदान्तविभागस्य
सम्पूर्णानन्द-संस्कृतविश्वविद्यालये, वाराणस्याम्

**चौखम्भा संस्कृत भवन**
वाराणसी-२२१००१ (भारत)

THE
CHAUKHAMBHA SANSKRIT BHAWAN SERIES
115

# VEDĀNTATATTVABODHA

OF
ŚRĪ ANANTARĀMA

With the Sanskrit Commentary
*'BĀLABODHINĪ'*
by
ŚRĪ AMOLAKARĀMA ŚĀSTRĪ

Edited With *'Hindi'* Commentary by

**DR. JAYAPRAKĀŚA NĀRĀYAṆA TRIPĀṬHĪ**
Reader, Vedānta Department
Sampurnanand Sanskrit University, Varanasi

**CHAUKHAMBHA SANSKRIT BHAWAN**
VARANASI-221001 (INDIA)

# समर्पणम्

वाक्यप्रमाण-पद-सागर-पारदृश्वा
रामप्रसाद इति सूरिवियद्दिनेशः ।
'वेदान्ततत्त्व-युत-बोध'मवेक्ष्य सार्थं
स्वाशीर्वचोभिरनुमोदयतात् 'प्रकाशम्' ।।

भावावनतमूर्धा
महामहोपाध्यायपण्डितश्रीरामप्रसादत्रिपाठिसूनुः
**जयप्रकाशनारायणत्रिपाठी**

# दो शब्द

श्री अनन्तराम द्वारा विरचित "वेदान्ततत्त्वबोध:" निम्बार्क सम्प्रदाय का एक महत्त्वपूर्ण ग्रन्थ है। इस ग्रन्थ में ग्रन्थकार ने परमत का निराकरण कर द्वैताद्वैतवाद की स्थापना अत्यन्त युक्ति-युक्त ढंग से की है।

यह ग्रन्थ सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी की शास्त्री परीक्षा के पाठ्यक्रम में निर्धारित है। बहुत वर्षों से यह ग्रन्थ अनुपलब्ध होने के कारण पठन-पाठन में कठिनाई का अनुभव हो रहा था। यह ग्रन्थ सर्वजनगम्य हो, इसलिए राष्ट्रभाषा हिन्दी व्याख्या सहित इसका सम्पादन एवं प्रकाशन कर सुधीजन के सम्मुख प्रस्तुत करने में अपार हर्ष हो रहा है। पं. अमोलकराम शास्त्री कृत बालबोधिनी टीका का भी इसमें समावेश होने से इसकी उपादेयता और बढ़ गयी है।

मैं उन सभी गुरुजनों का श्रद्धावनत हूँ, जिनकी प्रेरणा एवं आशीर्वाद से यह गुरुतर कार्य पूर्ण हुआ। अन्त में चौखम्भा संस्कृत भवन के व्यवस्थापक श्री ब्रजेन्द्र कुमार एवं समस्त कार्यकर्ताओं को साधुवाद देता हूँ, जिनके सराहनीय प्रयास से यह ग्रन्थ आप समस्त विद्वज्जनों के समक्ष आ सका है। अथ च वर्तमान ग्रन्थ के विषय में कृपालु विद्वज्जनों के कृपापूर्ण सुझाव का हार्दिक आकांक्षी हूँ।

**'मरालाः क्षीरमादाय त्यजन्ति सलिलं यथा ।**
**तथा सद्गुणासक्ताः सन्तो दोषान् त्यजन्तु मे'** ।। इति।

विनयावनत

**जयप्रकाश नारायण त्रिपाठी**
उपाचार्य, वेदान्त-विभाग
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

।। श्रीहरिः शरणम् ।।

# संस्तवः

अनादिकालतः प्रवृत्तं मार्गद्वयं सृष्टेरादौ सृष्टिकर्ता ब्रह्मा स्वपुत्रेभ्यः प्रविभज्य उपदिदेश । तेषु सप्तर्षयः प्रवृत्तिमार्गं जगृहुः, सनन्दनादयश्च निवृत्तिमार्गम् । एते च निवृत्तिमार्गस्य प्रवर्तका ब्रह्मविद्योपदेष्टारः । स्वाभाविकद्वैताद्वैतप्रतिपादननिपुणाः पञ्चषड्हायनार्भाभाः कुमारा विष्णुगाथागायनतत्परा निःशेषशेषमुखगीतकथैकपानाः कथारसिकाः पुरुषोत्तमस्य भगवतः श्रीकृष्णस्य शिष्यत्वङ्गता इति भागवतप्रामाण्यात् प्रमीयते । नारदोपक्रमस्य पाञ्चरात्रसिद्धान्तस्य इमे उपदेष्टार इति सनत्कुमारसंहितावचनैर्निर्णीयते । कुमाराणां शिष्यपरम्परायां सुदर्शनावतारः श्रीदेवर्षिर्नारदानुग्रहभाजनो निम्बार्काचार्योऽवतीर्य श्रीबादरायणोपदिष्टसूत्राणां व्याख्यानं वाक्यार्थरूपेण सङ्गृहीतवान् । आचार्यचरणानां तात्पर्यं जिग्राहिषया वेदान्तकौस्तुभाख्यो नाम ग्रन्थः पूज्यपादश्रीश्रीनिवासाचार्यचरणैर्निबद्ध इदानीमपि स्वाभाविकभेदाभेदप्रकाशकान् भक्तिरसप्रवर्षकान् निम्बार्कसिद्धान्तान् धरण्यां धरन् सहृदयैर्जिज्ञासुभिः शङ्काशङ्क्वपसारणायावलम्बनीक्रियत इति दर्शं दर्शं महान्तं मोदमावहति चेतो भक्तेर्भगवत्तत्त्वबोधेऽवर्जनीयमुपकारं स्वीकृतवत् ।

अनन्तरं श्रीमदनन्तरामेण सकलत्रय्यार्थजिग्राहिषया बालानामनायासेन बोधाय प्रतिपक्षनिराससमुत्सुकानामाह्लादजनको वेदान्ततत्त्वबोधाख्यो ग्रन्थः सङ्ग्रथितः । श्रुतीनां वेदान्तसूत्राणां तात्पर्यं निर्दिधारयिषया अनन्तरामेण कृतोऽनल्पश्रमः सर्वथा साफल्यं भजेदिति धिया श्रीमदमोलकरामशास्त्रिणा निम्बार्कसिद्धान्तनिष्ठेन बालबोधिनी टीका कृता या ग्रन्थस्य निम्बार्कसिद्धान्तानाञ्च रहस्यस्फोरणाय विदुषां मनोमोदाय च समर्थापि ग्रन्थदौर्लभ्यादसमर्थेव जातेति विचार्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदान्तविभागे उपाचार्यै रामानुजसिद्धान्तप्रकाशनतत्परैराबाल्यादेकमनसाराधितशास्त्राणां व्याकरणशास्त्रे च पाणिनिकल्पानामितरेषु शास्त्रेषु चानितरसाधारणं पाण्डित्यमावहतां न केवलमस्मादृशानामपि तु सम्पूर्णस्यैव वैयाकरणकुलस्येदानीन्तनस्य साक्षात् परम्परया वा गुरूणां महामहोपाध्यायपण्डितरामप्रसादत्रिपाठिनां मध्यमैः पुत्रैः पितृस्नेहाप्लावितहृदयैः **डॉ. जयप्रकाशनारायणत्रिपाठिभिः** प्राकाश्यं नीयत इति विचार्य तेषां कृत्यं च स्तुत्यं मत्वा मोमोत्ति चेतो मदीयम् । **हिन्दीव्याख्यया** समलङ्कृतो द्वैताद्वैतसिद्धान्तग्रन्थिस्फोरकभूमिकया च विभूषितोऽयं ग्रन्थो जिज्ञासूनां बालानाञ्चोपकारको भवन् विदुषामप्यनुपेक्ष्यो भविष्यतीति मे मनीषा ।

शरत्पूर्णिमा, २०६२
१६-११-२००५

**नरेन्द्रनाथपाण्डेयः**
प्रतिकुलपतिः, आचार्योऽध्यक्षश्च
प्राचीनराजशास्त्रार्थशास्त्रविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्

॥ श्रीगणेशाय नमः ॥

# शुभाशंसनम्

श्रीमद्भगवत्पूज्यपादश्रीनिम्बार्काचार्यसम्प्रदायसिद्धद्वैताद्वैतवादसमर्थनपरो निर्विशेषाद्वैतविशिष्टाद्वैतखण्डनपरः श्रीमदनन्तरामाचार्येण विदुषा विरचितो लघुकायो महार्थप्रदर्शकादर्शभूतो ग्रन्थो **वेदान्ततत्त्वबोधो** नाम। तत्र वेदान्ता उपनिषदः। तेषां तत्त्वं परमार्थः किमिति जिज्ञासायामुच्यते–सर्वज्ञः सर्वशक्तिरनन्तकल्याणगुणसागरः सविशेषः, जगज्जन्मादिनिमित्तोपादानोभयकारणं चेतनाचेतनवस्तुस्वाभाविकभेदाभेदाश्रयः परब्रह्म पुरुषोत्तमादिशब्दाभिधेयः श्रीकृष्ण एव। तस्य बोधः परिज्ञानं यत्र ग्रन्थेऽसौ ग्रन्थो **वेदान्ततत्त्वबोधः**। स एव परब्रह्म परमेश्वरः श्रीकृष्णो वेदान्तैः सत्यं ज्ञानमित्यादि-भिरुपदिश्यते।

अद्वैतवादिभिश्च निर्विशेषं निर्गुणं सच्चिदानन्दरूपं परब्रह्म वेदान्तलक्ष्यभूतम्। पूर्वोक्तब्रह्मस्वरूपं सविशेषं सर्वज्ञं सर्वशक्त्यनन्तकल्याणगुणो वेदान्तवाच्य इति। अचेतनेन चिद्रूपस्य न भेदो न वाऽभेदः कश्चित् सम्बन्धः सम्भवति, असङ्गत्वात्। तस्मात् तयोश्चेतनाचेतनयोराध्यासिकस्तादात्म्यसम्बन्धः। चेतनस्य अचेतने संसर्गाध्यासः, अचेतनस्य चात्मनः सर्वस्य चेतने स्वरूपाध्यासः। ब्रह्मातिरिक्तं चेतनमन्यज्जीवाख्यं नास्तीति तयोः सम्बन्धस्य चर्चा व्यर्था।

वेदान्ततत्त्वबोधे श्रुतिप्रामाण्याद् द्वैताद्वैतमतवादः समर्थितः। सन्ति हि श्रुतयोऽद्वैतप्रतिपादिकाः—तत्त्वमसि, अयमात्मा ब्रह्म, एकमेवाद्वितीयम्, नेह नानाऽस्ति किञ्चनेत्येवमाद्याः। सन्ति च भेदप्रतिपादिकाः—द्वा सुपर्णा सयुजा सखायः, पृथगात्मानं प्रेरितारञ्चेत्येवमाद्याः। तत्र अन्यतरपक्षपरिग्रहेऽन्यतरपक्षप्रतिपादिकाः श्रुतयो व्याकुप्येरन्। तादृशव्याकोपोपशमनार्थम् एकतरपक्षे श्रुतितात्पर्यमाश्रित्य अन्यतरपक्षस्य औपचारिकत्वं व्यावहारिकत्वं न युक्तं प्रतिभाति। भेदाभेदसमर्थने तु सर्वे वेदान्ताः समनुगता भवन्ति।

निर्विशेषे ब्रह्मणि तु प्रमाणं नास्ति, अप्रामाणिकत्वाद् अवस्तु तत्। तस्मादवस्तुनि कथं श्रुतितात्पर्यविषयत्वं स्यात्। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च," "सर्वरूपः सर्वरसः सर्वगन्धः" इत्यादिभिः श्रुतिभिः "विवक्षितगुणोपपत्तेश्च" (ब्र.सू. १.२.२) "सर्वधर्मोपपत्तेश्च" (ब्र.सू. २.१.३५) इत्यादिसूत्रैश्च सविशेषतैव ब्रह्मणः प्रतिपाद्यते न निर्विशेषता।

जीवब्रह्मणोश्च सविशेषवादे कथञ्चिदपि ऐक्यं न शक्यमुपपादयितुम्। निर्विशेष-ब्रह्मणोऽवस्तुत्वाच्च तयोरद्वैतमसम्भवम्। चैतन्येनाभेदः, अणुत्वमहत्त्वादिना च भेद इति स्वाभाविकभेदाभेदौ तयोः सिद्ध्यतः।

प्रकृतिश्चाचेतना त्रिगुणात्मिका मायाख्या न ब्रह्मणि अध्यस्ता, अत एव न मिथ्या, अपि तु सत्या। अध्यासस्य च लक्षणप्रमाणहीनत्वाद् असम्भवात्। अध्यासस्यास्मिन् ग्रन्थे विस्तरेण खण्डनं कृतमस्ति। तस्मात् चेतनं जीवः, अचेतनं प्रकृतिः, परं ब्रह्म श्रीकृष्ण इति तत्त्वत्रयं निर्धारितं श्रुतिसम्मतम्। परस्परं भेदाभेदयुक्तम्। तादृशभेदाभेदाश्रयः परमात्मा। न चैतत् तत्त्वत्रयं व्यावहारिकत्वेन निर्विशेषपक्षेऽपि सम्मतमेवेति चेत्, एतेषां व्यावहारिकत्वेन मिथ्यात्वे प्रमाणाभावात्। मिथ्यात्वकल्पकानिर्वचनीयाज्ञानस्याप्रामाणिकत्वात् खण्डितत्वात्। व्यावहारिकत्वेन सत्यत्वं परमार्थभूतमेव। ब्रह्मप्रमातिरिक्तप्रमाऽबाध्यत्वं व्यावहारिकत्वमित्यादिकल्पना तु अद्वैतिकपोलकृता।

यद्यपि एतत् तत्त्वत्रयं विशिष्टाद्वैतमतेऽपि सम्मतम्, परन्तु तत्र न भेदाभेदौ, अपि तु चेतनेन अचेतनेन सह तदात्मभूतस्य सविशेषस्यानन्तकल्याणगुणस्य परमेश्वरस्य भेद एव नाभेदः, न च भेदाभेदौ। तत् सूक्ष्मस्थूलरूपविशिष्टयोस्तु अभेदः कार्यकारणभूतयोः।

अत्र ग्रन्थे शाङ्करसम्मताद्वैतवादस्य महता संरम्भेण प्रतिवादः कृतो विद्यते। शाङ्करमतस्य अश्रौतत्वमयौक्तिकत्वं भ्रामकत्वञ्च प्रतिपाद्य भेदाभेदवादस्य समर्थनं कृतमस्ति।

लघुकायस्यास्यार्थतो महतो ग्रन्थस्य व्याख्या (राष्ट्रभाषायाम्) अत्यन्तमपेक्षिताऽद्यत्वे। सा अपेक्षा इदानीं पण्डितचक्रचूडामणीनामपरपाणिन्याख्यप्राच्यनव्यव्याकरणशास्त्रतलान्तपाण्डित्यविभूषितदिगन्तविश्रान्तविश्रवसां पण्डित श्रीरामप्रसादत्रिपाठिवर्य्याणां गुरूणां सुपुत्रेण सकलवेदान्ततत्त्वावबोधगभीरोदधिना **डॉ. जयप्रकाशनारायणत्रिपाठिना** सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वेदान्तविभागीयोपाचार्येण पूरिता।

अनेन वेदान्तपरमार्थदर्शिना अत्र सरला सुबोधग्रन्थार्थविमर्शिनी निम्बार्कमतस्फुटप्रकाशिका छात्राणां विदुषाञ्चोपकारप्रमोदावहा निगूढग्रन्थग्रन्थिभेदोद्भेदिनी व्याख्या विरचिता।

इतः पूर्वमस्य ग्रन्थस्य व्याख्या राष्ट्रभाषायां न केनापि विदुषा कृतेति अस्या अपूर्वता महत्ता च विशिष्यते। अनेन वेदान्तविदा महाविदुषा महता श्रमेण यत्नेन च निम्बार्कशाङ्करवेदान्तादिशास्त्रपर्यालोचनया धिया च विशिष्टया व्याख्या पुरस्कृतातिमहत्त्वपूर्णा।

तद्वयं व्याख्यारूपग्रन्थस्य साफल्याय लेखकस्य च विद्वच्छिरोमणेरभ्युदयदीर्घायुष्यारोग्यकामनया भगवन्तं साम्बं शिवं प्रार्थयमानाः प्रमोदामहे।

दि. १०.११.२००५

विद्वज्जनविधेयः

**पारसनाथद्विवेदी**

वेदान्तविभागाध्यक्षचरः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्

# प्राक्कथन

वागर्थ-पृक्तमविविक्तमथो विविक्तं
भेदं ह्यभेदकलितं ललितं वहन्तम् ।
वन्दे प्रपन्नजन-कल्पतरूपमानं
'राधामुकुन्द'-मुदितेन्दुमुखं सुखाब्धिम् ।।

इस परिवर्तनशील संसार में प्रत्येक प्राणी दुःख की निवृत्ति एवं सुख की प्राप्ति के लिए प्रयत्नशील है। एक ऐसे निरतिशय सुख की प्राप्ति जिसका तीनों कालों में नाश नहीं होता एवं जिससे बड़ा कोई अन्य सुख नहीं है। ऐसे निरतिशय सुख की प्राप्ति के उपायों का साङ्गोपाङ्ग वर्णन वेद, उपनिषद्, गीतादि शास्त्रों में मिलता है। वेदों का अन्तिम भाग ही उपनिषद् कहलाता है और इसी अन्तिम भाग को वेदान्त भी कहते हैं, अर्थात् उपनिषद् ही वेदान्त हैं। भारत की दार्शनिक चिन्तन-परम्परा में प्रदीप्त मुकुटमणि की तरह वेदान्तदर्शन की मान्यता और महत्ता सार्वजनीन है।

वेदान्तदर्शन में उपनिषद्, श्रीमद्भगवद्गीता एवं ब्रह्मसूत्र प्रस्थानत्रयी के नाम से प्रख्यात हैं। उपनिषद् श्रुतिप्रस्थान, श्रीमद्भगवद्गीता स्मृतिप्रस्थान तथा ब्रह्मसूत्र न्यायप्रस्थान के रूप में आचार्यों द्वारा प्रतिपादित हैं। श्रुत्यनुकूल वेदान्ततत्त्व के प्रतिपादक ब्रह्मसूत्रों के रचयिता भगवान् बादरायण व्यास हैं। ब्रह्मसूत्रों का प्रमुख उद्देश्य सांख्यमतावलम्बियों के जगत्कारणप्रतिपादक प्रधानकारणवाद का निराकरण कर ब्रह्मकारणवाद को प्रतिष्ठित करना है । ब्रह्मसूत्रों पर शङ्कर, भास्कर, रामानुज, निम्बार्क, मध्व, वल्लभ आदि प्रमुख आचार्यों के भाष्य वर्त्तमान में उपलब्ध हैं, जिनमें विभिन्न आचार्यों ने अपने मत एवं दृष्टि से व्याख्या की है ।

यद्यपि ये सभी भाष्य श्रुतिमूलक हैं, किन्तु आचार एवं तत्त्वचिन्तन की दृष्टि से पारस्परिक भेद के कारण इन्हें शाङ्कर, वैष्णव तथा शैव इन तीन प्रमुख भागों में विभक्त किया जा सकता है । आचार्य शङ्कर ने ब्रह्मसूत्रों की अद्वैतपरक, भास्कर द्वैताद्वैतपरक, रामानुज विशिष्टाद्वैतपरक, मद्ध्वाचार्य द्वैतपरक, वल्लभाचार्य शुद्धाद्वैतपरक तथा भगवान् निम्बार्काचार्य ने भेदाभेदपरक व्याख्या की है ।

## निम्बार्क मत का विकासक्रम

निम्बार्क-सम्प्रदाय वैष्णवमत का सनकसम्प्रदाय कहा गया है । 'हरिगुरुस्तवमाला' के अनुसार निम्बार्क मत के आदि प्रवक्ता हंसनारायण थे, इन्हें लोग श्रीराधाकृष्ण की युगलमूर्ति का प्रतिरूप मानते हैं । इन्होंने इस मत की दीक्षा सनन्दनादि कुमारों को

दी, उन्होंने प्रेमा भक्ति के सर्वश्रेष्ठ उपासक नारद को दी, नारद ने निम्बार्काचार्य को दीक्षा दी।

## निम्बार्काचार्य

पूर्व में नियमानन्द नाम से प्रसिद्ध निम्बार्काचार्य जी का जन्म दक्षिण भारत के सामान्य तैलङ्ग ब्राह्मण परिवार में हुआ था। आधुनिक तेलगूदेश में बेलारी जिले के निम्बपुरम् नामक ग्राम को इन्होंने अपने जन्म से अलङ्कृत किया, ऐसी जनश्रुति प्रचलित है। इनके पिता का नाम जगन्नाथ तथा माता का नाम सरस्वती देवी था। पौराणिक कथा के अनुसार ये सुदर्शन चक्र के अवतार थे। इनका नाम निम्बार्क क्यों पड़ा ? इस विषय में एक कथानक है। कहा जाता है कि एक दिन अद्वैतमतसमर्थक कोई दिवाभोजी यति इनके आश्रम में आया, प्रातः से सायंकालपर्यन्त शास्त्रार्थ के पश्चात् यति द्वारा रात्रिभोजन निषेध किये जाने पर इन्होंने आश्रम में स्थित निम्बवृक्ष पर अपने तेज को सूर्य के रूप में प्रतिष्ठित कर भोजन कराकर शास्त्रार्थ में पराजित कर सम्मानपूर्वक विदा किया। तभी से निम्बवृक्ष पर सूर्य का दर्शन कराने के कारण इनका नाम निम्बार्क पड़ा। इनकी प्रमुख तीन रचनाएँ हैं—

१. वेदान्तपारिजातसौरभ–ब्रह्मसूत्र पर संक्षिप्त भाष्य।

२. दशश्लोकी–निम्बार्क–सिद्धान्त–प्रतिपादक ग्रन्थ।

३. श्रीकृष्णस्तवराज–निम्बार्क–सिद्धान्त–प्रतिपादक पच्चीस श्लोकात्मक लघुकाय ग्रन्थ।

**श्रीनिवासाचार्य**—ये निम्बार्काचार्य के साक्षात् शिष्य थे। इन्होंने निम्बार्काचार्य-प्रणीत वेदान्तपारिजातसौरभ गन्थ पर वेदान्तकौस्तुभ नामक व्याख्या लिखी है। ये विष्णुकरस्थ शंख के अवतार थे।

**केशवकाश्मीरी भट्ट**—ये शास्त्रार्थ-महारथी थे। इनका जन्म-काल पन्द्रहवीं शताब्दी का उत्तरार्द्ध या सोलहवीं शताब्दी का पूर्वार्द्ध माना जाता है। इन्होंने श्रीनिवासाचार्यकृत वेदान्तकौस्तुभ पर वेदान्तकौस्तुभप्रभा नामक ग्रन्थ की रचना की है। विषयप्रतिपादन की दृष्टि से अपने पूर्ववर्ती "कौस्तुभ" पर यह एक व्याख्यानात्मक ग्रन्थ ही नहीं, अपितु निम्बार्क-दर्शन में एक प्रौढ़, विस्तृत एवं स्वतन्त्र ग्रन्थ के रूप में मान्य है। इनकी अन्य रचनाओं में क्रमदीपिका (पूजापद्धतिपरक), तत्त्वप्रकाशिका (भगवद्गीता-व्याख्या) प्रसिद्ध है।

**पुरुषोत्तमाचार्य**—हरिव्यास देवाचार्य के पट्टशिष्य श्रीपुरुषोत्तमाचार्य निम्बार्क-दर्शन के प्रतिभासम्पन्न एवं लब्धप्रतिष्ठ विद्वान् थे। वेदान्तरत्नमञ्जूषा और श्रुत्यन्तसुरद्रुम इनके ये दोनों ग्रन्थ अधिक विख्यात हैं। वेदान्तरत्नमञ्जूषा दशश्लोकी का विशिष्ट

वेदान्ततत्त्वप्रतिपादक व्याख्या है।

**देवाचार्य**–ये कृपाचार्य के अन्यतम शिष्य थे। इन्होंने सिद्धान्तजाह्नवी नामक ग्रन्थ का प्रणयन किया है, जो ब्रह्मसूत्र के चतुःसूत्री का समीक्षात्मक भाष्य है।

**माधवमुकुन्द**–ये निम्बार्क-सम्प्रदाय के परिनिष्ठित विद्वान् के रूप में प्रतिष्ठित हैं। इन्होंने 'परपक्षगिरिव्रज' नामक ग्रन्थ की रचना की है, जिसमें प्रबल युक्तियों के बल पर तर्कपूर्वक अद्वैतमत का निराकरण किया है।

**निम्बार्क मत के उपास्य**

राधाकृष्ण की माधुर्य उपासना को दार्शनिक सम्प्रदाय के रूप में प्रतिष्ठित करने वाले निम्बार्काचार्य प्रथम आचार्य हैं। पराह्लादिनी शक्ति के रूप में वृषभानुनन्दिनी राजेश्वरी रासेश्वरी रसिकेश्वरी वृन्दावनविहारिणी सहस्रसखियों से परिसेवित श्रीराधा रानी श्रीकृष्ण के वामभाग में शक्ति के रूप में विराजमान सकल कामनाओं को पूर्ण करती हैं। जैसा कि दशश्लोकी से अभिव्यक्त होता है।

**अङ्गे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम्।**
**सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम्॥**

**निम्बार्कमत में स्वीकृत तत्त्व**

रामानुजाचार्य के समान निम्बार्काचार्य भी चित्, अचित् और ईश्वर इन तीन तत्त्वों को स्वीकार करते हैं।

**१ चित् तत्त्व**– चित् अथवा जीव एक साथ ज्ञानस्वरूप और ज्ञानाश्रय भी है। जीव का स्वरूप शुद्ध चैतन्य है तथा ज्ञाता होने के कारण जीव ज्ञान का आश्रय भी है। ज्ञान स्वरूपभूत और धर्मभूत दोनों है। स्वरूपभूतज्ञान द्रव्यरूप तथा धर्मभूतज्ञान गुणात्मक है। द्रव्यात्मक तथा गुणात्मक ज्ञान में धर्मिधर्मभाव सम्बन्ध स्वतःसिद्ध है। जीव नित्य, चेतन, ज्ञाता, कर्त्ता, भोक्ता, अनन्त, अणुपरिमाण, ईश्वराश्रित तथा ईश्वर द्वारा नियम्य है।

**ज्ञानस्वरूपं च हरेरधीनं शरीरसंयोगवियोगयोगम्।**
**अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः॥**

(दशश्लोकी-१)

ज्ञानाकारतया दोनों अभिन्न हैं और धर्मिधर्म भाव से दोनों भिन्न भी हैं। इसी को भेदाभेद कहते हैं। जिस प्रकार सूर्य एक साथ प्रकाशमय भी है और प्रकाश का आश्रय भी है।

अविद्या और कर्म के कारण जीव शरीर को प्राप्त कर जनन-मरण चक्र में घूमता रहता है। ईश्वर क़ी कृपा से ही जीव अपने स्वरूप का ज्ञान प्राप्त करता है। निश्चल भक्ति से प्रसन्न परमात्मा मुक्ति प्रदान करते हैं। मुक्तावस्था में भी जीव ईश्वर के अधीन रहता है। जीव एवं ईश्वर में अंशांशी भाव है, अर्थात् जीव अंश है, ईश्वर अंशी है। यहाँ अंश का तात्पर्य अवयव से नहीं, बल्कि शक्ति से है, ईश्वर सर्वशक्तिमान् और जीव शक्तिरूप है।

**२. अचित् (प्रकृति) तत्त्व**—चेतनाविहीन पदार्थ को अचित् कहा जाता है। प्राकृत, अप्राकृत एवं काल भेद से यह तीन प्रकार का होता है।

**(क) प्राकृत**—महत् तत्त्व से लेकर पंचमहाभूत तक त्रिगुणात्मक प्रकृति से उत्पन्न सम्पूर्ण जगत् को प्राकृत कहते हैं।

**(ख) अप्राकृत**—इससे दिव्य लोक तथा दिव्य शरीर निर्मित होते हैं। यह शुद्ध या नित्य विभूति के समान है। श्रुतियों में इसे परम व्योमन्, परम पद नाम से अभिहित किया गया है।

**(ग) काल**—यह अचेतन, अखण्ड रूप तथा संसार के समस्त परिणामों का जनक है। यह रामानुज के शुद्धसत्त्व, मिश्रसत्त्व और सत्त्वशून्य के समान है।

**३. ईश्वर**—निम्बार्क मत में ईश्वर को परब्रह्म कहा जाता है। यह सगुण, स्वभाव से ही अविद्यादि दोषों से रहित एवं ज्ञान, आनन्द, बल, ऐश्वर्य आदि समस्त कल्याणगुणों का आकर है। इन चतुर्व्यूहों तथा अवतारों में अभिव्यक्त होने के कारण ईश्वर को अंगी कहा जाता है। जीव और जड़ इनके अङ्ग हैं। ये परमवरेण्य, नारायण, हरि या कृष्ण हैं। इनकी कृपा से ही जीव को अपने स्वरूप का ज्ञान होता है—

**स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्।**
**व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम्॥**

(दशश्लोकी-४)

निम्बार्क मत में ईश्वर जगद् का उपादान और निमित्त दोनों कारण है। ईश्वर की चिदचित् शक्तियों की अभिव्यक्ति ही सृष्टि है। यह अभिव्यक्ति ईश्वर की शक्तियों का तात्त्विक परिणाम है। ईश्वर जीवों के कर्मों का स्वामी और जीवों का नियन्ता है। अत: सृष्टि का निमित्तकारण है। इस समस्त विश्व के भीतर और बाहर भगवान् नारायण अवस्थित हैं— 'अन्त:बहिश्च तत्सर्वं व्याप्य नारायण: स्थित:'। ज्ञान, क्रिया, बल आदि स्वाभाविक विविध शक्तियाँ हैं— 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'।

**स्वाभाविकभेदाभेदवाद**—ईश्वर का चित् और अचित् रूप विश्व के साथ स्वाभाविक भेदाभेद सम्बन्ध है। यदि विश्व ईश्वर से सर्वथा अभिन्न होता तो ईश्वर में इस विश्व की अपूर्णता, दु:ख, अज्ञान आदि की स्थिति अपरिहार्य हो जाती और यदि यह विश्व ईश्वर से सर्वथा भिन्न होता तो ईश्वर द्वारा नियाम्य नहीं होता तथा ईश्वर की सत्ता को सीमित कर देता। चित् तथा अचित् की स्वतन्त्र सत्ता नहीं है। अत: स्वतन्त्र सत्ता का अभाव होने से वे ईश्वर से भिन्न नहीं हैं, परतन्त्र सत्ता का भाव होने के कारण चित् और अचित् ईश्वर से भिन्न हैं; क्योंकि ये ईश्वर द्वारा नियाम्य और ईश्वर के अधीन हैं। ईश्वर सर्वशक्तिमान् और स्वतन्त्र नियन्ता है। यह सिद्धान्त मशक एवं मत्स्य दृष्टान्त से सिद्ध होता है। जीव और ईश्वर में स्वाभाविक भेदाभेद सम्बन्ध है। जीव अणुरूप होने के कारण तथा ईश्वर द्वारा नियन्त्रित होने के कारण उनसे भिन्न है एवं मुक्तावस्था में जीव ज्ञान और आनन्द के अनुभव में भगवद्भावापन्न होने के कारण भगवान् से अभिन्न है। दीपक और प्रकाश की तरह, अग्नि और उसकी ज्वाला की तरह जीव और ईश्वर भिन्न और अभिन्न दोनों हैं। 'तत्त्वमसि' महावाक्य में 'तत्' पद स्वतन्त्र व्यापक ब्रह्म का वाचक है, 'त्वम्' नियम्य जीव का वाचक है तथा 'असि' पद भेदाभेद का बोधक है।

**श्रीअनन्तराम**—प्रकृत ग्रन्थ के प्रणेता अनन्तराम ने अपने जन्मस्थान, माता, पिता आदि का कहीं उल्लेख नहीं किया है। फलस्वरूप इनके विषय में कुछ इदमित्थं कहना सम्भव नहीं है। वेदान्ततत्त्वबोध ग्रन्थ के समाप्तिसूचक वाक्य से ज्ञात होता है कि वे स्वाभाविकभेदाभेदकुशल निखिलशास्त्रपारावारीण विद्वान् थे। समस्त शास्त्रों में अन्तर्निविष्ट होकर उनके सार को ग्रहण करके पूर्वापर पक्षोपस्थापनपुरस्सर उनका खण्डन करके स्वाभाविकभेदाभेदवाद को प्रतिष्ठापित किया। इनके द्वारा विरचित वेदान्ततत्त्वबोध नामक ग्रन्थ में श्रीमाधवमुकुन्द एवं जगद्विजयी केशवकाश्मीरी भट्ट द्वारा प्रणीत परपक्षगिरिव्रज एवं बादरायणसूत्रवृत्ति वेदान्तकौस्तुभप्रभा में वर्णित विषय ही उपनिबद्ध हैं। वेदान्ततत्त्वबोध के बालबोधिनीटीकाकार अमोलकराम शास्त्री ने अपनी भूमिका में ग्रन्थकार अनन्तराम के विषय में ऐसा विचार व्यक्त किया है—

"ग्रन्थस्यास्य रचियता कदेमं भुवोभागमलञ्चकारेति वयं न जानीमः। परमविरक्त-शिरोमणिसकलशास्त्रपारावारीणहरिभक्तपारायणपूज्यपादस्वयम्भुश्रीरामदेवाचार्य-शिष्यपरम्परानुगतश्चायं सहारनपुरजिलान्तर्गतजगाधरीपत्तनाख्ये तेषां निवासस्थानञ्चेति तु प्रायोवादश्श्रूयते।"

**अमोलकराम शास्त्री**—वेदान्ततत्त्वबोध ग्रन्थ के टीकाकार अमोलकराम शास्त्री का जन्म बीसवीं शताब्दी में "कुरुक्षेत्र स्थानान्तर्गत पुण्डरीक नामक ग्राम में हुआ था। इनके पिता गौडवंशावतंस शालिग्राम उपाध्याय वृन्दावन में निवास करते थे। ये

सर्वसाधनसम्पन्न सकलशास्त्रविशारद तपस्वी विद्वान् थे। ये केवल एक ही शास्त्र के ज्ञाता नहीं थे, अपि तु तर्कादि शास्त्रों में अप्रतिहतगतिसम्पन्न थे। ये 'तर्कतीर्थ', 'तर्करत्न', 'तर्कवागीश' आदि अलङ्करणों से विभूषित थे। वेदान्ततत्त्वबोध ग्रन्थ पर इनकी बालबोधिनी टीका के अध्ययन से इनके तलान्त पाण्डित्य का ज्ञान होता है।

## वेदान्ततत्त्वबोध

निम्बार्कमत के दार्शनिक सिद्धान्तों का प्रतिपादन अत्यन्त पाण्डित्यपूर्ण ढङ्ग से करनेवाली श्रीमदनन्तराम की यह अमर कृति है। इस ग्रन्थ के आरम्भ में सुदर्शन-चक्रावतार भगवन्निम्बार्काचार्य की स्तुति मंगलाचरण में की गयी है।

**यश्चिन्तितो हरति ध्वान्तमशेषमन्त-**
**र्बोधप्रदस्तरणिकोटिसमप्रभो वै।**
**योऽज्ञानवादविभवां हि ददाह[१] काशीं**
**तं श्रीसुदर्शनमहं हृदि चिन्तयामि।।**

जिस प्रकार सुदर्शनचक्र ने अज्ञानवादविभवा काशी को जलाया, उसी प्रकार सुदर्शनचक्रावतार भगवन्निम्बार्काचार्य ने श्रुत्यनुकूल भेदाभेद सिद्धान्त का प्रतिपादन कर अज्ञानवाद से ग्रस्त परमत का निराकरण करके अज्ञानान्धकार को दूर किया।

## काशी-दाह की कथा

श्रीमद्भागवत के दशम स्कन्ध के ६६वें अध्याय में काशी-दाह की कथा इस प्रकार वर्णित है। एक बार करूषदेशाधिपति विवेकहीन पौण्ड्रक मूर्खों के बहकावे में आकर श्रीकृष्ण जैसा पीताम्बर, शङ्ख, चक्र, गदा आदि धारण करके अपने को वासुदेव मानने लगा तथा श्रीकृष्ण के पास दूत भेजा। दूत ने द्वारकापुरी जाकर सिंहासन पर विद्यमान श्रीकृष्ण से निवेदन किया—'महाराज! राजा पौण्ड्रक का सन्देश है कि हे कृष्ण ! तुम मूर्खतावश मेरे चिह्न धारण कर रक्खे हो उन्हें छोड़कर मेरी शरण में आओ, यदि मेरी बात तुम्हे स्वीकार न हो तो तुम मुझ से युद्ध करो'। दूत का यह सन्देश सुनकर भगवान् श्रीकृष्ण ने कहा कि मैं अपने शंख-चक्र आदि चिह्न को नहीं छोडूँगा, अपि तु इन्हें मैं तेरे साथियों के साथ तुझ पर छोडूँगा। यह सन्देश दूत ने पौण्ड्रक को वहाँ से लौटकर सुनाया। इधर भगवान् श्रीकृष्ण ने रथ पर सवार होकर काशी पर आक्रमण कर दिया; क्योंकि उस समय पौण्ड्रक भी काशी में अपने मित्र काशिराज के साथ रहता था। भगवान् श्रीकृष्ण के आक्रमण का समाचार सुनकर दो अक्षौहिणी सेना के साथ वह युद्ध हेतु आ गया। उसकी सहायता के लिए काशिराज भी तीन अक्षौहिणी सेना के साथ आ गये। भगवान् श्रीकृष्ण शङ्ख-चक्र-गदा-कौस्तुभ आदि से विभूषित पौण्ड्रक को देखकर हसने लगे और गदा-बाण-

चक्रादि से पौण्ड्रक तथा काशिराज की सेना को छिन्नभिन्न कर दिया। चक्र से पौण्ड्रक का शिर काटकर बध कर दिया तथा काशिराज का शिर बाणों से काटकर काशीपुरी में गिरा दिया। पौण्ड्रक अनादर भाव से ही सही श्रीकृष्ण का सदा ध्यान करता रहता था। इसलिए वह भगवान् के सारूप्य को प्राप्त हो गया।

इधर राजद्वार पर काशीनरेश का शिर देखकर रानियाँ, राजकुमार, राजपरिवार तथा पौरजन विलाप करने लगे, सर्वत्र शोक का वातावरण छा गया। काशीराजपुत्र सुदक्षिण ने पिता का अन्त्येष्टि संस्कार करने के अनन्तर पितृऋण से उऋण होने के लिए पितृघाती श्रीकृष्ण का बध करने की कामना से भगवान् शिव की घनघोर तपस्या की। भगवान् शङ्कर द्वारा अब्रह्मण्यविनाश का वरदान प्राप्त कर दक्षिणाग्नि की आराधना किया। दक्षिणाग्नि भयङ्कर रूप धारण कर भूतों के साथ श्रीकृष्ण का बध करने के लिए द्वारकापुरी की ओर दौड़ा। द्वारकापुरी के लोग भयभीत होकर श्रीकृष्ण की शरण में गये। श्रीकृष्ण यह समझ गये कि यह काशी से चली हुई माहेश्वरी कृत्या है, अत: चक्र से उसे खण्ड-खण्ड कर दिया। दक्षिणाग्नि ने लौटकर सुदक्षिण के साथ ऋत्विजों तथा आचार्यों का भी बध कर दिया। उसके पीछे-पीछे सुदर्शन चक्र ने भी आकर अज्ञानवाद-निमग्न काशी को भी जलाकर भस्म कर दिया।

**दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम्।**
**भूयः पार्श्वमुपातिष्ठत् कृष्णस्याक्लिष्टकर्मणः।**

**ग्रन्थगत संक्षिप्त प्रतिपाद्य विषयः-**

सार्वज्ञ्यादि अनन्तकल्याणगुणगणाकरकार्यानुकूल अनन्तशक्तिसम्पन्न अचिन्त्य जगत् के सृष्टि स्थिति लय के अभिन्ननिमित्तोपादानकारण चेतनाचेतन वस्तुओं के स्वाभाविक भेदाभेदाश्रयभूत परब्रह्म परमात्मा पुरुषोत्तम भगवान् श्रीकृष्ण ही वेदान्तों के एकमात्र तत्त्व हैं—'सार्वज्ञ्याद्यनन्तकल्याणानन्तशक्तिर्जगतो जन्माद्यभिन्ननि-मित्तोपादानकारणं चेतनाचेतनवस्तुस्वाभाविकभेदाश्रय: परब्रह्म परमात्मा पुरुषोत्तमादि-शब्दाभिधेय: श्रीकृष्ण एवेति वेदान्तार्थ:'। वह परमात्मा अचिन्त्य अतर्क्य वरेण्य स्वाश्रितपापापहर मनोहर हरि नित्य, देह-काल-वस्तु-परिच्छेदरहित, अनन्त शिर, अनन्त नेत्र, अनन्त बाहु, अनन्तगुण तथा अनन्तरूपों वाला है। इसकी पराशक्ति समस्त लोकों का सर्जन, पालन तथा संहरण करती है। प्राणियों में नित्य व्याप्त परब्रह्म कालादि के नियन्ता परमात्मा पुरुषोत्तम भगवान् श्रीकृष्ण हैं। अत: मुमुक्षुओं में अनन्तगुणगणादिसम्पन्न श्रीकृष्ण के ब्रह्मवाच्य होने के कारण तद्विषयक जिज्ञासा स्वाभाविक है। यहाँ पर 'अथातो ब्रह्मजिज्ञासा'' इस बादरायण सूत्र में 'ब्रह्मण: जिज्ञासा' ऐसा करने पर कर्म में षष्ठी समास होने से भोक्तृ-भोग्य-नियन्तृ होने से

जिज्ञासु, जिज्ञासा तथा जिज्ञास्य चिदचिदीश्वररूप तत्त्वत्रय की सिद्धि स्वतः सिद्ध है।

इस ग्रन्थ में सांख्यदर्शन में प्रतिपादित कर्मकर्तृत्वादि प्रकृति के स्वाभाविक धर्मों का खण्डन करते हुए ईश्वर को ही जीवों के कर्मों का नियामक कहा गया है। श्रुति, स्मृति में भी ऐसा ही प्रतिपादन किया गया है—

**'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म ह्येतत्।**
**'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः'।।**
**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।।** इति।

**द्वैताद्वैतसिद्धान्त—**

जगत् में दो प्रकार के तत्त्व हैं, चेतन और अचेतन। चेतन एवं अचेतन का ब्रह्म के साथ भेदाभेद या द्वैताद्वैत सम्बन्ध ग्रन्थकार ने प्रतिपादित किया है। शास्त्रों में केवल द्वैतमत और केवल अद्वैतमत के रूप में दो मत प्रसिद्ध हैं। उनके आधार के रूप में द्वैतविषयक एवं अद्वैतविषयक वाक्यों को प्रमाण के रूप में प्रस्तुत किया जाता है। केवल द्वैतमतावलम्बी विद्वान् नैयायिकों की तरह ब्रह्म को जगत् का उपादान कारण नहीं मानते, निमित्तकारणमात्र स्वीकार करते हैं। किन्तु ऐसा मानने पर उनके मत में 'सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'सर्वं खल्विदं ब्रह्म' 'तज्जलान्' 'तत् सृष्ट्वा तदेवानुप्राविशत्' 'ऐतदात्म्यमिदं सर्वम्' इन श्रुतिवाक्यों तथा 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'आत्मकृतेः परिणामात्' 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादि सूत्रों तथा 'अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते' 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इत्यादि गीतावाक्यों से विरोध होगा। इसप्रकार ब्रह्म को निमित्तकारणमात्र मानने पर श्रुति, युक्ति एवं प्रतिज्ञा दृष्टान्त से विरोध होगा। अतः मृत्तिका घट तथा सुवर्ण कुण्डल की तरह जगद् एवं ब्रह्म का अभेद मानना चाहिए। निमित्त कारण मात्र केवलभेद स्वीकार करना उचित नहीं है। अतएव ग्रन्थकार ने भेद एवं अभेद दोनों स्वीकार किया है।

यद्यपि अभेद मानने पर ब्रह्म विकारी हो जायेगा, यह आपत्ति प्रदर्शित की जाती है, तथापि शक्तिविक्षेपलक्षण परिणाम को स्वीकार कर स्वरूप में परिणाम को न मानने के कारण भेदाभेदवादी ब्रह्म में विकार प्राप्ति का वारण कर देते हैं।

केवलाद्वैतमत भी प्रमाणों से पुष्ट नहीं होता, क्योंकि सजातीय विजातीय स्वगतभेदशून्य सर्वधर्मविनिर्मुक्त नित्यशुद्धमुक्तस्वरूप चिन्मात्र निर्विशेष ब्रह्म ही एकमात्र तत्त्व है, यह केवल अद्वैतवाद सकलप्रमाण का अगोचर होने के कारण

अप्रमाण होने से स्वीकार्य नहीं है, क्योंकि प्रमाणों का यह स्वभाव है कि उनसे सविशेष वस्तु की ही सिद्धि होती है निर्विशेष वस्तु की नहीं।

सभी अभेदपरक वाक्य स्वतन्त्र सत्त्व के अभेद को प्रतिपादित करते हैं, क्योंकि स्वतन्त्र सत्ता वाले श्रीपुरुषोत्तम एक हैं। भेदनिषेधपरक वाक्य चेतन एवं अचेतन के स्वतन्त्र सत्त्व का निषेध करते हैं। अत: परतन्त्र सत्त्व के अभिप्राय से भेदपरक वाक्यों की प्रवृत्ति स्वीकार की जाती है। इसप्रकार विश्वात्मा पुरुषोत्तम स्वाश्रित आत्मसत्ता को लेकर विश्व से अभिन्न तथा आत्मीय चेतनाचेतन नियम्यवर्गवृत्ति (रहने वाला) परतन्त्र सत्त्वाभाव रूप से विश्व से भिन्न है। श्री पुरुषोत्तम जो स्वभावत: विश्व से भिन्नाभिन्न हैं वही सभी वेदान्तों से प्रतिपाद्य हैं।

ग्रन्थकार ने द्वैत और अद्वैव दोनों को श्रुतिमूलक स्वीकार किया है। भेदप्रतिपादक और अभेदप्रतिपादक दोनों प्रकार की श्रुतियां उपलब्ध होती हैं। अत: केवल अभेद को मानकर भेद का निराकरण और भेद को मानकर अभेद का निराकरण करना असमीचीन ही नहीं एकपक्षीय भी है। अत: भेदाभेद को मानने से दोनों का समन्वय हो जाता है।

**अध्यास का खण्डन**—शुद्ध ब्रह्म ही अज्ञान का विषय और आश्रय दोनों होता है। अर्थात् अज्ञान ब्रह्म में ही रहता है और ब्रह्म का ही आवरण करता है। यह स्वीकार करनेवाले अद्वैतवादी आचार्य ब्रह्म को सकलजगदध्यासाधिष्ठान कहते हैं। यह मत ग्रन्थकार की दृष्टि से समीचीन नहीं है। ज्ञान और अज्ञान अत्यन्त विजातीय तथा एक दूसरे के विरोधी हैं। अत: ज्ञानरूप ब्रह्म में अज्ञान रहता है, यह कथन उचित नहीं है। जैसे सूर्य को अन्धकार का आश्रय तथा अन्धकार का विषय (अन्धकार से आवृत) नहीं कहा जा सकता, उसी प्रकार ज्ञानरूप ब्रह्म को भी अज्ञान का आश्रय तथा विषय नहीं कहा जा सकता।

अध्यास का मूलभूत अज्ञान जो ब्रह्म में स्वीकार किया जाता है वह स्वप्रयुक्त है या ब्रह्मप्रयुक्त है, यह उपपादित नहीं किया जा सकता।

ब्रह्मसूत्र शांकरभाष्य के प्रथम सूत्र के व्याख्यान के उपक्रम में तम एवं प्रकाश की तरह विरुद्ध स्वभाव वाले अत्यन्त विविक्त चित् एवं जड़ के ऐक्य की अनुपपत्ति का परिहार अध्यास के द्वारा करते हुए भाष्यकार ने कहा है—

"अत्यन्तविविक्तयोरपीतरेतराविवेकेनान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्य-धर्मांश्चाऽध्यस्य मनुष्योऽहं ममेदमिति लोकव्यवहार: अनादिकालप्रवृत्त:। अतोऽध्यासो वर्णनीय इति।"

इसका खण्डन करते हुए ग्रन्थकार ने कहा है कि अध्यास की उपपत्ति के लिए अविवेक का आश्रय कौन है? यह स्पष्ट करना होगा। जड़ विषय को अविवेक का आश्रय नहीं कहा जा सकता, क्योंकि वह अविवेक रूप ही है। शुद्ध आत्मा को भी अविवेक का आश्रय नहीं कहा जा सकता, क्योंकि ज्ञानरूप आत्मा में अज्ञान (अविवेक) की आश्रयता बाधित है। इन दोनों से अन्य कोई अविवेक का आश्रय नहीं हो सकता, क्योंकि अज्ञान और आत्मा से अतिरिक्त अन्य सभी अद्वैत मत में अध्यास के कार्य ही हैं और अध्यास अभी भी विचारकोटि में होने से असिद्ध है। अतः इनसे भिन्न कोई आश्रय नहीं हो सकता। इस प्रकार अध्यास के मूल अज्ञानाश्रयत्व का निरास हो जाने से अध्यास का भी निरास हो जाता है।

विद्वद्वशंवदः
**जयप्रकाश नारायण त्रिपाठी**

# उपोद्घातः

**द्वैताद्वैत-विवेक-सेक-सदयस्वान्तैकभान्तं परं**
**'भेदाभेद'-विचारचारु-परमब्रह्मात्म-बोधारुणम् ।**
**तत्तद्-ब्रह्मकसूत्रचिन्तनरतं निम्बार्क-देवं गुरुं**
**वन्दे श्रीमदनन्तरामसहितं वेदान्त-बोध-प्रदम् ।।**

वेदान्ततत्त्वबोधनामा प्रकृतो ग्रन्थः श्रीभगवन्निम्बार्काचार्यचरणानुगामिविद्वद्वर-श्रीमदनन्तरामदेवविरचितः श्रीअमोलकरामशास्त्रिविरचितया "बालबोधिनी"-टीकया समलङ्कृतो बहोः कालादप्राप्यताङ्गतः सर्वजनबोधगम्यभाषानुवादोपबृंहित इदानीं प्राकाश्यं नीयमानो न केवलं छात्राणामेव कृते अपि तु निम्बार्कसिद्धान्तबुभुत्सूनां जिज्ञासूनां शास्त्रान्तरप्रविष्टानामपि मनोमोदाय भविष्यतीति विचार्य मोमोत्ति चेतः ।

वेदान्तास्तावदन्वर्थनामानो वेदस्य चरमतात्पर्यनिर्णायकाः साधनसम्पत्त्या परे ब्रह्मणि जिज्ञासूनां भक्तानाञ्च मनसां योजकाः, न केवलं शब्दात्मकराशिभूतत्वात् पारोक्ष्यज्ञानेनैवानुग्राहकाः किन्तु भगवच्चरणचञ्चरीकत्वसम्पादनपुरस्सरं रससिन्धौ निमज्जनेऽतीवोपकारका इति रसिकसम्प्रदाये चरतां नास्त्यतिरोहितम् । वेदान्ता उपासनपरा ज्ञानपराश्चेति व्याख्याद्वैविध्येन विभिन्नाचार्यवचोभिरेव प्रकटीभवति ।

समेऽपि वेदान्तसम्प्रदायेषु लब्धप्रतिष्ठा आचार्याः शङ्कररामानुजमध्वनिम्बार्कप्रभृतयः स्वस्वसिद्धान्तानां प्रकाशनाय प्रचाराय च बादरायणकृतब्रह्मसूत्रमाधाररूपेणोपाश्रित्य स्वां स्वां लेखनीं व्यापारयाम्बभूवुः । तेषां शिष्या अपि स्वां स्वां परम्परामनुसृत्य भाष्याणां टीका अन्याँश्च ग्रन्थान् निबबन्धुः, एवं ग्रन्थपौष्कल्येन सर्वेऽपि शाङ्करमाध्वरामानुज-निम्बार्कादिसम्प्रदायाः स्वस्वसिद्धान्तान् गद्यपद्यमयैर्ग्रन्थरत्नैः प्रकाशयन्ति, भविष्यति च स्वसिद्धान्तानां प्रचाराय परसिद्धान्तानां निरासाय नूतनान् प्रत्नाँश्च ग्रन्थान् प्रचारयिष्यन्तीति दुर्लभानित्यैतिह्यदर्शनेनानुमातुं सुशकम् ।

ग्रन्थोऽयं निम्बार्कपरम्पराया रत्नभूत इत्येतस्य विषयपर्यालोचनात्पूर्वं निम्बार्क-सम्प्रदायविषये तत्प्रवर्तकाचार्यविषये च लेखनीं व्यापृत्य आत्मानं पावयितुमिच्छामि ।

निम्बार्कसम्प्रदायस्यारम्भो ब्रह्मणः पुत्रेभ्यः सनन्दनादिभ्यो बभूवेति भागवतवचनेन-

**एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः ।**
**सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा[1] ।।**

इत्यनेन निर्णीयते । सनकाद्युपक्रमश्चायं सम्प्रदायो भगवतः श्रीकृष्णादुपदेशपारम्पर्यं

१. श्रीमद्भा.म.पु. ११/१३/१४

लब्धवानिति उपरितनवचनेनैव स्पष्टो भवति। सनकादीनां विद्यासम्प्रदायो भगवत आदिनारायणस्यावतारभूतस्य शेषस्य ज्ञानकलां स्वस्मिन् क्रोडीकरोतीति तत्त्वमिदं श्रीमद्भागवतमेव-

**निःशेषशेषमुखगीतकथैकपानाः, प्रेमप्रकाशकृतये शरणं गतोऽस्मि[१]।**

इत्यादिकं वदत् प्रमाणीकरोति। सनन्दनादिभिश्च पूर्णपुरुषोत्तमाद् भगवतः श्रीकृष्णात् लोकोद्धारकं ज्ञानं सम्प्राप्य लोके तस्य प्रसाराय शमादिसम्पन्नो देवर्षिर्नारदः शिष्यत्वेन परिगृहीत इति सनत्कुमारसंहितावचनेन निर्धारयितुं शक्यम्। तथा चोक्तम्-

**सनत्कुमारं योगीन्द्रं सिद्धाश्रमनिवासिनम्।**
**नियमेनोपसङ्गम्य शिरसा प्रणिपत्य च॥**
**नारदः परिपप्रच्छ ब्रह्मर्षिः सर्वकालवित्॥**

**निम्बार्काचार्यः**—श्रीदेवर्षिनारदानुग्रहभाजनं भगवान् श्रीसुदर्शनावतारः श्रीनिम्बार्काचार्यः 'नियमानन्द' नाम्ना पूर्वं प्रसिद्धिङ्गतस्तैलङ्गब्राह्मणोऽभूत्। "तत्खल्वाहुः कतिभ्यस्तु कर्मभ्यो नाम जायते"[२] इति बृहद्देवतानिर्देशमभ्युपगम्यास्य वेदान्तदर्शनस्य निम्बार्केति नाम कथङ्कारं जातमित्याकाङ्क्षायामुच्यते—द्वैताद्वैतवेदान्तदर्शनस्य प्रवर्तकः निम्बार्काचार्यः। श्रूयते खल्वयमाचार्योऽद्वैतवादस्थापनाय केनचित् मायावादियतिना सूर्योदयादारभ्य सूर्यास्तं यावत् शास्त्रार्थं कृत्वा पराजित्य च तं सूर्यास्तमवलोक्य भूयसा प्रार्थ्यमानोऽपि तेन सूर्यदर्शनाभावाद् भोजनेऽरुचिः प्रदर्शिता। एतदवलोक्य स्वप्राङ्गणवर्तिनिम्बवृक्षोपरि आत्मनः प्रकाशं निधाय तमेव प्रकाशमर्करूपेण निदर्श्य दिनमिदमस्तीति भुज्यतामिति यतिं प्रार्थयामास। कृतभोजनं तं यतिं सप्रश्रयं विसर्जयाञ्चकार। तत आरभ्य आचार्यस्यास्य निम्बार्केति अन्वर्थं नाम ख्यातम्। ऐतरेयारण्यकेऽपि "वाचा हि नामधेयानि धीयन्ते"[३] इत्युपदिष्टम्।

निम्बार्केति नामकरणे एका अन्याऽपि लोकश्रुतिः केषाञ्चिन्मते ख्याता–क्षुत्पिपासार्ताः केचन यतयो दिवाभोजिनः सायङ्काले आचार्यस्याश्रममायाताः, तान् च भोजयितुकाम आचार्य आश्रमस्थनिम्बवृक्षोपरि आत्मनो प्रभामर्करूपेण प्रदर्शयामास, तदनु यतींश्च भोजयामास। तत एव निम्बार्केति नाम्ना प्रसिद्धिमवाप।

निम्बार्काचार्याः स्वजनुषा कदा भारतभुवमलञ्चक्रुरित्यत्र विवदन्ति सूरयः, तथापि निम्बार्कपरम्परानुवर्तिनामाचार्याणामिदमस्ति मतम्–यत् श्रीकृष्णचन्द्रो दुष्कृतान् प्रणाश्य धर्मसंस्थापनं कृत्वा दिवङ्गन्तुमियेष तदा सन्मार्गप्रवाहाय स्वान्तर्धानोत्तरमज्ञानान्धकारविनाशाय स्वकीयं दिव्यमायुधं चक्रराजं सुदर्शनमाज्ञापयामास। तदाज्ञामङ्गीकृत्य सुदर्शनो

---

१. श्रीमद्भा.म.पु. माहात्म्य. २/७५; २. बृहद्देवता १/२३।
३. ऐतरेयारण्यके-१/३/३।

युधिष्ठिरराज्यस्य षष्ठे वत्सरे निम्बार्करूपेणावतीर्णः। आचार्येण हेमाद्रिणापि चतुर्वर्गचिन्तामणावित्थं निर्दिष्टम्- vol 2 Part 1 pg-783

**उदयव्यापिनी ग्राह्या कुले तिथिरुपोषणे।**
**निम्बार्को भगवान् येषां वाञ्छितार्थप्रदायकः।।**

इति धर्मशास्त्रवचनानुसारं वेदव्यासवचनानुसारमपि निम्बार्काचार्यस्याविर्भावः युधिष्ठिरराज्यस्योत्तरमेवेति निश्चप्रचम्। तद्यथा-

**सुदर्शन महाबाहो! कोटिसूर्यसमप्रभ!।**
**अज्ञानतिमिरान्धानां विष्णोर्मार्गं प्रदर्शय।।**

परञ्च ये आधुनिका विद्वांसः केवलतर्कावलम्बिनस्तेषां सरणिस्तु भिन्नैव। तैरनुमीयते यद् रामानुजमध्वयोर्मध्यवर्तिनि विक्रमस्य द्वादशशतकान्तिमे भागे निम्बार्काचार्यः प्रादुरभूत्।

श्रीबादरायणोपदिष्टानां ब्रह्मसूत्राणां व्याख्यानं वेदान्तपारिजातसौरभाख्ये लघुकाये ग्रन्थे श्रीनिम्बार्काचार्यः संक्षिप्तरूपेण कृतवान्। एतदतिरिक्तं दशश्लोकी प्रपन्नकल्पवल्ली श्रीकृष्णस्तवराजग्रन्थास्तु सम्प्राप्ता मुद्रापिताश्च।

**श्रीनिवासाचार्यः**—श्रीनिम्बार्काचार्यस्य प्रमुखशिष्येषु श्रीनिवासाचार्योऽन्यतमः। निम्बार्कभगवत्पादकृतव्याख्यानस्य तात्पर्यं जिग्राहिषया वेदान्तकौस्तुभाख्यो ग्रन्थः पूज्यपाद-श्रीनिवासाचार्यचरणैः तच्छिष्यैः सम्प्रदायप्रसिद्ध्यनुसारिणी भगवद्विष्णुकरस्थ-शङ्खावतारभूतैः प्राणायीति नास्त्यतिरोहितं निम्बार्कसम्प्रदायपरम्परानुशीलनतत्पराणां विदुषाम्।

श्रीनिम्बार्काचार्यस्यापरः शिष्य औदुम्बराचार्यः, तेन व्रतपञ्चकौदुम्बरसंहिताऽपि रचितेति परम्परातो ज्ञायते। एतेषामन्तिमः शिष्यो गौरमुखाचार्यः-तेन 'निम्बार्कसहस्रनाम', ग्रन्थो विरचितः।

**श्रीपुरुषोत्तमाचार्यः**—निम्बार्कसम्प्रदायपरम्परायां सप्तमः पुरुषोत्तमाचार्यः। तेन विरचिता 'वेदान्तरत्नमञ्जूषा' (दशश्लोक्या बृहद्भाष्यरूपा) उपलभ्यते, सा विविधाभिष्टीकाभिः सह मुद्रापिता च।

**केशवकाश्मीरिभट्टः**—प्रस्थानत्रय्या भाष्यकारो जगद्विजेता केशवकाश्मीरिभट्टो निम्बार्कसम्प्रदायस्य त्रयस्त्रिंशपीठिकायामारूढो वर्ण्यते। भट्टेनानेन दुष्टयवनशासने अलाउद्दीनखिलजीकाले मथुरानगर्यां यवनतान्त्रिकान् पराजित्य हिन्दुधर्मस्य संरक्षणं कृतम्। एतेनाचार्येण गीतायास्तत्त्वप्रकाशिकाटीका, ब्रह्मसूत्राणामुपरि वेदान्तकौस्तुभप्रभा-टीका, उपनिषदां च तत्त्वप्रकाशिकाटीका विहिता। श्रीमद्भागवतस्यापि विशदा टीका कृता। कालक्रमाद् दुर्दैवाच्च 'मुण्डकव्याख्यानम्', भागवते च वेदस्तुतिव्याख्यान-

मिदानीमुपलभ्यते। 'क्रमदीपिका'-नामकस्तन्त्रग्रन्थोऽपि एतेन विरचितः, यत्र गोपालमन्त्रादीनां विविधाः प्रयोगा निदर्शिताः।

**श्रीपुरुषोत्तमप्रसादः**—सप्तदशशताब्द्यां चानेके विद्वांसो जातास्तत्र पुरुषोत्तमप्रसादादयो विश्रुताः। एभिः श्रुत्यन्तसुरद्रुमः, श्रुत्यन्तकल्पवल्ली, वेदान्तरत्नमाला, अर्चिरादिपद्धतिरित्यादयो ग्रन्था विरचिताः।

**माधवमुकुन्दः**—अष्टादशशताब्द्यां च श्रीमाधवमुकुन्दादिसूरिभिः परपक्षगिरिवज्रादयोऽतिगभीराशया दार्शनिका निबन्धा निबद्धाः।

**श्रीअनन्तरामः**—प्रकृतग्रन्थस्य लेखकानामनन्तरामाणामैतिह्यविषयेऽल्पज्ञानं ग्रन्थस्यास्य समाप्तिसूचकशब्दैः प्राप्यमाणं यथापरम्परं लेखकमहोदयानां ज्ञानागाधतां शास्त्रपाण्डित्यप्रौढिं च सूचयदपि अभिजनजनकादिविषये अल्पमपि स्रोतोऽददत् नैतिह्यविषये लेखनीं व्यापारयितुं समुत्साहयति, तथापि निम्बार्कसम्प्रदायस्य ब्रह्मणः पुत्रात् सनत्कुमारादारब्धत्वं सूचयति। अस्य च सम्प्रदायस्य सनत्कुमारारब्धस्य देवर्षिर्नारदो द्वितीयाचार्यरूपेणोल्लिख्यते। नारदानन्तरं कालभूयस्त्वात् नष्टप्रायस्यास्य सम्प्रदायस्य श्रीभगवन्निम्बार्काचार्यः सम्प्रदायप्रवर्तकाचार्यरूपेणात्र उल्लिखितः। अनन्तरामशास्त्रिणश्च निम्बार्काचार्यपरम्परामन्वभूषयन् इत्यप्यत्र वर्ण्यते। किन्तु निम्बार्काचार्यादनन्तरं व्यवधानभूयस्त्वेऽल्पत्वे व्यवधानराहित्ये वा इमे सम्प्रदायपरम्परामणिरिव उदिता इत्यत्र नास्ति पुष्टं प्रमाणम्। एते च स्वाभाविकभेदाभेदसमर्थनकुशला निखिलशास्त्रपारा— वारीणाः सर्वशास्त्रेषु प्रविश्य तेषां हार्दं सङ्गृह्य पूर्वपक्षोपोद्वलनपूर्वकं तेषां खण्डनं विधाय स्वाभाविकभेदाभेदं समर्थितवन्त इति ग्रन्थरत्नस्यास्य सम्यक्परिशीलनेन ज्ञातो भवति। श्रीमदनन्तरामेण सम्पूर्णत्रय्यन्तार्थजिग्राहिषया बालानामनायासेन बोधाय वेदान्ततत्त्वबोधाख्यो ग्रन्थो विरचितः। ग्रन्थेऽस्मिन् सर्वतन्त्रस्वतन्त्रेण व्याकरणादितर्कोभयमीमांसादिशास्त्रपारावारीणेन श्रीमाधवमुकुन्देन जगद्विजयिश्रीकेशवकाश्मीरिभट्टेन च परपक्षगिरिवज्राख्ये बादरायणसूत्रवृत्तिवेदान्तकौस्तुभप्रभायाञ्च प्रतिपादिता विषया एवोपनिबद्धास्सन्ति।

वेदान्ततत्त्वबोधाख्यग्रन्थस्य बालबोधिनीटीकाकर्त्रा अमोलकरामशास्त्रिणा स्वभूमिकायां ग्रन्थकर्तुरनन्तरामस्याभिजनविषयको विचार इत्थमुपवर्णितः—

"ग्रन्थस्यास्य रचयिता कदेमं भुवोभागमलञ्चकारेति वयं न जानीमः। परमविरक्तशिरोमणिसकलशास्त्रपारावारीणहरिभक्तिपरायण-पूज्यपादस्वभूरामदेवाचार्य्यशिष्यपरम्परानुगतश्चायं सहारणपुरजिलान्तर्गतजगाधरीपत्तनाख्ये तेषां निवासस्थानञ्चेति तु प्रायो जनानां प्रवादश्श्रूयते।"

**अमोलकरामशास्त्री**—विंशतिशताब्द्यां सर्वसाधनसम्पन्नाः सर्वशास्त्रविशारदा-

स्तपस्विनो विद्वांसः श्रीअमोलकरामशास्त्रिणोऽभवन्। अनेन वेदान्ततत्त्वबोधग्रन्थस्य बालबोधिन्याख्यटीका व्यरचि। टीकाकारा अमोलकरामशास्त्रिणो भगवदवतार-श्रीसनन्दनादिप्रवर्तितेऽस्मिन् सम्प्रदाये रसनिस्यन्दं प्रवाहयतो निखिलरसिकचक्रचूडामणेः श्रीस्वामिहरिदासपदाश्रितस्य श्रीस्वामिनीशरणस्य गुरोः सेवनेनावाप्तसन्मतयः, अवाप्तरसिकसम्प्रदायहार्दाश्चासन् इति टीकाया अन्ते उट्टङ्कितैः कतिपयैर्वाक्यैः ज्ञायते। अन्वर्थनामान इमे अमोलकरामशास्त्रिणोऽनया टीकया ग्रन्थस्यास्यामूल्यतां गौरवञ्चानल्पैः शब्दैः प्रकटीचक्रुरिति नास्त्यविदितं स्वाध्यायशीलानाम्।

अमोलकरामशास्त्री स्वजनुषा कुरुक्षेत्रान्तर्गतपुण्डरीकाभिधाने ग्रामे जनिं लेभे। अस्य तातचरणा गौडवंशावतंसीभूताः श्रीशालिग्रामोपाध्यायाः श्रीवृन्दावने वसतिं चक्रुः। अमोलकरामशास्त्रिणो नैकेषां विषयाणां विद्वांस आसन्, प्रत्युत तर्कादिशास्त्राणां तर्कतीर्थतर्करत्नतर्कवागीशाद्यनेकैरुपाधिभिर्विभूषिताः। तत्कालीनैर्नरेशैः सम्मानिता-श्चाप्यभवन्, तेषु उदयपुराधीशो भारतसद्धर्मसंरक्षको भूपालसिंहः प्रामुख्येन परिगण्यते लब्धेतिवृत्ततो ज्ञायते।

इत्थमारम्भतोऽद्यावधि उत्तरोत्तरं प्रवाहरूपेण निम्बार्कदर्शनस्य विकासो नवनवोन्मेषायितो बहुषु ग्रन्थेषु विलीनेष्वपि धारावाहिनीयममला भेदाभेदसिद्धान्तसरस्वती प्रवहति।

अयं निम्बार्कसम्प्रदायो वैष्णवमतस्य सनकसम्प्रदाय इत्युच्यते। भारतीय-दर्शनपरम्परायां भेदाभेदवादोऽतिप्राचीनो वर्तते। ब्रह्मसूत्रकर्तुर्बादरायणात् प्रागपि आचार्य 'औडुलोमिः' आश्मरथ्यश्च मतमिदं पोषयामासतुः। श्रीशङ्कराचार्यात् प्रागपि 'आचार्यभर्तृप्रपञ्चः' मतमिदं प्रपञ्चितवान्। शङ्कराचार्यात्पश्चाद्भाविष्वाचार्येष्वाचार्यभास्करो यादवश्च भेदाभेदवादित्वेन प्रसिद्धिङ्गतौ। निम्बार्काचार्य एतेषामाचार्याणां मतानि पुनरुज्जीवयामास। यतः शाङ्करीं वाग्झरीं प्राप्य एतेषां मतानि विलोपं प्राप्तान्यासन्।

श्रीनिम्बार्काचार्यो राधाकृष्णयुगलस्य माधुर्योपासनं दार्शनिकसम्प्रदायरूपेण प्रतिष्ठापयितुमिदम्प्रथमतया वैष्णवाचार्येषु कृतप्रयासो दृश्यते। तैः 'पराश्रीः' इति नाम्ना पराह्लादिनी शक्तिरिति रूपेण च श्रीराधायाः श्रीकृष्णस्य वामाङ्गे प्रतिष्ठापनं विहितम्। प्रेम्णस्त्यागस्य च चरमोत्कर्षो गोपीभावे दृश्यते। यतो गोप्योऽत्यन्तज्ञानिन उद्धवस्यापि प्रेमपथप्रदर्शकत्वेन प्रसिद्धाः। श्रूयते च भागवते गोपीनां वाङ्माधुरीं श्रावं श्रावम् उद्धव आत्मनि न्यूनतामनुभवन्—

**आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्।**
**या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्[१]॥**

---

१. श्रीमद्भागवत-म.पु. - १०/४७/६१।

इत्यादिकं मुक्तस्वरेण उवाच। गोपीभावस्य पराकाष्ठा श्रीराधायामस्ति। अत एव रसिकाचार्याः श्रीराधां परमानन्दस्वरूपिणीं वृन्दावनेश्वरीं रासेश्वरीं रसिकेश्वरीं मन्यते। वृषभानुजा श्रीराधा श्रीकृष्णस्य वामाङ्गे सानन्दं विराजमाना सखीसहस्रसेविता सर्वकामानां पूरयित्री इति निम्बार्काचार्यस्य भावो दशश्लोक्याम्। तथा चोक्तम्–

**अङ्गे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम्।**
**सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम्**[१]॥

श्रीराधया स्वाराधनया अनन्यप्रेम्णा च दुराराध्योऽपि श्रीकृष्ण वशीकृत इति वर्तते प्रसिद्धिः।

निम्बार्काचार्या रामानुजसम्प्रदायवत् चिदचिदीश्वरान् तत्त्वत्रयरूपेण स्वीकुर्वन्ति। **चित्पदवाच्यो** जीवो ज्ञानस्वरूपो ज्ञानाश्रयश्च वर्तते। शुद्धचैतन्यं जीवस्य स्वरूपं वर्तते। किन्तु ज्ञातृस्वरूपतात्मको जीवो ज्ञानाश्रयोऽपि वर्तते। ज्ञानाश्रयतां विना ज्ञातृत्वस्यानुपपत्तेः। ज्ञानं स्वरूपभूतं धर्मभूतञ्चोभयरूपं वर्तते। स्वरूपभूतं ज्ञानं द्रव्यरूपं वर्तते। धर्मभूतं ज्ञानं गुणात्मकं वर्तते। अनयोश्च द्वयोर्धर्मधर्मिभावो वर्तते। अयं धर्मधर्मिभावसम्बन्धो भेदाभेदरूपो वर्तते। ज्ञानाकारतया उभयोरभिन्नत्वं वर्तते। धर्मधर्मिभावेन च द्वयोर्भिन्नताऽपि वर्तते। यथा सूर्य एकस्मिन्नेव काले प्रकाशाश्रयः प्रकाशमयश्च विद्यते। जीवो ज्ञाता कर्ता भोक्ता च वर्तते। जीवो नित्यश्चेतनो द्रव्यस्वरूपोऽणुपरिमाणो वर्तते। संख्यादृष्ट्या च जीवानामनेकत्वं वर्तते। जीवो नित्यः सन्नपि सर्वथा ईश्वराश्रितो वर्तते। ईश्वरश्चास्य नियामको वर्तते। अविद्यां कर्माणि च करणभूतानि स्वीकृत्य जीवः शरीरयुक्तः सन् जन्ममरणचक्रे संसरति। संसारदशायां जीव ईश्वराधीनो भवति। ईश्वरप्रसादश्च निश्चलया भक्त्या प्राप्यते। जीव ईश्वरस्यांशो वर्तते। जीवस्यांशत्वं नाम न अवयवत्वमङ्गत्वं वा, किन्तु जीव ईश्वरस्य शक्तिरूपः स्वीक्रियते। अत एवोक्तम्–अंशो हि शक्तिरूपो ग्राह्यः, ईश्वरः सर्वशक्तिमान् वर्तते जीवश्च शक्तिरूपः।

**अचित्–**

**अचितः** रूपत्रयं स्वीक्रियते– (१) अप्राकृतरूपम्–येन दिव्यलोकानां दिव्यशरीराणां निर्मितिर्भवति। एतस्य शुद्धिसत्त्वरूपता नित्यविभूतितुल्यता च स्वीक्रियते। (२) प्राकृतस्वरूपम्–महत्तत्त्वादारभ्य पञ्चभूतानि यावत् त्रिगुणात्मकप्रकृतेरुत्पन्नं जगत् प्राकृतम् उच्यते। (३) कालः–जगदखिलपरिणामजनकोऽखण्डोऽचेतनपदार्थः कालः।

**ईश्वरः**–निम्बार्कदर्शने ईश्वरः सगुणः स्वीक्रियते। स च परब्रह्म अविद्यादिदोषैर-परामृष्टः। ज्ञानानन्दादिसमस्तकल्याणगुणाकरो वर्तते। स परमेश्वरः चतुर्भिर्व्यूहै-रभिव्यज्यमानोऽङ्गी वर्तते। अयं च परमवरेण्यो नारायणहरिकृष्णादिशब्दवाच्यः, यस्यानुग्रहेण

१. दशश्लोकी-५।

जीवाः स्वरूपज्ञानं लभन्ते । अस्य समस्तचिदचिद्विशिष्टस्य विश्वस्य अन्तर्बहिश्च व्याप्य भगवान् नारायणः स्थितः । अयमीश्वरो विश्वस्य निमित्तकारणमुपादानकारणञ्च वर्तते । अयं कर्मणां स्वामित्वेन जीवानाञ्च नियन्तृत्वेन सृष्टेर्निमित्तकारणं भवति, स्वेच्छया च जगत् सृजति, येन जीवः स्वकर्मफलानि उपभोक्तुं शक्नुयात् । स सृष्टेः उपादानकारणमपि, यतः सृष्टिरीश्वरस्य चिदचिद्शक्त्योरभिव्यक्तिर्वर्तते । इयं च अभिव्यक्तिः चिदचिद्शक्त्योः तात्त्विकपरिणामभूता वर्तते । ईश्वरचिदचिद्रूपविश्वयोः स्वाभाविकभेदाभेदसम्बन्धो वर्तते । यदि विश्वस्य ईश्वरेण सर्वथा अभिन्नता स्यात् तर्हि ईश्वरे विश्वस्य अज्ञानरूपताया दुःखरूपतायाश्च स्थितिरपरिहार्या स्यात् । इमान् दोषान् परिहर्तुं यदि सर्वथा भिन्नता स्वीक्रियेत तर्हि ईश्वरस्य सत्तायाः परिच्छिन्नता स्यात् । विश्वञ्च ईश्वरेण नियाम्यं न स्यात् । अतो विश्वेश्वरयोरुभयोर्भेदाभेदः स्वीक्रियते । स्वतन्त्रसत्तादेरभावात् चिदचितोः ईश्वराभिन्नत्वं नास्ति । परतन्त्रसत्तायाश्च सत्त्वात् चिदचितोरीश्वराभिन्नत्वं वर्तते, यत इमे चिदचिती ईश्वराधीने नियाम्ये च वर्तेते । ईश्वरः स्वतन्त्रो नियन्ता वर्तते । जीवेश्वरयोः स्वाभाविको भेदाभेदसम्बन्धो वर्तते । मुक्तावस्थायां जीव आनन्दानुभवे भगवद्भावापन्नः सन् भगवतोऽभिन्नो भवति, किन्तु स्वीये अणुरूपे स्थितत्वाद् ईश्वराद् नियम्यत्वाच्च स भिन्नो वर्तते । तत्त्वमसीति महावाक्ये तत्पदं स्वतन्त्रस्य व्यापकस्य ब्रह्मणो वाचकम्, त्वं पदं नियम्यस्य जीवस्य वाचकत्वेन स्थितम् । 'असि' इति पदं तात्पर्यतस्तयोर्भेदाभेदं द्योतयति । ईश्वरजीवौ च सूर्यप्रकाशाविव अग्निविस्फुलिङ्गाविव परस्परं भिन्नाभिन्नौ वर्तेते ।

**निम्बार्काचार्याः**—रामानुजमते स्वीकृतान् चिदचिदीश्वरान् तत्त्वत्रयरूपेण स्वीकुर्वन्तोऽपि तत्त्वत्रयविषये पृथग् विशिष्टां दृष्टिं दधति । रामानुजाचार्यः चिदचिच्छरीरकं ब्रह्म इति वदन् चिदचितोरीश्वरस्य शरीरत्वमङ्गीकरोति । निम्बार्काचार्यस्तु शरीरदोषाणां शरीरिणि ईश्वरे संक्रान्तिसंभावनया चिदचिद्ब्रह्मणोः शरीरशरीरिभावं नाङ्गीकरोति । रामानुजमते चिदचित्शरीरकं चिदचिद्विशिष्टं वा ब्रह्म इति उच्यते । तत्र उपपत्ति-विषयिणी काचन शङ्का उदेति । स्थूलचिदचिद्विशिष्टं सूक्ष्मचिदचिद्विशिष्टं ब्रह्म इति तैरुच्यते । अनयोः शब्दयोः स्थूलत्वं सूक्ष्मत्वं च चिति विशेषणत्वेनान्वेतुं नार्हतः । तयोरन्वये चिति उपचयापचययोः स्वीकरणीयत्वे प्राप्ते विकारित्वापत्तेः । यदि सूक्ष्मत्व स्थूलत्वयोः अचिति अन्वयस्तदा जडवर्गस्य विकारित्वेन तत्र उपचयापचययोः सम्भवेऽपि स्थूलचिदचित् इत्यत्र सूक्ष्मचिदचित् इत्यत्र च चित्शब्देन व्यवहिते अचिति स्थूलत्वसूक्ष्मत्वयोरन्वयानुपपत्तिः । तथा हि स्थूलचिदचिद्विशिष्ट इति सूक्ष्मचिदचिद्विशिष्ट इति शब्दद्वयं समासनिष्पन्नं वर्तते । समासे च एकत्र स्थूलशब्दस्य चित्शब्दस्य अचित्शब्दस्य च त्रयाणां घटकतया प्रवेशः, अपरत्र च सूक्ष्मचिदचितां घटकतया प्रवेशः । समासार्थं च प्रयतमानेन पूर्वं द्वयोः समासः कर्त्तव्यः । चित् च अचित् च

चिदचितीत्येवं चिदचितोर्द्वन्द्वसमासे कृते पश्चात् स्थूलशब्देन सूक्ष्मशब्देन वा सह समासो भवितुं नार्हति स्थूलत्वसूक्ष्मत्वयो: चिति अन्वयासम्भवात् । एवं च चिदचित्समूहे स्थूलत्वसूक्ष्मत्वयोरन्वयाभावान्न स्थूलसूक्ष्मशब्दयो: चिदचिच्छब्देन समस्तेन सह समासो भवितुमर्हति ।

स्थूलशब्दस्य सूक्ष्मशब्दस्य च चित्शब्देन पूर्वं समास: कर्तुं न शक्यते । तयो: चिति अन्वयासम्भवात् । यदि स्थूलसूक्ष्मशब्दयो: पूर्वम् अचित्शब्देन समास: क्रियते पश्चाच्च चित्शब्देन समास: क्रियते तदा स्थूलाचिदचिद्विशिष्टं ब्रह्म सूक्ष्माचिदचिद्विशिष्टं ब्रह्म इति वक्तव्यम् । न तु स्थूलचिदचिद्विशिष्टं सूक्ष्मचिदचिद्विशिष्टं ब्रह्म इति । अत: स्थूलत्वसूक्ष्मत्वयो: सृष्टिप्रलयकालयोर्बोधकत्वं स्वीकृत्य समाधानार्थं यतनीयम् । अस्यां च विचारसरणौ–"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता:। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।" इति गीतावचनमवलम्बनत्वेन ग्रहीतुं शक्यमिति दिङ्मात्रेण प्रस्तुत्य विरम्यते ।

निम्बार्काचार्यस्तु शरीरशरीरिभावं नाङ्गीकुर्वन्ति । शक्तेरभिव्यक्तिरूपता चिदचिद्रूपस्य विश्वस्य स्वीक्रियते तै: । सृष्टिकाले चिदचितो: शक्तिभूतयोरभिव्यक्ति: प्रलयकाले च तयो: शक्तिरूपेण सूक्ष्मत्वेन अवस्थानम् । चिदचितो: परमात्मन: शरीरत्वे अङ्गीक्रियमाणे शीर्यत इति शरीरमिति व्युत्पत्त्या शीर्यमाणस्य शरीरत्वेन उभयो: चिदचितो: शीर्यमाणता प्राप्यते । नाशश्च चिद्रूपस्य जीवस्य भवितुं नार्हति । अतो रामानुजमतेऽचिदंशे शीर्यमाणता वक्तव्या । चिदंशे तु अचिदंशस्य शीर्यमाणस्य सन्निधिमात्रेण शीर्यमाणत्वस्य अवास्तवो व्यवहारो वक्तव्य: । निम्बार्कमते चिदचिदो: परमेश्वरस्य शक्तिरूपयो: सृष्टिकाले आविर्भावकं प्रलयकाले च तिरोधायकं कारणं वक्तव्यम् । तच्च कारणं प्राणिनामाविर्भावकं सृष्टिप्रलययो: सर्वदार्शनिकै: स्वीक्रियमाणमदृष्टरूपमत्रापि वक्तुं शक्यम् । रामानुजमते शेषशेषिभाव: स्वीक्रियते, चिदचिद्रूपं विश्वं शेषभूतं परमेश्वरश्च शेषिभूत: । अनेन शेषशेषिभावेन चित: अचित: ईश्वरस्य च त्रयाणां सार्वकालिकी सत्ता सिद्धा भवति । यतो विशेषणम् (शेष:) तदेव भवति यत् कार्यान्वपि व्यावर्तकं वर्तमानञ्च भवति । अनेन चिदचितोर्विशेषणभूतयो: सर्वदा वर्तमानता आयाति ।

निम्बार्कमते ईश्वरस्य चिदचिद्रूपस्य विश्वस्य च स्वाभाविको भेदाभेदसम्बन्ध: स्वीक्रियते । अतस्त्रयाणां सार्वकालिकी सत्ता आयाति । सृष्टिकाले चिदचितोरभिव्यक्ति-स्वरूपेणावस्थानं प्रलयकाले च ईश्वरशक्तिरूपेण परमेश्वरेऽवस्थानमिति विशेषो वर्तते ।

वेदान्ततत्त्वबोधनाम्ना प्रथितोऽयं ग्रन्थो न केवलं वेदान्तानां तत्त्वं बोधयति अपि तूपनिषद्वाक्यानामर्थनिर्धारणेन स्वरूपव्याक्रियैव पराक्रिया इति न्यायेन सर्वान् प्रतिपक्षसिद्धान्तान् खण्डयित्वा स्वसिद्धान्तं समर्थयति ।

वेदान्तसारे उल्लिखितं वर्तते—वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि च शारीरकसूत्रादीनि। अतो वेदान्तशब्देन उपनिषद्वाक्यानां ग्रहणं विधाय तेषां चार्थमुपक्रमादिन्यायैर्निर्णीय गीतावाक्यानाञ्च तत्र प्रमाणरूपेणोल्लेखनं कृत्वा शारीरकसूत्राणि च उपनिषदर्थसंग्राहकानि प्रमाणत्वेनोपन्यस्य स्वसिद्धान्ता अस्मिन् ग्रन्थे समर्थिता:।

ग्रन्थस्यारम्भे सार्वज्ञ्याद्यनन्तगुणाब्धिरनन्तशक्तिर्जगज्जन्माद्यभिन्ननिमित्तोपादानकारणं चेतनाचेतनस्वाभाविकभेदाभेदसम्बन्धाश्रय: परब्रह्मपरमात्मापुरुषोत्तमादिशब्दाभिधेयो भगवान् श्रीकृष्ण एव वेदान्ततत्त्वमिति निर्णीतम्। जगत्कार्योत्पत्तौ सर्वेश्वरस्य निमित्तकारणत्वमुपादानकारणत्वं च वर्णितम्। चेतनाचेतनब्रह्मेति तत्त्वत्रयं श्रुतिमुखेन निर्धार्य मायावादस्य खण्डनं विहितम्। अस्मिन्नेव क्रमे सत्यज्ञानमिति श्रुत्या ब्रह्म-शब्दार्थो निरूपित:। अग्रे च उल्लेखक्रमेण इमे विषया: प्रपञ्चिता:। प्रत्यगात्मस्वरूपस्य निरूपणम् अचित्तत्त्वस्य निरूपणं चिदचिदीश्वराणां त्रयाणां स्वरूपत: स्वभावतो वैलक्षण्यम् अत्र श्रुतिस्मृतिमुखेन यौक्तिकं समर्थनं चेतनाचेतनवस्तुस्वाभाविकभेदाभेद-सम्बन्धाश्रय इति श्रुतिप्रमाणेन समर्थितम्। चेतनाचेतनयोर्ब्रह्मणा सह स्वाभाविक-भेदाभेद इति श्रुतिस्मृतिसूत्रप्रमाणैर्निरूपितम्।

अंशो नानाव्यपदेशादित्यादिसूत्राणां समन्वयप्रकार:, अत्यन्तभेदस्य अत्यन्ताभेदस्य च खण्डनम्, भेदाभेदप्रतिपादकवचनानां स्वार्थे प्रामाण्यस्थापनम्, ब्रह्मण: केवलनिमित्तकार-णतामपाकृत्य अभिन्ननिमित्तोपादानकारणताया: श्रुतिस्मृतिसूत्रादिभि: समर्थनम्, केवलभेदवादस्य भङ्ग:, ब्रह्मणो निर्विशेषत्वस्य प्रत्यक्षादिप्रमाणचतुष्टयागोचरता, निर्विशेषाद्वितीयवादे बन्धमोक्षव्यवस्थानुपपत्ति:, निर्विशेषवादे ब्रह्मणि धर्माणामभावेन ईक्षणपूर्वकसृष्ट्यनुपपत्तिं प्रदर्श्य श्रुतिसूत्रादिप्रमाणै: सविशेषत्वसमर्थनम्, चिदचिदीश्व-रात्मकस्य तत्त्वत्रयस्य स्वरूपत: स्वभावतो परस्परवैक्षलण्यं समर्थ्य द्वैतस्य व्यावहारिकत्वस्य, अध्यासस्य प्रामाणिकत्वस्य उपादानपूर्वकं तत्र समाधानम्, बन्धस्य अध्यस्तत्वाद् ज्ञानेन निवृत्तिरिति पक्षस्य निरास:, अध्यासस्य खण्डनम्, अधिष्ठानप्रयोजककल्पितधर्मस्य निरसनम्, अज्ञानावरणभंगस्य स्थापनम्, चिन्मात्रस्य अज्ञानविषयत्वभङ्ग:, निर्विशेषे ब्रह्मणि अंशांशिभावकल्पनाखण्डनम्, भावरूपाज्ञान-खण्डनम्, अहम् इति प्रतीते: अज्ञाने प्रमाणनिरसनम्, द्वैताद्वैतसिद्धान्ते परमात्मभिन्नत्वस्य तदभिन्नत्वस्य च वर्णनम्, शङ्कराचार्याणां तमप्रकाशयोरिव अत्यन्तविरुद्धस्वभावयो: चिज्जडयो: तद्धर्माणां च इतरेतरानुपपत्तिरिति भाष्यस्य परस्परविरोधेन खण्डनम्, आत्मनो अस्मत्प्रत्ययगोचरस्य खण्डनम्, भ्रमसामग्रीविरहादपि अध्यासस्य निरसनम्, पुरोऽवस्थित एव विषये विषयान्तरमध्यसनीयमिति नियमस्य निरसनम्, पूर्वाध्यासस्य उत्तराध्यासं प्रति संस्कारद्वारा कारणत्वमिति पक्षस्य निरसनम्, असत: प्रतीतिविषयत्वस्य निरसनम्, असत: कारणत्वस्य निरसनम्, अध्याससद्भावे प्रत्यक्षानुमानादिप्रमाणानां

खण्डनम्, पराभिमतप्रमान्तरत्वलक्षणखण्डनम्, द्रष्टृत्वकर्तृत्वधर्माणां यथार्थत्वसमर्थनम्, वेदान्तानामकर्तृब्रह्मस्वरूपोपदेशपरत्वमिति पक्षस्य निरसनम्, आत्मैकत्वविद्याप्रतिपत्त्या अध्यासस्य निवृत्तिरिति पक्षस्य निरास:, जीवन्मुक्ते: खण्डनम्, सदेव सौम्येदमग्र आसीदिति श्रुत्यर्थप्रदर्शनम्, श्रुतिस्मृतिमुखेन सर्वस्य वस्तुजातस्य ब्रह्मात्मकत्वसमर्थनम्, सत्ताद्वैविध्यवर्णनम्, श्रुत्यादिभि: स्वतन्त्रसत्त्वपरतन्त्रसत्त्वयोर्लक्षणनिर्वचनम् ।

**अध्यासखण्डनम्:**—ग्रन्थस्यास्य महत्त्वं प्रकटयितुं लेखकस्य च ज्ञानगाम्भीर्यं परमतखण्डननैपुण्यं च प्रदर्शयितुं ब्रह्मसूत्रशाङ्करभाष्यस्य अध्यासोपक्रमे काश्चन पंक्ती: उल्लिख्य तासां खण्डनप्रकारो ग्रन्थोक्त: प्रदर्श्यते ।

"ननु तम:प्रकाशयोरिवात्यन्तविरुद्धस्वभावयोश्चिज्जडयोस्तद्धर्माणां चेतरेतरैक्यानुपपत्तिरुक्ता, इति सत्यम् । तथापि अत्यन्तविविक्तयोरपीतरेतराविवेकेनान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाऽध्यस्य मनुष्योऽहं ममेदमिति लोकव्यवहार: अनादिकालप्रवृत्त: । अतोऽध्यासो वर्णनीय: ।"

इति शाङ्करभाष्यं तस्य खण्डनम् अविवेकाश्रयाभावाद् इति शब्देन प्रथमत: प्रदर्श्यते । तत्र विकल्प एवं प्रदर्श्यते । को वा अविवेकाश्रयो जडो विषय: शुद्धात्मा वा तदन्यो वा इति । प्रथमस्य पक्षस्य निराकरणं तस्य अविवेकस्वरूपत्वादित्यनेन क्रियते । द्वितीयस्य पक्षस्य शुद्धात्मनोऽविवेकाश्रयत्वस्य निराकरणं अविवेकपर्यायाज्ञानाश्रयत्वस्य पूर्वमेव निरस्तत्वादित्यनेन क्रियते । अद्वैतमते शुद्धस्य ब्रह्मणो ज्ञानरूपस्य तद्विरोधि (ज्ञानविरोधि) अज्ञानाश्रयत्वं न सम्भवतीति एतस्याशय: । तृतीयपक्षस्य उभयान्यस्य अविवेकाश्रयत्वरूपस्य खण्डनमुभयान्यस्याध्यासकार्यत्वेन अध्यासस्य अथादि असिद्धेरिति पङ्क्त्या क्रियते । तत्र च अपरमपि दूषणं स्वोक्तिविरोधरूपं प्रदर्श्यते । अत्यन्तविविक्तयोरित्युक्तत्वात् पुनरितरेतराविवेकेन इति स्वोक्तिविरोधाच्च नहि सूर्यान्धकारयोर्दीपघटयोर्वा अविवेक: कस्यापि जायते । सर्वानुभवविरुद्धत्वाद् इति हेतुस्तत्र दत्त: ।

अग्रे च अध्यासखण्डनाय तस्यानादित्वं खण्डितम् । अध्यासे नानादि: पूर्वसमाहितसंस्कारजन्यत्वात् शुक्तिकारजतवदित्यनुमानं तत्र दत्तम् । भ्रमसामग्रीविरहादपि अध्यासस्य निरास: कृत: । भ्रमसामग्रीणां निरासश्च एवमुक्त: । भ्रममात्रे सावयवत्वम् इन्द्रियसंयुक्ततया ग्राह्यत्वं सादृश्यं पूर्वप्रमाजन्यसंस्कारो दोषश्चेति अपेक्षितं भवति । इमानि चापेक्षितानि कारणानि कुत्र भवन्तीत्येतस्मिन् विषये उच्यते । "तत्र आद्यं त्रयमधिष्ठाने दोषसंस्कारौ ज्ञातृपुरुषनिष्ठौ यथेदं रजतमित्यत्रेन्द्रियसंयुक्ततया ग्राह्यत्वं सावयवत्वम्, परमार्थरजतमित्यत्रेन्द्रियं संयुक्ततया ग्राह्यत्वं सावयवत्वम्, परमार्थरजतसादृश्यं शुक्तौ प्रत्यक्षप्रमाणसिद्धम्, तत्संस्कारदोषौ च पुरुषनिष्ठौ न तथा दार्ष्टान्तिके निरवयव-

निर्गुणपरोक्षात्मनि गुणावयवसादृश्यादीनामयोगात्। केवलो निर्गुणश्च निष्कलं निरवद्यमित्यादिश्रुत्या गुणादीनामभाव उच्यते, नापि दोषसंस्कारौ सम्भवतः, तदाश्रयस्य ज्ञानान्तरस्याभावात्। अधिष्ठानमात्रस्यैव तदा सत्त्वात्। षड्विधतात्पर्यलिङ्गोपेततत्त्वमस्यादि-वाक्येन निर्विशेषाकर्तृब्रह्मबोधनस्य सम्भवो नास्तीत्यत्र निर्धर्मके ब्रह्मणि वाच्यत्वानभ्युप-गमस्यैव हेतुत्वमुक्तम्। तत्र च प्रमाणरूपेण वाक्यमात्रस्य किञ्चिद्धर्मावच्छिन्नवस्तु-बोधकत्वनियम उपन्यस्तः।

अध्यासस्य अनर्थहेतुत्वमपि निरस्तम्। अथ च विकल्पोऽध्यासोऽनर्थहेतुरस्ति न वेति रूपेण प्रदर्शितः। आद्यस्य खण्डनाय दोषादिसम्बन्धापत्त्या असङ्गत्वश्रुतिविरोधो हेतुत्वेनोपन्यस्तः। द्वितीयपक्षस्य निराकरणाय अनर्थहेतुत्वाभावात् तन्निवृत्त्यर्थं शास्त्रारम्भस्य वैयर्थ्यात् शास्त्रारम्भो व्यर्थः प्रयोजनाभावाद् दिवादीपवदित्यनुमानमपि उक्तम्।

एवं ग्रन्थकारः सरलया भाषया सन्देहानाधायकैः शब्दैरद्वैतमतस्य आधार-भूतामध्यासभित्तिं खण्डयित्वा स्वाभाविकभेदाभेदमतं प्रतिष्ठापयाञ्चकार। तेषां कौशलविषये दिङ्मात्रमिह प्रदर्शितम्। एतादृशानि खण्डनकौशलानि तु सर्वत्र ग्रन्थेऽस्मिन् दरीदृश्यन्ते। स्वपक्षमण्डनायापि सूक्ष्मा युक्तयस्तैः प्रदर्शिताः।

अतो ग्रन्थोऽयं निम्बार्कमतजिज्ञासूनां महते उपकाराय कल्पिष्यत इति दृढं विश्वसन् साम्बं भगवन्तं शिवमस्य प्रचाराय प्रसाराय च प्रार्थयमानो विरमामि।

**वाराणस्याम्**
गुरुपूर्णिमायाम्,
२०६२ तमे वैक्रमाब्दे

**जयप्रकाशनारायणत्रिपाठी**
उपाचार्यः, वेदान्तविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणिका

This

॥ श्रीराधासर्वेश्वरो जयति ॥

**श्री-श्री १०८ श्रीभगवन्निम्बार्काचार्यचरणानुगामि-**
**विद्वद्वरश्रीमदनन्तरामदेवविरचितो**

# वेदान्ततत्त्वबोधः

**श्रीअमोलकरामशास्त्रिनिर्मितया**

**बालबोधिनी-टीकया**

***समलङ्कृतः***

**यश्चिन्तितो हरति ध्वान्तमशेषमन्त-**
**बोधप्रदस्तरणिकोटिसमप्रभो वै ।**
**योऽज्ञानवादविभवां हि ददाह[1] काशीं**
**तं श्रीसुदर्शनमहं हृदि चिन्तयामि ।।१।।**

---

प्रारिप्सितस्य ग्रन्थस्याविघ्नपूर्वकसमाप्त्यर्थं स्मृतिशिष्टाचारसिद्धसमुचितेष्टप्रदभगवत्करस्थसुदर्शनचक्रावतारभगवन्निम्बार्काचार्यस्मरणरूपं मङ्गलमाचरति- **यश्चिन्तित इति** । तरणिः = भानुस्तेषां कोटिसङ्ख्याकस्तस्य समा तुल्या प्रभा यस्य स तथोक्तः । कोटिसूर्यतुल्यप्रभः । यः सुदर्शनचक्रावतारः श्रीनिम्बार्काचार्यः, अशेषं सर्वं ध्वान्तम्-निबिडान्धकारं हरति-नाशं करोति । वै = इति निश्चये । यः सुदर्शनः । अज्ञानवादरूपो विभवो यस्यां सा तथोक्तां । हि यतः । काशीं ददाह तं श्रीसुदर्शनं हृदि मनसि । अहं चिन्तयामि-स्मरामि ॥१॥

---

अभीप्सित ग्रन्थ के निर्विघ्न परिसमाप्त्यर्थ स्मृति शिष्टाचारानुरोध से समुचित इच्छा (फल-सुख) के प्रदाता भगवान् वासुदेव श्रीकृष्ण के कर कमल में स्थित सुदर्शनचक्र के अवतारभूत भगवन्निम्बार्काचार्य का स्मरणरूप मङ्गलाचरण ग्रन्थकार आचार्यचरणानुगामी विद्वद्वर श्री अनन्तराम करते हैं–

**व्याख्या–** इस मङ्गलश्लोक में प्रयुक्त 'यः' पद सुदर्शनचक्रावतार का वाचक है। करोड़ों सूर्य के सदृश कान्ति है जिसकी, ऐसे सुदर्शन चक्र के अवतारभूत भगवन्निम्बार्काचार्य के चिन्तनात्मक विज्ञानवाद के अनुशरण से सम्पूर्ण निविडान्धकार का नाश होता है, यतः जो सुदर्शनचक्र अज्ञानवादविभवा काशी को जलाया ऐसे श्री सुदर्शन को हृदय से मैं अनन्तराम स्मरण करता हूँ।

---

१. द्रष्टव्यम् - प्राक्कथन

**किं वेदान्ततत्त्वमिति प्रश्ने-उच्यते। सार्वज्ञ्याद्यनन्तकल्याणगुणाब्धिरनन्तशक्तिर्जगतो जन्माद्यभिन्ननिमित्तोपादानकारणं चेतनाचेतनवस्तुस्वाभाविकभेदाभेदसम्बन्धाश्रयः परमब्रह्मपरमात्मा पुरुषोत्तमादिशब्दाभिधेयः श्रीकृष्ण एवेति वेदान्तार्थः। तथा च शास्त्रम्। यः सर्वज्ञः सर्ववित्।१।१।९।**

यादृक् तत्त्वं वेदान्तैरुपदिष्टं तादृक् तत्त्वं तात्त्विकमिति समर्थयितुं जिज्ञास्यते– **किं वेदान्ततत्त्वमिति**। वेदान्तस्य तत्त्वं याथात्म्यम् आधारः कः। तथा च वेदान्तशास्त्रप्रतिपाद्यवस्तुयाथात्म्यंमजिज्ञासाविषयीभूतमित्यर्थः। निर्विशषचिन्मात्रं ब्रह्म वेदान्तप्रतिपाद्यं सविशेषं वेति शङ्कितुराशयः। सविशेषं ब्रह्म वेदान्तैरुपदिष्टमित्याशयेन समाधत्ते, **उच्यत इति**। श्रीकृष्णं विशिनष्टि–सार्वज्ञ्यादय अनन्ताः परिच्छेदशून्या ये कल्याणगुणा हेयप्रत्यनीकगुणास्तेषामब्धिः सागरः। अनन्ताः परिच्छेदशून्याः शक्तयो यस्मिन् स तथोक्तः। जगतो विविधविभक्तभोक्तृभोग्यसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयस्य तर्कागोचररचनस्यास्य प्रपञ्चस्य जन्म आदिर्यस्य सृष्टिस्थितिलयमोक्षस्य तस्याभिन्ननिमित्तोपादानकारणम्। न च पदार्थे पदार्थेनान्वयो न तु पदार्थैकदेश इति व्युत्पत्त्या समासनिविष्टजन्मपदार्थस्यैकदेशतया कथं तत्र जगत्पदार्थस्यान्वय इति वाच्यम्, सापेक्षातिरिक्तस्थल उक्तव्युत्पत्तेरभ्युपगन्तुं शक्यत्वात्तदुक्तं प्राचीनैः "प्रतियोगिपदादन्यद् यदन्यत्कारकादपीति" जन्मपदार्थस्य सापेक्षत्वेन तत्र जगतोऽन्वयः सम्भवत्येवेति भावः। चेतनाचेतनयोर्ब्रह्मणा सह को वा सम्बन्ध इति जिज्ञासायामाह–**चेतनेति**। ब्रह्मशब्दस्यान्यत्रापि प्रयोगात्तत्र व्यभिचारप्रसक्तिनिरासाय परेति विशेषणम्। प्रत्यगात्मन्यतिप्रसङ्गवारणाय द्वितीयपरपदम्। एतेन वेदान्तशास्त्रस्य विषयोऽभिहित इति ध्वनितम्। उक्तार्थेऽप्रामाण्यशङ्कानिरासाय श्रुतिकदम्बं निर्दिशति-**तथा चेति**। शास्त्रं शासनकर्तृत्वम्। सर्वेश्वरस्य सार्वज्ञ्यगुणप्रतिपादिकां श्रुतिं निर्वक्ति–**यः सर्वज्ञ इति** सामान्यतो विशेषतश्च सर्वविषयकज्ञानवानिति तदर्थो नातः पुनरुक्तदोषावकाशः। सार्वज्ञ्यादीत्यत्रादिपदग्राह्यान् सर्वशरण्यादिगुणान् शास्त्रमुखेन दर्शयति-**सर्वस्येति**। सर्वस्य

---

जैसा तत्त्व वेदान्तों से उपदिष्ट है वही तत्त्व ही तात्त्विक है, इसके समर्थन में तत्त्व की जिज्ञासा की जाती है– वेदान्त तत्त्व क्या है? इसका समाधान इस प्रकार किया जाता है। सार्वज्ञ्यादि अनन्त कल्याणगुणों के समुद्र, हेय गुणों से रहित कार्यानुकूल अनन्त शक्तिशाली, अचिन्त्य जगत् के लय के अभिन्ननिमित्तोपादानकारण, चेतन अचेतन वस्तुओं के स्वाभाविक-भेदाभेद सम्बन्ध के आश्रयभूत परब्रह्म परमात्मा पुरुषोत्तम आदि शब्दों से अभिधेय (वाच्य) श्रीकृष्ण ही वेदान्तों के प्रतिपाद्य तत्त्व हैं। इस सन्दर्भ में शास्त्र प्रमाण 'यः सर्वज्ञः सर्ववित्' 'सर्वस्य शरणं सुहृत्' इत्यादि भी उपलब्ध हैं। सर्वज्ञ सर्ववित् में विशेष अन्तर सामान्यज्ञानवान् को सर्वज्ञ एवं विशेष ज्ञानवान् को सर्ववित् कहते हैं।

**सर्वस्य शरणं सुहृत् स एवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः । परास्य शक्तिर्विविधैव श्रूयते**

---

प्राणिमात्रस्य । शरणम् । रक्षकम् । सुहृत् मित्रम् । अनन्तकल्याणगुणाब्धिरिति य उक्तः तं प्रमाणेन समर्थयति-**स एवाचिन्त्य इति**। स परमात्मा । अचिन्त्यः = चिन्तयितुमनर्हः, तर्कागोचर इति यावत् । तदुक्तम्–

**"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।**
**प्रकृतिभ्यः परं यत्तदचिन्त्यस्य लक्षणम्" ।।**

म.भा. भीष्मप. (५।१२)

अचिन्त्यशब्दार्थं विवृणोति । **पर इति** । प्रधानक्षेत्रज्ञाभ्यां परः । अत एव परमः सर्वोत्कृष्टो हरिः, आश्रितानां पापहारित्वात् । मनोहरत्वाद्वा हरिः । आदिः = सर्वस्य कारणम् । अनादिः = नित्यः, तञ्च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । अनन्तो देशतः कालतो वस्तुतः परिच्छेदशून्यः । अनन्तपदेन नित्यमुक्तबद्धानां त्रयाणां व्यावृत्तिस्तेषां स्वरूपेणान्तर्भावादित्यर्थः । अनन्तशीर्ष इति । अनन्तानि शीर्षाणि यस्य विश्वरूपस्य सः । अनेन पुरुषस्य ज्ञानशक्त्योराननत्यं तत्फलीभूता व्याप्तिश्च प्रतिपाद्यते । शीर्षग्रहणं सर्वाङ्गप्रत्यङ्गोपलक्षणम् । अतोऽत्र शीर्षशब्दो ज्ञानकर्मेन्द्रियाणामाधारतया तत्कार्याणां ज्ञानशक्तीनामुपलक्षकः । "शीर्षञ्छन्दसी"ति शिरश्शब्दस्य शीर्षन्भावः । तथा निरुक्तं ब्राह्मणे = शिरश्शब्दनिर्वचने बोधनमननश्रवणस्पर्शनरसनघ्राणज्ञानानि श्रृतानि

---

वह परमात्मा अचिन्त्य, तर्क से अगोचर, श्रेष्ठ प्राणियों द्वारा वरेण्य, आश्रितों के पापहरण, मनोहरत्वादि गुणों से हरि अनादि अतएव नित्य, देशकाल तथा वस्तुपरिच्छेदरहित होने से अनन्त, अनन्त शिर, अनन्त नेत्र, अनन्तबाहु, अनन्तगुण तथा अनन्तरूप विशिष्ट है । यथा– "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" । भगवान् पुरुषोत्तम की सर्वोत्कृष्टा स्वाभाविकी शक्ति सर्वदेश कालवस्तु विषयकप्रत्यक्षानुभव रूपज्ञान, विश्वधारणादि रूप शक्तिबल, अघटितघटनापटीयसी रूपा क्रिया विविध रूप से ख्यात हैं । "सर्वांल्लोकानीशते ईशनीभिः" । नियमन करने में समर्थ, अपने ज्ञान क्रिया एवं शक्तियों द्वारा समस्त प्राकृत लोकों का नियमन करते हैं ।

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति"– पुरुषोत्तम से ही नामरूपात्मक सम्पूर्ण महदादि तृणान्तभूत उत्पन्न होते हैं, तथा उन्हीं से उनकी स्थिति होती है एवं उन्हीं में ही सभी का लय होता है । अर्थात् सर्वकर्मध्वंस के अनन्तर मोक्ष प्राप्त करते हैं । ईश्वर अभिन्ननिमित्तोपादानकारण है, उक्त श्रुति द्वारा निर्विवाद सिद्ध है ।

पूर्वोक्त अर्थ को दृढ़ करने के लिए श्री वादरायणाचार्य प्रणीत सूत्रों से विवक्षित गुणों द्वारा परबुद्ध्यारूढ करने के लिए "विवक्षितगुणोपपत्तेश्च" सूत्र का ग्रन्थकार ने

**स्वाभाविकी ज्ञानबलक्रिया च । श्वे० ६।८। सर्वांल्लोकनीशते ईशनीभि: । श्वे० ३।१। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्**

---

भवन्तीत्यत: शिर इति । अतोऽनेन पुरुषस्य ज्ञानशक्त्योरानन्त्यमुक्तम् । उक्तार्थं प्रपञ्चयति- **अनन्ताक्ष इति** । अनन्तानि अक्षीणि यस्य स: । अत्राक्षिशब्द: सर्वज्ञानेन्द्रियाणामुपलक्षक: । अनन्तशक्तित्वं भगवतोऽभिहितं तत् श्रुतिमुखेन प्रमाणयति–परास्येति । अस्य भगवत: पुरुषोत्तमस्य । परा सर्वोत्कृष्टा स्वाभाविकी स्वभावसिद्धा न तु व्यावहारिकी । विविधैव श्रूयते ज्ञानबलक्रिया च । ज्ञानम् = सर्वदेशकालवस्तुविषयकप्रत्यक्षानुभवरूपम् । बलम् = विश्वधारणादिशक्ति: । शक्तिश्चाघटघटनापटीयस्त्वरूपसामर्थ्यम् । **ईशनीभि:** ईशनसमर्थाभि: ज्ञानक्रियाशक्तिभि: प्राकृतान् लोकान्सर्वानीशते ईष्टे । अभिन्ननिमित्तोपादानकारणत्वं यद् ब्रह्मणोऽभिहितं तच्छ्रुतिमुखेन प्रमाणयति । **यतो वेति** । यतो यस्माच्छ्रीपुरुषोत्तमादिमानि महदादितृणान्तानि भूतानि जायन्त इति सृष्टिरुक्ता येन जातानि जीवन्तीति स्थितिरुक्ता । अभिसंविशन्तीति लयो दर्शित: । यं सर्वकर्मध्वंसानन्तरं प्राप्नुवन्तीति मोक्ष उक्त: । न चाभिन्ननिमित्तोपादानकारणत्वं कुत्राप्यदृष्टचरमिति । ब्रह्म जगदभिन्ननिमित्तोपादानं भवितुमर्हति तादृशशक्तिमत्त्वात् । जीवगतज्ञानादिकार्ये जीववत् । घटेश्वरसंयोगादिकार्ये ईश्वरवदिति प्रयोगात् । तार्किकाणां मते घटेश्वरसंयोगादिरूपकार्ये ईश्वरस्योपादानकारणत्वं निमित्तकारणत्वञ्च । स च संयोग: समावायसम्बन्धेनेश्वरे समवेतस्तं प्रतीश्वरम्य समवायिकारणत्वं कार्यमात्रं प्रति तस्य निमित्तकारणत्वेनाभिन्ननिमित्तोपादानत्वं स्वज्ञानचिकीर्षाप्रयत्नादिकं शास्त्राभ्यासादिभि: स्वयमेव करोति । जीवस्य तत्र कर्तृत्वेन निमित्तकारणत्वम् । स्वयमेव समवायिकारणं भवति स्वज्ञानादीन् प्रति । कार्यं यत्र समवैति तत्समवायिकारणमिति समवायिकारण-लक्षणस्य स्फुटोपलम्भादित्यभिसन्धि:

---

उल्लेख किया है । भाव– "मनोमय: प्राणशरीरो भारूप:......वाक्यानादर:" इत्यादि श्रुति से प्रतिपादित मनोमयत्वादि गुणों की परमात्मा में ही उपपत्ति हो सकती है । श्रुतिप्रतिपाद्य अर्थ– **मनोमय:** शमदमादि साधनसहकृत परमात्मा की उपासना से निर्मल मन द्वारा वह ग्राह्य होता है । **प्राणशरीर:** सभी प्राणियों का धारक प्राण है, इसका आधेय शरीर है, और वह परमात्मा द्वारा नियम्य है, परमात्मा भारूप है, भास्वर रूप दिव्य अप्राकृत कल्याणरूप होने के कारण नितान्त उज्ज्वल गुण से परिपूर्ण, **सत्यसङ्कल्प** = अप्रतिहत सङ्कल्पशील, आकाश के तुल्य स्वच्छ स्वरूप-वाला, सबका प्रकाशक है । सम्पूर्ण क्रियाओं से युक्त होने के कारण वह सर्वकर्मा है, सर्वकाम-काम्यन्ते इति कामा: इस व्युत्पत्ति के अनुसार सभी प्रकार से सर्व भोग्यादि विषय हैं जिसके, वह परमात्मा सर्वकाम है, दिव्य अप्राकृत स्वभोग्यभूत सर्वविधगन्धरस युक्त, रस पर्यन्त सभी को अङ्गीकार करके वह परमात्मा नित्य अभ्यात्त है । अभ्यात्त में कर्ता में क्त प्रत्यय हुआ है, वह परमात्मा नित्य (व्याप्त) है । समस्त कामनाओं को प्राप्त करने के कारण आदरभाव की कामना से रहित है ।

**प्रयन्त्यभिसंविशन्तीत्याद्याः श्रुतयः तै. ३।१।२। विवक्षितगुणोपपत्तेश्च ब्र०सू० १२।२।। सर्वधर्मोपपत्तेश्च।। ब्र०सू० २।१।३५। सर्वोपेता च। ब्र०सू०**

---

श्रुतिप्रमाणेनोक्तार्थं दृढीकृत्येदानीं श्रीबादरायणाचार्य्यप्रणीतसूत्रैरुक्तार्थं परबुद्ध्यारूढं करोति–विवक्षितेति। ''मनोमयः प्राणशरीरोभयरूपः सत्यसङ्कल्प आकाशात्मा, सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः, सर्वमिदमभ्यात्तोऽवानादर'' इत्यादिश्रुत्या वक्तुमिष्टानां मनोमयत्वादिगुणानां परमात्मन्येवोपपत्तेश्चेति सूत्रार्थः। श्रुत्यर्थस्तु मनोमयः = शमदमादि-साधनसहकृतपरमात्मोपासननिर्मलीकृतेन मनसा ग्राह्यः। प्राणशरीरः = सर्वप्राणिधारकः प्राणो यस्य शरीरमाधेयं नियम्यभूतञ्चास्य भारूपः = भास्वररूपो दिव्याप्राकृत-कल्याणरूपवत्तया निरतिशयौज्ज्वल्ययुक्तः। सत्यसङ्कल्पः = अप्रतिहतसङ्कल्पः। आकाशात्मा आकाशवत्स्वच्छरूपः, सर्वप्रकाशको वा। सर्वं विश्वं कर्म यस्य सः, सर्वा क्रिया यस्य स सर्वकर्मा। सर्वे कामाः भोग्यादयः सर्वविधा यस्य सन्ति स सर्वकामः। दिव्याप्राकृतस्वभोग्यभूतसर्वविधगन्धरसयुक्तः, सर्वमिदं रसपर्य्यन्तमङ्गीकृत-वानित्यभ्यात्तः। ''मुक्ता ब्राह्मणाः'' इतिवत् कर्त्तरि क्तः, यतोऽनादरः प्राप्त-समस्तकामत्वेनादरणीया**भावादादररहितः**। अतो वाक् उक्तिर्यस्य नास्तीत्यवाकी, परिपूर्णैश्वर्य्यवत्वात्सर्वं तुच्छीकृत्य तूष्णीमासीन इत्यर्थः। **सर्वधर्मोपपत्तेश्चेति**। प्रधानपरमाण्वादिष्वनुपपन्ननानां सार्वज्ञ्यसत्यकामत्वसत्यसङ्कल्पत्वसर्वशक्तिमत्वादिधर्माणां कारणत्वोपपादकानां श्रीपुरुषोत्तम एवोपपत्तेश्च। ब्रह्मैव कारणं न प्रधानादिः परिमितशक्तित्वात्। परब्रह्मणः पुरुषोत्तमस्याचिन्त्यानन्तशक्तिमत्वात् सर्वमनवद्यमिति सूत्रार्थः। **सर्वोपेता चेति**। सानन्यशरणैरुपास्यदेवता सर्वोपेता सर्वशक्त्युपेता चाऽतो जगत्कारणं सैव भवितुमर्हति न प्रधानादिकृतः। तद्दर्शनात्, तत्तां सर्वशक्त्युपेतां देवतां दर्शयतीति दर्शनं श्रुतिः। देवात्मशक्तिः स्वगुणैर्निगूढाम्। ''परास्य शक्तिर्विविधैव

---

सम्पूर्ण ऐश्वर्य से परिपूर्ण होने के कारण सब कुछ तुच्छ मानकर शान्त स्थित रहने के कारण वह अवाकी पद से श्रुति में अभिहित है।

२. सर्वधर्मोपपत्तेश्च– प्रधान परमाणु आदि में सार्वज्ञ्य, सत्यकामत्व, सत्यसङ्कल्पत्व, सर्वशक्तिमत्व इत्यादि धर्म अनुपपन्न होने से इनके उपपादक श्री पुरुषोत्तम ही हैं। जगत् का कारण ब्रह्म ही है। प्रधानादि कारण नहीं हो सकते, यतः इनमें सीमित शक्तिमत्ता है। परब्रह्म पुरुषोत्तम अचिन्त्य अनन्त शक्तिमान् होने से निर्दोष है।

३. सर्वोपेता च तद्दर्शनात्– वह परमात्मदेवता अनन्य शरण एवं परमोपास्य है, सर्वशक्तिसम्पन्न है, अतः परमात्मा ही जगत् का कारण होने योग्य है, प्रधान आदि- कृत जगत् नहीं है। परमात्मा के सर्वशक्तित्व समर्थक श्रुतिवाक्य प्रमाण हैं– ''देवात्मशक्तिं स्वगुणैर्निगूढाम्'' परास्य शक्तिर्विविधैव श्रूयते.......ज्ञानबलक्रिया च।

**२।१।२९। जन्माद्यस्य यतः। ब्र०सू० १।१।२ प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधात्। ब्र०सू० १।४।२३। इत्यादिसूत्राणि।।**

---

श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वे० ६।८।) सत्यकामः सत्यसङ्कल्पः (छा० ८।१।५।) इत्यादिश्रुतेः, इति सूत्रार्थः। "जन्माद्यस्य यतः"। (ब्र०सू० १।१।२) अस्याचिन्त्यविचित्रसंस्थानसम्पन्नस्यासङ्ख्येयनामरूपादिविशेषाश्रयस्याचिन्त्यरूपस्य विश्वस्य सृष्टिस्थितिलयाः यस्मादत्सार्वज्ञ्याद्यनन्तगुणाश्रयाद् ब्रह्मेशकालादिनियन्तुर्भगवतो भवन्तीति सूत्रार्थः। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति। चकारो निमित्तसमुच्चयार्थः, प्रकृतिरुपादानं निमित्तं च ब्रह्मैव। **कुतः प्रतिज्ञेति**। प्रतिज्ञा च दृष्टान्तश्च तयोरनुपरोधात् सामञ्जस्यात्। प्रतिज्ञा च "तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति, अमतं मतमविज्ञातं विज्ञातमिति" तदर्थस्तु–हे पुत्र श्वेतकेतो! तमादेशम् = तमादेष्टारं परमात्मानम्। अप्राक्ष्य पृष्टवानसि। येन = गुरुमुखाच्छ्रुतेन। अश्रुतमपि श्रुतं भवति। अमतं मतं भवति। अविज्ञातं विज्ञातं भवतीति। अनया प्रतिज्ञया परमात्मन उपादानत्वं गम्यते। उपादानश्रवणादिना, उपादेयश्रवणादेरेव सङ्गतत्वात्। दृष्टान्तोऽपि यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिरूपः। उपादानकारणविज्ञानेन सर्वकार्यविज्ञानगोचर एव, ब्रह्मणो निमित्तमात्रत्वे तु कुलालादिविज्ञानेन मृण्मयाज्ञानवत्तज्ज्ञानेन सर्वकार्यविज्ञानं न स्यादेवेति तयोर्बाध एव स्यादिति सूत्रार्थः।

---

४. जन्माद्यस्य यतः– विचित्र रचना सम्पन्न, अचिन्त्य, असंख्येय नामरूपादि विशेष का आश्रय, जगत् की सृष्टि स्थिति लय के सार्वज्ञ्यादि अनन्तगुण का आश्रय ब्रह्म ईश काल आदि के नियन्ता परमात्मा पुरुषोत्तम ही हैं।

५. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्—सूत्रस्थ चकार निमित्तसमुच्चय अर्थ का वाचक है। प्रकृति उपादानकारण तथा निमित्तकारण ब्रह्म ही है, परन्तु प्रतिज्ञा और दृष्टान्त दोनों के सामञ्जस्य से ब्रह्म की ही उपादान एवं निमित्त कारणता सिद्ध होती है। प्रतिज्ञा–उत तमादे........विज्ञातं भवति। हे पुत्र श्वेतकेतु! उस परमात्मरूप आदेश को अपने गुरु से पूछा है? जिसके ज्ञान से अश्रुत भी श्रुत, अमत भी मत अविज्ञात भी विज्ञात हो जाता है। इस प्रतिज्ञावाक्य से परमात्मा की उपादानकारणता का ज्ञान होता है। अतः उपादान के श्रवण से उपादेय का श्रवण ही संगत है। कार्य उपादानकारण से अभिन्न होता है। दृष्टान्त वाक्य है, हे सोम्य! जैसे एक मृत्पिण्ड के ज्ञान से सब मृत्तिका के विकारों का ज्ञान हो जाता है, विकार केवल वाणी के आश्रयभूत नाममात्र है, सत्य तो केवल मृत्तिका ही है, उसी प्रकार ब्रह्म के ज्ञान से सम्पूर्ण जगत् का ज्ञान हो जाता है। ब्रह्म की जगदात्मक कार्य के प्रति अभिन्न निमित्तोपादानकारणता है। निमित्तकारणत्व मात्र की विवक्षा करने पर जैसे कुलालादि के विज्ञान से मृण्मय घटादि का ज्ञान नहीं होता, वैसे ही परमात्मा के केवल निमित्तकारणत्व के ज्ञान से परमात्मा का जगदात्मक कार्य का ज्ञान नहीं हो सकता।

**तेजोबलैश्वर्यमहाऽवबोध: स्ववीर्यशक्त्यादिगुणैकराशि: । विष्णु पु० अं० ६।अ०५।८५। कर्मक्लेशविपाकाद्यैरस्पृष्टस्याखिलेशितु: । ज्ञानादिषाड्गुण्य-**

---

कल्याणगुणानेवाह–**तेजोबलैश्वर्य इति**। तेज: = श्रमहेतोरपरिमितत्वेऽपि श्रमशून्यत्वम्। बलम् = विश्वधारणादिशक्ति:। ऐश्वर्यम् = नियमनशक्ति:। महावबोध:=सर्वदेशकालवस्तुविषयकप्रत्यक्षानुभवरूप:। वीर्यम् = परैरनभिभूयमानत्वे सति पराभिभवनसामर्थ्यम्। शक्ति: = अघटघटनापटीयस्त्वरूपसामर्थ्यम्। **कर्मक्लेशेति**। कर्म शुभाशुभरूपम्। क्लेशा:, अविद्यास्मितारागद्वेषाभिनिवेशा: पञ्चक्लेशा: = त एव तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञका:। तत्र स्वरूपावरकं तम:। १ देहादावहंबुद्धिर्मोह:। २ भोगेच्छा महामोह:। ३ तामिस्र:=क्रोध:। ४ अतन्नाशे स्वनाशबुद्धिरन्धतामिस्र:। ५ विपाक:="सति मूले तद्विपाको जात्यायुर्भोगा:" (योगदर्शनम्-२।१६।) सर्वगुणोपपत्ते:, सर्वधर्मोपपत्तेश्चेति सूत्राभ्यां निर्गुणं निर्विशेषं ब्रह्म इत्यभ्युपगच्छन्तो निरस्ता:। सर्वोपेता च, जन्माद्यस्य यत:, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रत्रयेण सर्वशक्तिमतो ब्रह्मण: पुरुषोत्तमस्य विश्वं प्रत्यभिन्ननिमित्तोपादानकारणत्वमभिहितम्। एतेन विवर्तवादोऽपाकृतो भवतीति विवेक:।

---

भगवान् के कल्याणगुणों का कीर्तन विष्णुपुराण में तेजो.........राशि: ।६।५।८५ में किया गया है। **तेज**–अपरिमित श्रम हेतु होने पर भी श्रमशून्यत्व प्रतीति, **बल**–विश्व धारणादि सामर्थ्य, **ऐश्वर्य** नियमनशक्ति, **महावबोध**–सर्वदेशकालवस्तु विषयक-प्रत्यक्षानुभूति, **वीर्य**–दूसरों से अभिभूत होते हुए उनको अभिभव करने का सामर्थ्य, **शक्ति**–अघटितघटनापटीयस्त्वरूपसामर्थ्य, इन कल्याणप्रद गुणों से भगवान् समवेत हैं।

**कर्म**–शुभाशुभरूप, **क्लेश**–अविद्या, स्मिता, राग, द्वेष, अभिनिवेश पाँच क्लेश होते हैं। इन्हीं क्लेशों को तम, मोह, महामोह, तामिस्र, अन्धतामिस्र भी कहते हैं।

१. स्वस्वरूप के आवरक को **तम** कहते हैं।
२. देहादि में अहंबुद्धि ही **मोह** है।
३. भोग की उत्कट इच्छा ही **महामोह** है।
४. **तामिस्र** ही क्रोध है।
५. नाशाभाव होने पर भी स्वनाशबुद्धि को **अन्धतामिस्र** कहते हैं।

**विपाक**–मूल की स्थिति में जाति आयु भोग को विपाक कहा जाता है। इन क्लेशादिकों से भगवान् सदा अपरामृष्ट होते हुए चराचरजगत् के स्वामी हैं। 'सर्वगुणोपपत्ते: सर्वधर्मोपपत्तेश्च, इन दो ब्रह्मसूत्रों के चिन्तन से निर्गुण निर्विशेष ब्रह्म

**निघेरचिन्त्यविभवस्य ता: । अहं सर्वस्य प्रभवो मत्त: सर्वं प्रवर्त्तते ।। गीता १०।८। 'वेदैश्च सर्वैरहमेव वेद्य:''। गीता १५।१५। इत्यादिस्मृतयश्च ।। तथा भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म ह्येतत् । श्वे०**

---

सम्प्रति श्रीमुखवचनेनापि पुरुषोत्तमस्य जगत्कारणत्वं निर्वक्ति–**अहं सर्वस्येति**। अहम् = जिज्ञास्यभूतजगज्जन्मादिलक्षणलक्षितपरब्रह्मस्वरूप: । सर्वस्य = ब्रह्मादिस्थावरान्तस्य जगत: । प्रभव: = उत्पत्तिकारणम् । मत्त एवास्य सर्वम् = देवमनुष्यादिलोकगमनं वृद्धिह्रासादिकम् । प्रवर्त्तत इत्यर्थ: । श्रीकृष्ण एव वेदान्तार्थ इति प्रागभिहितम्, तं श्रीमुखवचनेन द्रढयतिग्रि **वेदैश्चेति** इन्द्राग्निसूर्यमित्रावरुणवाय्वादिप्रतिपादकैरपि वेदैरहमेव वेद्य:, मम सर्वात्मकत्वात् । तथा च श्रुतय:–''सर्वे वेदा यत्पदमामनन्ति, नामानि सर्वाणि यमाविशन्ति'', ''सर्वे वेदा यत्रैकीभवन्तीति ।'' तथा च सर्ववेदान्तप्रतिपाद्यत्वं श्रीकृष्णस्यैवेत्यर्थ: । चेतनाचेतनवस्तुस्वाभाविकभेदाभेदसम्बन्धाश्रय इत्युपदिष्टं प्राक्, तं श्रुतिस्मृतिकदम्बेन प्रमाणीकर्त्तुं तावत्तत्त्वत्रयप्रतिपादिकां श्रुतिमाह–**तथा भोक्तेति**। यथा प्रागुपदर्शितश्रुतिस्मृतिसूत्रैरुक्तार्थ: सिद्ध:, तथा श्रुतिप्रमाणेन तत्त्वत्रयसिद्धिरिति योजना । भोक्ता = प्रत्यगात्मा । भोग्यम् = प्रकृतिकार्यं दृश्यजातम् । प्रेरितारम् = ईश्वरञ्च । एतत् = त्रिविधं तत्त्वम् । सर्वमस्मिञ्छास्त्रे प्रोक्तम् = प्रकर्षेणोक्तम् ।

---

को स्वीकार करने वालों का मत अपास्त हो जाता है । सर्वोपेता च, जन्माद्यस्य यत:, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् इन तीन सूत्रों द्वारा सर्वशक्तिमान् पुरुषोत्तम का जगत् के प्रति, अभिन्न निमित्तोपादानकारणत्व का निर्वचन किया गया है । इन्हीं कारणों से विवर्तवाद भी निरस्त हो जाता है ।

श्री पुरुषोत्तम की जगत्कारणता श्रीमद्भगवद्गीता से भी ज्ञात होती है । अहं सर्वस्य प्रभव: मत्त: सर्वं प्रवर्तते, जिज्ञासा का आश्रय जगज्जन्मादि लक्षणलक्षित ब्रह्मस्वरूप ब्रह्माण्ड से लेकर स्थावरपर्यन्त सम्पूर्ण चराचर जगत् की उत्पत्ति का मैं ही कारण हूँ । तथा मुझ से जगत् में रहने वाले देवमनुष्यादि लोक का गमन तथा वृद्धिह्रासादि होते हैं । श्रीकृष्ण ही वेदान्तों से प्रतिपाद्य है । उसी को गीता के इस श्लोक से दृढ़ किया गया है—वेदैश्च सर्वैरहमेव वेद्य: ।

**व्याख्या**–इन्द्र, अग्नि, सूर्य, मित्रावरुण, वायु आदि के प्रतिपादक–वेदों द्वारा मैं (श्रीकृष्ण) ही वेद्य हूँ, क्योंकि मैं–सर्वात्मक हूँ, ईश्वर की सर्वात्मकता में श्रुतियां प्रमाण हैं–जैसे–''सर्वे वेदा यत्पदमामनन्ति'' नामानि सर्वाणि–यमाविशन्ति ''सर्वे वेदा यत्रैकीभवन्तीति, इत्यादिश्रुतियों से सिद्ध है कि श्रीकृष्ण ही सर्ववेदान्तप्रतिपाद्य हैं ।

चेतनाचेतनवस्तुस्वाभाविकभेदाभेदसम्बन्धाश्रय श्रीकृष्ण हैं । पूर्व ही उपदिष्ट हो चुका है । श्रुति-स्मृतियों द्वारा उनकी प्रामाणिकता सिद्ध करने के लिए तत्त्वत्रयप्रतिपादक-

**१।१२। प्रधानक्षेत्रज्ञपतिर्गुणेशः । अथातो ब्रह्मजिज्ञासा ब्र० सू० १।१।१।**
**इत्यादिशास्त्राद्भोक्तृभोग्यनियन्तृरूपजिज्ञासुजिज्ञासाजिज्ञास्यरूपचिदचिदीश्वरात्मकतत्त्व-**

---

मत्त्वा = सर्वं ब्रह्मात्मकमिति ज्ञात्वा, तद्भावापन्नो भवतीत्यर्थः। श्रुत्यन्तरेणापि चेतनाचेतनेश्वररूपं तत्त्वत्रयं निर्दिशति–**प्रधानेति**। प्रधानम् = प्रकृतिः। क्षेत्रज्ञः जीवः। तयोः पतिः ईश्वरः। गुणेशः = गुणानाम् = सत्त्वानां नियन्ता। अनेन तत्त्वत्रयमुपदिष्टं भवति। सूत्रेणाप्युक्तार्थं द्रढयति–**अथेति**। मुमुक्षानन्तरमनन्ताचिन्त्यस्वाभाविक-स्वरूपागुणशक्त्यादिभिबृहत्तमो यो रमाकान्तः श्रीपुरुषोत्तमो ब्रह्मशब्दाभिधेयस्तद्विषयिका जिज्ञासा सततं सम्पादनीया। जिज्ञासु-जिज्ञासा-जिज्ञास्यरूपतत्त्वत्रयप्रतिपादन-परत्वादुक्तसूत्रस्येत्यर्थः। श्रुतिसूत्रसाधितां त्रिरूपतामाह–भोक्तृभोग्यमिति। भोक्ता = जीवः, भोग्यम् = प्रकृतिकार्यम्। नियन्ता = सर्वेश्वरः पुरुषोत्तम इत्यर्थः। जिज्ञासुः = ब्रह्मविषयकज्ञानेच्छावान्। मुमुक्षुरित्यर्थः। जिज्ञासा = ज्ञातुमिच्छा जिज्ञासेति व्युत्पत्या ज्ञानविषयिणीच्छा। जिज्ञास्यः = ब्रह्मशब्दाभिधेयः श्रीकृष्णः। अत्र जिज्ञासुश्चेतनो जीवात्मा। तेन अनादिगुणमयीमायासङ्कुचितधर्मभूतज्ञानत्वान्नानुभूयते ब्रह्मतत्त्वं तदनुभूत्यर्थं तज्जिज्ञासा

---

श्रुति को उदाहरणस्वरूप प्रस्तुत करते हैं—

"भोक्ता भोग्यं ब्रह्म ह्येतत्। प्रधान क्षेत्रज्ञपतिर्गुणेशः"। यद्यपि पूर्व उपदर्शित अर्थ श्रुति-स्मृति द्वारा सिद्ध है, तथापि श्रुतिप्रमाण द्वारा तत्त्वत्रय का प्रतिपादन करते हैं—**भोक्ता**–प्रत्यगात्मा, **भोग्य**–प्रकृति के कार्य नामरूपात्मकदृश्यपदार्थ, **प्रेरिता**–ईश्वर, ये तीन प्रकार के तत्त्व शास्त्र प्रोक्त हैं, इन सभी पदार्थों को ब्रह्मात्मक जानकर विद्वान् तद्भावापन्न हो जाता है।

श्रुत्यन्तर से भी चेतनाचेतनेश्वररूप तत्त्वत्रय के स्वरूप की प्रतिपत्ति होती है–"प्रधानक्षेत्रज्ञपतिर्गुणेशः **प्रधान**–प्रकृति, **क्षेत्रज्ञ**–जीव, इन दोनों का पति रक्षक ईश्वर। **गुणेश**–सत्त्वों का नियन्ता। इस प्रकार तत्त्वत्रय इस श्रुति से उपदिष्ट हैं।

'अथातो ब्रह्मजिज्ञासा' शास्त्र द्वारा उक्त अर्थ को दृढ़ करते हैं।

मुमुक्षा के अनन्तर अनन्त-अचिन्त्य-स्वाभाविकस्वरूप गुणशक्त्यादि द्वारा बृहत्तम रमाकान्त श्रीपुरुषोत्तम-ब्रह्मशब्द वाच्य हैं, तद्विषयक जिज्ञासा मुमुक्षु व्यक्तियों द्वारा सम्पादनीय है।

जिज्ञासु–जिज्ञास्य–जिज्ञासारूप तत्त्वत्रय प्रतिपादनपरक यह सूत्र है।
श्रुति-सूत्रसाधित त्रिरूपता को–भोक्तृ-भोग्य और प्रेरिता शब्दों से कहा गया है।
**भोक्ता**–जीव, **भोग्य**–प्रकृतिकार्य, प्रेरिता **नियन्ता**–सर्वेश्वर पुरुषोत्तम हैं।
मुमुक्षु–ब्रह्मविषयकज्ञानेच्छावान्,

**त्रयसिद्धिः ।**

**एवञ्च–"सत्यं ज्ञानमनन्तं ब्रह्म" तै० २।१।१। बृहति बृंहयति तस्मादुच्यते परं ब्रह्म । एको देवः सर्वभूतेषु गूढःसर्वव्यापी सर्वभूतान्तरात्मा । श्वे० १।१०।**

---

मुमुक्षुणा कर्तव्या । तस्मान्निश्चीयते, जिज्ञासान्तर्गतमचित्तत्त्वम् । ब्रह्मणो जिज्ञासेति कर्मषष्ठ्या समासः । जिज्ञासाकर्मब्रह्मेत्यभिप्रायेण जिज्ञास्यमीश्वरतत्त्वमभिहितम् । तथा च बादरायणीयादिमसूत्रात्तत्त्वत्रयमुपदिष्टं भवति । तदेवाह–**चिदिति** ।

एवञ्चेति = तत्त्वत्रयस्य पारमार्थिकत्वसिद्धौ परब्रह्मपरमात्मापुरुषोत्तमादिशब्दाभिधेयः श्रीकृष्ण एवेति प्राङ्निर्दिष्टम् । तं श्रुतिमुखेन प्रमाणयन् तावत् ब्रह्मशब्दार्थं निर्वक्ति– **सत्यमिति** सत्यत्वज्ञानत्वानन्तत्वावच्छिन्न- ब्रह्मेति तदर्थः । सत्यपदमसत्यस्य, ज्ञानपदमचिद्वर्गस्यानन्तपदं जीववर्गस्य व्यावृत्तिपरम् । अनन्तत्वञ्चात्र स्वरूप-

---

**जिज्ञासा**–ज्ञातुमिच्छा अर्थात् ज्ञान विषयक इच्छा ।

**जिज्ञास्य**–ब्रह्मशब्द वाच्य श्रीकृष्ण ।

यहां जिज्ञासु-चेतन जीवात्मा को लिया गया है, जिज्ञासु होने कारण अनादि गुणमयी माया से संकुचित धर्मभूतज्ञान से भी ब्रह्मतत्त्व का उसे अनुभव नहीं होता, ब्रह्मतत्त्व के अनुभव के लिए मुमुक्षु व्यक्ति द्वारा ब्रह्मजिज्ञासा करनी चाहिए । अतः निश्चित होता है कि जिज्ञासा के अन्तर्गत अचित्तत्त्व है ।

"ब्रह्मणो जिज्ञासा इति ब्रह्मजिज्ञासा" यहां कर्म में-षष्ठी समास है, जिज्ञासाकर्म ब्रह्म है, इस अभिप्राय से जिज्ञास्य ईश्वरतत्त्व सिद्ध हुआ ।

इस प्रकार बादरायण के प्रथम सूत्र से तत्त्वत्रय उपदिष्ट होता है ।

उसी कथन से शास्त्र द्वारा भोक्तृ-भोग्य-नियन्तृरूप जिज्ञासु-जिज्ञासाजिज्ञास्य चिदचिदीश्वरात्मकतत्त्वत्रय की सिद्धि होती है ।

इस प्रकार तत्त्वत्रय के पारमार्थिकत्व की सिद्धि होने पर परब्रह्मपरमात्मा पुरुषोत्तमादि शब्द से अभिधेय श्री कृष्ण ही हैं, ऐसा निर्दिष्ट है । उसे श्रुति द्वारा प्रमाणित करने के लिए ब्रह्मशब्दार्थ का निरूपण किया जाता है—सत्यत्व-अनन्तत्व-ज्ञानत्वावच्छिन्न ब्रह्म ही श्रीकृष्णपदार्थ है ।

सत्यपद-असत्य, ज्ञानपद-अचिद्वर्ग, अनन्तपद–जीववर्ग के व्यावर्तक हैं ।

परमात्मा का स्वरूप-गुण-शक्ति से अनन्तत्व विवक्षित है, अन्यथा जीव के ज्ञान में अतिव्याप्ति दोष होगा ।

"सत्यं ज्ञानं" इस श्रुति में तथा वेदान्त के प्रथम सूत्र में ब्रह्मशब्द प्रयोग की अन्यथानुपपत्ति से कोई अन्य अर्थ प्रतीत होता है, प्रमाणवाक्य में निरर्थकशब्द का

**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।। श्वे० ६।११। सूक्ष्माच्च यत्सूक्ष्मतरं विभाति । मु०ख० ४।७। यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । अणोरणीयान् महतो महीयान्, कठो० ।२।२०। तस्मात् कृष्ण एव**

गुणशक्तिभिर्विवक्षितम् । अन्यथा जीवज्ञानेऽतिप्रसङ्गः । सत्यं ज्ञानमिति श्रुतौ, वेदान्तस्यादिमसूत्रे च ब्रह्मशब्दप्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते, प्रमाणवाक्ये निरर्थकशब्दाप्रयोगादर्शनात्स च महत्त्वरूपः स्मृतिप्रमाणान्निश्चीयत इत्याह बृंहतीति । निरवधिकमहत्त्वञ्च स्वरूपेण गुणैः शक्त्यादिभिर्बोध्यम् । एक इति = समाधिकरहितः । दीव्यति, क्रीडति अनेकावतारैरिति देवः । द्योतते स्वरूपेण गुणैश्च वा देवः । सर्वभूतेषु गूढः = सर्वेषु भूतेष्वात्मतया वर्तमानोऽपि गूढः । गुणत्रयमायातिरोहितत्वेना-जितबाह्यान्तःकरणानां यथावद् द्रष्टुमशक्यः । सर्वव्यापी = आकाशवत्सर्वमन्तर्बहिश्च व्याप्तुं शीलमस्येति सर्वव्यापी । सर्वभूतान्तरात्मा = सर्वभूतानामन्तःप्रविश्य नियन्ता । कर्माध्यक्षः = कर्मसु अध्यक्षः प्रवर्तकः । सर्वभूताधिवासः = सर्वेषु भूतेषु वसतीति सर्वभूताधिवासः = सर्वशरीरेष्वनुप्रविष्ट इत्यर्थः । साक्षी = साक्षादीक्षते इति साक्षी = सर्वद्रष्टा । चेताः = सकलप्रपञ्चनिर्माता । चिञ्चयन इति धातुः । केवलः = गुणत्रयवश्यत्वाभावात् फलाभिसन्धिपूर्वककर्तृत्वाभावेनो-दासीनः । निर्गुणः = मायाकृतगुणरहितः । सूक्ष्मादपि सूक्ष्मतरं विभातीति विशेषणं दीयत इत्यर्थः ।

प्रयोग नहीं होता है, ऐसा दृष्ट है, यह महत्त्वरूप अर्थ–स्मृतिप्रमाण द्वारा निश्चित होता है।

"बृंहति बृंहयति तस्मादुच्यते परं ब्रह्म" इस व्युत्पत्ति के अनुसार परमात्मा का निरवधिक महत्त्व स्वरूप से, गुणों से एवं शक्ति से है, ऐसा समझना चाहिए।

वह परमात्मा एक है, अर्थात् समाधिक रहित है। 'दीव्यति क्रीडति, इति देवः' इस व्युत्पत्ति से वह परमात्मा स्वयंप्रकाशमान् एवं अनेक अवतारों द्वारा क्रीड़ा करता है। अतः उसे देव कहते हैं, अथवा–स्वरूप और गुणों से प्रकाशित है, अतः उसे देव कहते हैं। वह देवस्वरूप परमात्मा सर्वभूतों में आत्मा के रूप में वर्तमान होने पर भी गूढ़ है, अर्थात् सत्वरजतम स्वरूप माया से तिरोहित होने से जिनके बाह्य करण और अन्तःकरण नियन्त्रित नहीं है, उनके द्वारा आत्मा देखनेयोग्य नहीं हैं, अर्थात् वे परमात्मा का साक्षात्कार नहीं कर सकते। ऐसा परमात्मा सर्वव्यापी है, अर्थात् आकाश के समान सर्वजगत् को व्याप्त करने का स्वभाव होने से सर्वव्यापी है एवं सर्वभूतों के अन्तः में प्रविष्ट होकर नियन्ता है। सम्पूर्ण कर्मों का प्रवर्तक है, सभी प्राणियों में निवास करता है, अन्तः प्रविष्ट है। **साक्षी**–सर्वद्रष्टा, सर्वचेता–सकलप्रपंचनिर्माता, केवलः–गुणत्रय के वश्यत्व के अभाव होने से फलाभिसन्धिपूर्वक

**परो देवस्तं ध्यायेत्। गो०पू०ता०२०। इत्यादि। "यथा सैन्धवघनोऽनन्तरोऽवाह्यः कृत्स्नो रसघन एवं वाऽरेऽयमात्माऽनन्तरोऽवाह्यः कृत्स्नः प्रज्ञानघन एव। बृ० ४।५।१३। "अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा**

---

यस्मात् = परब्रह्मणो नाणीयः। न सूक्ष्मतरोऽस्ति। न ज्यायः = अणोरणीयान् = सूक्ष्मादपि सूक्ष्मतरः सकलसूक्ष्मवस्त्वन्तःप्रवेशयोग्यः। महतो महीयान् = पृथिव्यादेर्महत्तरो निरतिशयमहत्त्वशालीति यावत्। अतः सर्वोत्कृष्टत्वात् श्रीकृष्ण एव यजनीयो ध्येयो रसनीयो भजनीयश्चेत्युपसंहरति–**तस्मादिति**। इतिशब्दः ब्रह्मशब्दार्थनिर्वचनसमाप्तिद्योतकः।

ब्रह्मशब्दार्थं निरूप्य सम्प्रति प्रत्यगात्मनः स्वरूपं श्रुतिमुखेन निर्धारयति–**यथेति**। अनन्तरः = अन्तरङ्गव्यतिरिक्तः। अबाह्यः = बहिरङ्गव्यतिरिक्तः। एवं व्यतिरेकनिदर्शनेन निश्शेषग्रहणं कृतं तदेवाह–कृत्स्न इति। दार्ष्टान्तिकविषयोऽबाह्यशब्दो धर्मिपरः। अनन्तरशब्दो धर्मपरः कृत्स्नशब्दस्तयोरेक-देशजडत्वाशङ्काव्युदासार्थः। शरीरित्वावस्थायामपि ज्ञानात्मकत्वपरं वाक्यमुपादत्ते–**विज्ञानघन एवेति**। विज्ञानमूर्तिरित्यर्थः। घनशब्दोक्तमूर्तेर्जडांशत्वं व्यावर्तयत्येवकारः। एतेन ज्ञानस्वरूपत्वं

---

कर्तृत्वरहित होने के कारण उदासीन है।

निर्गुण–मायाकृत गुण से रहित है; सूक्ष्म से भी सूक्ष्मतर है, पुनः वही परमात्मा न अणु है, न सूक्ष्मतर है, अणु से भी अणु है, सूक्ष्म से सूक्ष्मतर है सकल सूक्ष्म वस्तुओं में अन्तः प्रवेश करने योग्य है। पृथिवी आदि से अत्यधिक महान् है, निरतिशय महत्त्वशाली है।

सर्वोत्कृष्ट होने से श्रीकृष्ण में ही इन सब धर्मों का समन्वय होता है, अन्यत्र नहीं। अतः यह श्रीकृष्ण ही यजनीय, ध्येय–रसनीय एवं भजनीय हैं।

इसी अर्थ को लक्ष्य करके "तस्मात् कृष्ण एव परो देवः" इस वाक्य का अवतरण हुआ है, इत्यादि का घटक 'इति' यह शब्द ब्रह्मशब्दार्थ के निर्वचन समाप्ति का द्योतक है।

ब्रह्मशब्दार्थ का निरूपण करके सम्प्रति–प्रत्यगात्मा (जीव) के स्वरूप का श्रुति द्वारा निर्धारण करते हैं। जैसे–सैन्धवघन (नमक) अन्तरङ्गव्यतिरिक्त (भिन्न), अबाह्य–बहिरङ्गव्यतिरिक्त (भिन्न) इस प्रकार व्यतिरेक दृष्टान्त द्वारा निश्शेष (सम्पूर्ण) रसस्वरूपमात्र है, रसातिरिक्त सैन्धवघनभिन्न नहीं है, उसी प्रकार प्रत्यगात्मा जीव भी अनन्तर अबाह्य पूर्ण अंश में विज्ञानघन ही है, विज्ञानातिरिक्त उसमें अन्य वस्तु नहीं है। यहां अनन्तर शब्द धर्मपरक है, अबाह्यशब्द धर्मिपरक, उस जीवात्मा का सम्पूर्णभाग विज्ञानरूप है, उसके अतिरिक्त भिन्न कुछ नहीं है।

**संविवेश''** । मु० ३।१।९ **''अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं पापं च'', ''वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चाऽनन्त्याय कल्प्यते''। श्वे० ५।९। ''नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। कठ० ५।१३। गौरनाद्यन्तवती जनित्री**

---

प्रत्यगात्मनो निर्दिष्टम्। जीवात्मनोऽणुपरिमाणत्वं श्रुतिमुखेन समर्थयति-**अणुर्ह्येष आत्मेति**। अणुपरिमाणक एष आत्मा जीवात्मा चेतसा = विशुद्धमनसा, वेदितव्यः = वेदितुं योग्यः। एष कस्तत्राह-**यस्मिन्निति** प्राणापानादिरूपेण पञ्चप्रकारः प्राणो यस्मिन् संविवेश = यदाश्रितः स इत्यर्थः।

**वालाग्रेति**। वालः केशस्तस्याग्रमग्रप्रदेशस्तस्य शतांशस्य तस्यापि शतधा कल्पितस्य तु तत्परिमाणो जीवः, अतिसूक्ष्मो भागः = अंशः। जीवः, स च मोक्षे धर्मभूतज्ञानविकासेनानन्त्याय कल्पते = प्रभवति। प्रत्यगात्मनामनेकत्वं श्रुतिमुखेनाह-**नित्येति**। नित्यश्चेतन एक एव सन् बहूनां नित्यानां चेतनानामपेक्षितानर्थाननायासेन प्रयच्छतीत्यर्थः। त्वंपदार्थं निरुच्याचित्पदार्थमाह-**गौरनाद्यन्तवतीति**। गौः प्रकृतिः। आद्यवच्छून्या नित्येति यावत्। जनित्री = प्रजोत्पादिका। भूतभाविनी। तस्या गुणानाह-

---

शरीरी (बद्ध) अवस्था में भी जीवात्मा विज्ञानमूर्तिरूप है, घनशब्दमूर्तिवाचक है—एव शब्द जीवात्मा में जड़ांश की व्यावृत्ति करता है। विज्ञानघन के कथन से विज्ञानस्वरूपप्रत्यगात्मा निर्दिष्ट है।

जीवात्मा अणुपरिमाणशाली है, इसका श्रुतिप्रमाण द्वारा प्रतिपादन करते हैं। जैसे-''अणुर्ह्येष.......आत्मा संविवेश'' अणुर्ह्येष आत्मा........चाऽनन्त्याय कल्पते'' व्याख्या-अणुपरिमाणक आत्मा जीवात्मा कहा जाता है, वह विशुद्ध मन से ज्ञेय है। इस आत्मा का क्या स्वरूप है ? जिसमें प्राणापानादिरूप से पंच प्रकारक प्राण जिसके आश्रित है उसको जीवात्मा कहते हैं। पुनः उसका स्वरूप क्या है ? इस जिज्ञासा पर—वालाग्रशतभागस्येत्यादि। सौ भागों में विभक्त किया हुआ जो केश के अग्रभाग का सौवाँ भाग है, उसके समान जीव को समझना चाहिए। यह अत्यन्त सूक्ष्मपरिमाण भी जीव को अणु बतलाता है। मोक्ष दशा में वह अपने धर्मभूतज्ञान के विकास से अनन्तत्व को प्राप्त करता है।

*श्रुति प्रमाण द्वारा जीवात्मा का अनेकत्व प्रतिपादित है*—''नित्यो नित्यानामित्यादि। नित्य चेतन ईश्वर एक होता हुआ बहु नित्यजीवाख्य चेतनों के अपेक्षित अर्थों को सहज रूप से प्रदान करता रहता है।

त्वं पदार्थ जीव का निरूपण करके अचित्पदार्थ का निरूपण करते हैं—''गौरनाद्यन्तवतीत्यादि''।

**भूतभाविनी" मान्त्रिकोप० । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः । अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं स्वरूपाम्, श्वेता० ४।५। इत्यादिश्रुतिभ्यः ।**

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**

---

**सितेति** । सिता = सत्त्वगुणात्मिका तस्य प्रकाशात्मकत्वात् । असिता = कृष्णा, तमोगुणात्मिकेति यावत् । तस्यावरणात्मकत्वात् । रक्ता = रजोगुणात्मिका । तस्य रञ्जनात्मकत्वात् । अजा = न जायत इत्यजा ताम् । मूलप्रकृतित्वाज्जन्मरहिताम् । लोहितेति = लोहितशुक्लकृष्णशब्दै रजस्सत्त्वतमांस्यभिधीयन्ते । पुनरपि तामेव विशिनष्टि- **बह्वीति** । बह्वीरनेका विभक्तत्वात् कार्यरूपाः प्रजाः प्रविभक्तरूपेण जायन्त इति प्रजास्ताः सृजमानामुत्पादयन्तीं सरूपाः = समानरूपा इत्यर्थः ।

उक्तार्थं स्मृतिप्रमाणेनापि द्रढयति-**द्वाविमाविति त्रिभिः** । इमौ द्वौ पुरुषौ लोके जगति ज्ञेयाविति शेषः । इमौ कौ क्षरश्चाक्षर एव चेति । तावेवार्थतो व्याचष्टे-**क्षरः सर्वाणीति** । सर्वाणि भूतानि = ब्रह्मादिस्थावरान्तानि शरीराणि जडत्वात्परिणामित्वात्,

---

गौः-प्रकृति आदि तथा अन्त से शून्य है, अर्थात् नित्य वह जनयित्री प्रजोत्पादिका है, विकारयुक्त है, एवं विनाश-उत्पत्तिधर्म से विशिष्ट होने के कारण भूतभाविनी है । वह प्रकाशत्मक होने से सत्त्वगुणात्मिका, रञ्जनात्मक होने से रजोगुणात्मिका, कृष्णा (असिता) होने से तमोगुणात्मिका है ।

पुनः कीदृशी प्रकृतिः ? ऐसी जिज्ञासा होने पर उसका समाधान है-वह अजा है, न जायते इति अजा इस व्युत्पत्ति के अनुसार जिसकी उत्पत्ति नहीं होती है, अर्थात् नित्या है । मूलप्रकृति होने से वह जन्म से रहित है, ऐसी प्रकृति को हम नमस्कार करते हैं ।

लोहित-शुक्ल-कृष्ण शब्दों द्वारा रजस्सत्त्वतम गुण कहे जाते हैं । पुनः उसकी विशेषता बतलाते हैं—अनेक रूपों में विभक्त होने से कार्यरूप है, अविभक्तरूप से जो उत्पन्न हो उसे प्रजा कहते हैं ।

वह प्रकृति अपने समान त्रिगुणात्मक कार्यों को उत्पन्न करती है । अतएव अविभक्त रूप से उत्पन्न होने वाले कार्य (प्रजा) प्रकृति के सदृश रूपात्मक हैं ।

उक्त अर्थ को स्मृतिप्रमाण द्वारा दृढ़ करते हैं-'द्वाविमौ पुरुषौ' । उत्तमः पुरुषस्त्वन्यः । इस संसार में दो पुरुष हैं, (१) क्षर तथा (२) अक्षर ।

**क्षर: सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।**–गी॰ १५।१६।
**उत्तम: पुरुषस्त्वन्य: परमात्मेत्युदाहृत: ।**
**यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वर: ।।**–गी॰ १५।१७।

**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम: ।**

---

क्षर: पुरुष: = नश्वर: । अन्नमय: पुरुषश्चेतनाधिष्ठितो देह: क्षरशब्दार्थ: । एकवचनं चात्र प्राकृतत्वाविशेषाज्जात्यभिप्रायकम् । अत एव क्षर: सर्वाणि भूतानीति विवृतम् । कूटस्थ: । कूटे प्रकृतिकार्यभूतशरीरसमुदाये स्थितोऽपि परिणामनाशरहितो नित्य: । कूटस्थ: पुरुष:, अक्षरशब्दवाच्य इत्यर्थ: । अत्राप्येकवचनं स्वयंज्योतीरूपत्वेन सामान्याभिप्रायकमेव । "आचार्यप्रोक्ता या जातिर्नित्या साऽजराऽमरेति" सनत्सुजातोक्ते: तमेव चाद्यं पुरुषं प्रपद्य इति य: प्राक् प्रपदनीय आद्य: पुरुष: उक्त: । यद्विवक्षया आदित्यादिविभूतयो निर्दिष्टास्तमेवाह–**उत्तम इति** । उत्तम: = उत्कृष्टतम: पुरुषस्तु क्षराक्षरशब्दनिर्दिष्टाभ्यां द्वाभ्यामन्यो विलक्षण: परमात्मेत्युदाहृत: । "परमात्मा च सर्वेषामाधार: परमेश्वर:" इत्यादिस्मृतिश्रुतिभ्य: । कोऽसौ परमात्मा य आत्मतया लोकत्रयमाविश्य बिभर्त्ति-धारयति-पालयति च । एवमव्ययोऽविनाशी । य ईश्वर: सर्वलोकनियामकस्तस्माद्भर्तव्यान्नियम्याच्च विलक्षण: ।

उक्तस्य पुरुषोत्तमशब्दस्य यो लोकत्रयमिति यच्छब्देनान्यत्रभ्रान्तिं वारयन्नात्मन्येव निर्वचनेन समन्वयमाह–**यस्मादिति** । यस्मात् क्षरं पुरुषं भोग्यभूतं सर्वभूतात्मकं

---

सर्व भूतवर्ग को क्षर कहते हैं, अर्थात् ब्रह्मादि से लेकर स्थावरान्त शरीर जड़ होने से परिणामी, अतएव क्षर हैं पुरुष-शब्द यहां पर चेतनाधिष्ठित नश्वर देहपरक है, इसलिए नश्वर देह क्षर शब्दार्थ है । 'क्षर' एक वचन का प्रयोग–प्राकृतत्वाविशेष जात्यभिप्राय से किया गया है ।

प्रकृतिकार्यभूतशरीरसमुदाय में स्थित परिणाम नाश रहित नित्य कूटस्थ-विकाररहित पुरुष अक्षरशब्द वाच्य है ।

पुरुष शब्द में एकवचन का प्रयोग स्वयंज्योतिस्वरूपत्व रूप से सामान्याभिप्रायक है । आचार्य (उदयन) द्वारा कही गई जाति नित्य अमर है, सनत्सुजात की उक्ति से सिद्ध है ।

जिसकी विवक्षा से आदित्यादिविभूतिनिर्दिष्ट है, उसी अर्थ का प्रतिपादन उत्तम: इत्यादि शब्द द्वारा किया गया है । उत्तम-उत्कृष्टतम पुरुष क्षराक्षर शब्दों से निर्दिष्ट दोनों से भिन्न विलक्षण परमात्मा है–यह उदाहरण रूप से प्रतिपादित है ।

परमात्मा–सबका आधारभूत परमेश्वर है । इस प्रकार परमेश्वर श्रुति-स्मृति

**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।। गी॰ १५।१८।।**
**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति ।**

---

जडमतीतोऽहम्, अक्षरात् = कूटस्थाद्भोक्तुर्विज्ञानमयपुरुषादपि उत्तमः = उत्कृष्टः । तस्यापीशनशीलत्वात् । "भोक्ता भोग्यं प्रेरितारञ्च" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादि-श्रुतिभ्यः । अतोऽहं लोके वेदे च पुरुषोत्तमः प्रथितः प्रख्यातोऽस्मि । अत्र लोक्यते दृश्यते वेदार्थोऽनेनेति लोकः । इतिहासपुराणादिभिर्विवक्षितः, तथा च वेदेतिहासपुराणादावित्यर्थः । "स उत्तमः पुरुषः" इति वेदे, इतिहासे च महाभारते सहस्रनामस्तोत्रे च "केशवः पुरुषोत्तमः" इति प्रसिद्धः । पुराणे तु "विश्वं यतश्चैतद्विश्वहेतोर्नमोऽस्तु तस्मै पुरुषोत्तमाय" इति "विष्णुर्वै, पुराणपुरुषः प्रत्यक्चैतन्यः पुरुषोत्तमः" इति पाद्मे । नारदपञ्चरात्रे च-"संसारसागरनिमग्नमनन्तदीनमुद्धर्तुमर्हसि हरे! पुरुषोत्तमोऽसीत्यादिषु प्रथितोऽस्मि ।।" तदेवं सांख्यमतानुकूलं प्रकृतिपारतन्त्र्यं स्वभावाधीनं च कर्मकर्तृत्वमुक्तमिदानीम् "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा य आत्मनि

---

के द्वारा सिद्ध है । वह परमात्मा कौन है ? ऐसी जिज्ञासा होने पर कहते हैं—जो आत्मा रूप से तीन लोकों के भीतर प्रवेश करके धारण एवं पालन करता है, वह अव्यय, अविनाशी है । जो ईश्वर सर्वलोक का नियामक है–इसलिए वह भर्तव्य और नियाम्य से विलक्षण है । भगवान् वासुदेव श्रीकृष्ण में ही पुरुषोत्तम शब्द की प्रवृत्ति है, अन्यत्र नहीं । श्रीकृष्ण से भिन्न वस्तु में पुरुषोत्तम शब्द की वाच्यता की भ्रान्ति का निवारण करते हुए पुरुषोत्तम शब्द की वाच्यता श्रीकृष्ण में ही है । यह निश्चित होता है ।

अतः मैं (श्रीकृष्ण) क्षर पुरुष भोग्यभूत सर्वभूतात्मक जड़ से व्यावृत्त अतीत हूँ, अक्षर कूटस्थ भोक्ता विज्ञानमयपुरुषजीव से भी उत्तम-उत्कृष्ट हूँ । जीव का भी ईशन नियमन करना मेरा स्वभाव है ।

"भोक्ता भोग्यं प्रेरितारञ्च, प्रधान क्षेत्रज्ञ पतिर्गुणेशः" ये श्रुतियां इस अर्थ में प्रमाण हैं ।

इसलिए मैं (श्रीकृष्ण) लोक और वेद में–पुरुषोत्तम रूप से प्रख्यात हूँ , ऐसा श्रीकृष्ण ने कहा है ।

वेद-इतिहास-पुराणों में भी पुरुषोत्तमपद से श्रीकृष्ण का प्रतिपादन किया गया है–जैसे वेद में–'स उत्तमः पुरुषः''

इतिहास–महाभारत और सहस्रनाम स्तोत्र में–"केशवः पुरुषोत्तमः" इस रूप

**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया** ।। गी॰ १८।६१।।

---

तिष्ठन्नात्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरम् । एष त आत्माऽन्तर्याम्यमृतः, एतदक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'' इत्यादिश्रुतिनिर्णीतं सर्वस्य प्राणिनः परमेश्वराधीनत्वमाह-**ईश्वर इति** । ईश्वरः = सर्वचेतनाचेतननियमनशीलो भगवान्वासुदेवः सर्वभूतानां हृद्देशे हे अर्जुन! तिष्ठति । किं कुर्वन्-सर्वभूतानि मायया = निजशक्त्या भ्रामयन् तत्तदनादिबीजभूतकर्मानुसारेण शुभाशुभकर्मसु प्रवर्तयन् । कथंभूतानि यन्त्रारूढानि = प्रकृतिपरिणामदेहेन्द्रियरूपं यन्त्रमारूढान्यारोपितानि सूत्रबद्धानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः ।

---

में प्रतिपादन किया गया है ।

**वैष्णव पुराण में**–''विश्वं यतश्चैतद् विश्वहेतोर्नमोऽस्तु तस्मै पुरुषोत्तमाय'' इति ।

**पद्म पुराण में**–पुराणपुरुषः प्रत्यक् चैतन्यः पुरुषोत्तमः ।

**नारदपांचरात्र में**–'संसारसागरनिमग्नमनन्तदीन-
मुद्धर्तुमर्हसि हरे ! पुरुषोत्तमोऽसी ।।' इति ।

इन प्रमांणों के आधार पर सिद्ध होता है कि पुरुषोत्तम शब्दवाच्य श्रीकृष्ण ही हैं ।

सांख्यमतानुसार कर्मकर्तृत्वादिधर्म स्वाभाविक प्रकृति के धर्म हैं, किन्तु इसका निराकरण करते हुए ईश्वर ही कर्ता है, इस बात को ''अन्तः प्रविष्टः–शास्ता जनानां सर्वात्मा यस्यात्मा शरीरम्'' एष त आत्माऽन्तर्याम्यमृतः''–इत्यादि श्रुतियों द्वारा ईश्वर के कर्तृत्व की सिद्धि होती है । पुनः **स्मृति** द्वारा ईश्वर के कर्तृत्व का निरूपण करते हैं—

ईश्वरः सर्वभूतानां.........मायया ।। सब प्राणियों के ईश्वराधीनत्व को इस श्लोक से प्रतिपादित किया गया है ।

सर्व चेतनाचेतननियमनशील भगवान् वासुदेव सर्वभूतों के हृदय प्रदेश में रहते हैं । वासुदेव हृदय में रहते हुए क्या करते हैं ?

ऐसी जिज्ञासा का समाधान करते हैं— अपनी निजशक्तिमाया द्वारा तत्तदनादिबीजभूत कर्मों के अनुसार शुभाशुभ कर्मों को कराते हैं ।

किस प्रकार भूतों द्वारा कर्म कराते हैं— जैसे–सूत्रधार यन्त्र के ऊपर सूत्रबद्ध वस्तु को घुमाता है, उसी प्रकार परमात्मा प्रकृति के परिणामदेहेन्द्रियरूप यन्त्र द्वारा जीवात्मा को कर्मानुसार घुमाता है ।

**तत्र यः परमात्मा स तु नित्यो निर्गुणः स्मृतः ।**
**कर्मात्मा त्वपरो योऽसौ कर्मबन्धैः स युज्यते ।**
**स सप्तदशकेनाऽपि राशिना युज्यते पुनः ।।**
**अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम ।**
**न सन्ति प्राणिनो यत्र निजकर्मनिबन्धनाः ।।**

---

जीवपरमात्मनोर्भेदमाह–**तत्रेति** । निर्गुणः = प्राकृतगुणरहितः । अपरः = जीवात्मा । कर्मात्मा = अनादिकर्मात्मिकमायया परियुक्तः । असौ = जीवः । कर्मबन्धैः = कर्मरूपाविद्यावच्छेदलक्षणबन्धैः । सप्तदशकेन = पञ्चपृथिव्यादिभूतानि पञ्चज्ञानकर्मेन्द्रियाणि अहंकारो मनश्चेत्यर्थः । जीवानामानन्त्यं स्मृति प्रमाणेन द्रढयति = **अङ्गुलस्येति** । श्रीमुखवचनेनाप्युक्तार्थं प्रमाणयति–**न त्वेवाहमिति** । ननु कुतस्तेऽशोच्याः ? यतस्तान् पण्डिता न शोचन्तीत्यपेक्षायां देहातिरिक्तात्मनां नित्यत्त्वादित्याह–**न त्विति** । तत्रात्मत्वेन स्वस्य जीवात्मसाम्यापत्तिं तु शब्देन निराकरोति । सर्वात्मनां मध्ये यथा अहं सर्वेश्वर इतः पूर्वस्मिन्काले जातु कदाचिन्नासं नाभवमिति न, अपित्वासमेव । तथा त्वं नाऽऽसीरिति न किन्त्वासीरेव । तथेमे जनाधिपा नाऽऽसन्निति न, किन्त्वासन्नेव । एतेनात्मनां भूतकाले सत्त्वादुत्पत्तिर्निराकृता । न वेति–पुनः सर्वे वयं पूर्वोक्ताः । अतो

---

जीव परमात्मैक्य का खण्डन करते हुए भेद का प्रतिपादन करते हैं— परमात्मा प्राकृतगुण से रहित है, किन्तु जीवात्मा–कर्मरूपाविद्यावच्छेदलक्षणबन्धों से युक्त है । यह जीवात्मा पृथिव्यादिपञ्चभूत-पञ्चज्ञानेन्द्रिय-पंचकर्मेन्द्रिय-अहंकार मन से युक्त है–अर्थात् सूक्ष्मशरीर युक्त है ।

जीवों का आनन्त्य स्मृतिप्रमाण द्वारा दृढ़ करते हैं—"अङ्गुलस्याष्टमो भागः...... निजकर्मनिबन्धनाः" इत्यादि ।

हे मुनिसत्तम ! अङ्गुल के अष्टमभागपरिमाणयुक्तजीव से परमात्मा भिन्न है । स्वकीयकर्मबन्धन से बद्धजीव नाना हैं, वे परमात्मा से बहुत दूर हैं, अर्थात् परमात्मा की प्राप्ति उनको नहीं होती ।

भगवान् श्रीकृष्ण के वचन द्वारा उक्त अर्थ को प्रमाणित करते हैं—"न त्वेवाहमिति......" इत्यादि । भगवान् अर्जुन को उपदेश देते हैं–हे अर्जुन ! ये तुम्हारे सम्बन्धी जनाधिप (राजा) हैं–उनके विषय में तुम्हारे द्वारा शोक करने योग्य नहीं है– क्योंकि आत्मा नित्य है । पण्डित (ज्ञानी) आत्मा के नित्य होने से उसके विषय में शोक नहीं करते । इसलिए तुम्हारे द्वारा जनाधिप शोच्य नहीं हैं । इसी भाव को भगवान् अपने को दृष्टान्तरूप में दर्शाते हुए कहते हैं—आत्मत्व रूप से अपने जीवात्मसाम्यापत्ति का निराकरण करते हुए कहते हैं कि सर्व आत्माओं के मध्य मैं

**न त्वेवाहं जातु नाशं न त्वं नेमे जनाधिपाः ।**
**न चैवं न भविष्यामः सर्वे वयमतः परम् ।।** गी॰२।१२

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**

---

वर्तमानकालात् काले न भविष्याम इति न अपि तु भविष्याम एव । एतेन नाशाभावो निरूपितः । उत्पत्तिनाशाभावादेव मध्येऽपि तेषां सत्त्वं सिद्ध्यति, एवं कालत्रितयेऽपि सत्त्वप्रतिपादनात्सर्वे एवात्मानो नित्याः, अतोऽशोच्या इति भावः ।

ननु "गौरनाद्यन्तवती जनित्री भूतभाविनी सितासिता च रक्ता च" इत्यादि-श्रुतेर्मायागुणप्रवाहस्यानाद्यनन्तत्वाभिधानात्तन्मोहितानां जीवानामस्वातन्त्र्येण तत्परिहर्तुमशक्यत्वात्र कदाऽपि कस्यापि मायाऽतिक्रमः स्यादित्याशंक्यासाधारणं मायातरणोपायमाह–**दैवीति** । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्चेति स्मृतिप्रतिपादितस्य स्वतो द्योतमानस्य चिदानन्दघनस्य कर्मनियन्तुः सर्वव्यापकत्वेऽपि चेतनाचेतनजगद्‌गुण-सम्बन्धवर्जितस्यातिशयसाम्यशून्यस्य भगवतो नियम्यभूता दैवी एषा त्रिगुणमायाकार्यद्वारा सर्वप्रत्यक्षा गुणमयी सत्त्वरजस्तमोगुणात्मिका मम परमेश्वरस्य सर्वज्ञस्य सर्वशक्तेः सृष्टिकार्योत्पादनशक्तिर्मायाशब्दवाच्या । 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इति श्रुतेः । दुरत्यया ममानुग्रहमन्तरेणोपायसहस्रैरपि दुस्तरा हि निश्चितास्तत्, तथापि

---

सर्वेश्वर इस काल की अपेक्षा पूर्वकाल में नहीं था, ऐसा नहीं, किन्तु था । ये जनाधिप भी पूर्वकाल में नहीं थे, ऐसा नहीं, किन्तु थे । आगे भी हम लोग नहीं रहेंगे ऐसा नहीं, किन्तु हम सब भविष्य में भी रहेंगे । भगवान् के कथन से आत्मा का अविनाशित्व सिद्ध होता है ।

इसलिए अर्जुन के लिए ये जनाधिप अशोच्य हैं । यद्यपि 'गौरनाद्यन्तवती सितासिता च रक्ता चैत्यादिश्रुति द्वारा मायागुणमयी जिसका प्रवाह अनादि अनन्त है उससे मोहित जीव परतन्त्र हैं' वे इस माया को तरने में अर्थात् पार करने में असमर्थ हैं । इस प्रकार आशंका करके असाधारण तरणोपाय को स्वयम् "दैवी ह्येषा.......तरन्ति ते । इस श्लोक द्वारा कहते हैं ।

"एको देवः........निर्गुणंश्चेंति स्मृतिप्रतिपादित स्वयंप्रकाशमान चिदानन्दघन, कर्मों के नियन्ता भगवान् के सर्वव्यापक होने पर भी चेतनाचेतनजगत्‌गुणसम्बन्धवर्जित अतिशयसाम्यशून्य परमेश्वर से नियम्य माया जो सर्वशक्ति-सर्वज्ञ की शक्ति है उसको यह जीव मेरे अनुग्रह के बिना नहीं तर सकता–क्योंकि दुस्तर है–तथाऽपि जो मनुष्य पुरुषार्थाभिमान तथा साधनान्तर का परित्याग करके साधनसाध्यरूप मुझ सर्वात्मा को निश्चित करके भजते हैं, वे इस दुरत्यय माया को तर जाते हैं ।

**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।।** गी० ७।१४।

**त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।**
**अचेतना परार्था च नित्या सततविक्रिया ।।**

---

"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, तद्यो देवानां प्रत्यबुध्यत स एव तदभवत् । तथर्षिणां:, तथा मनुष्याणामित्यादिश्रुतिभ्य अनन्ता एव जीवास्तेषां मध्ये ये केचन मामेव सर्वेश्वरं सर्वज्ञं सर्वशक्तिं मायानियन्तारं प्रपद्यन्ते स्वपुरुषार्थाभिमानं साधनान्तरञ्च विहाय साधनसाध्यरूपं निश्चित्य सर्वात्मना भजन्ते, आनुकूल्यसङ्कल्पादि- कार्पण्यां तां षड्विधां शरणागतिं मयि कुर्वन्तीत्यर्थः । त एव एतां मम मायां तरन्ति वर्जयन्तीत्यर्थः । नत्वन्ये, अवधारणस्योभयत्र सम्बन्धात् ।

**ये प्रपन्ना हृषीकेशं न ते मुह्यन्ति मानवाः ।**
**भये महति मग्नानां त्राता नित्यं जनार्दनः ।।**

इति भीष्मपर्वणि वचनम् । वामने प्रह्लादश्चाह–

**[ये संश्रिता हरिमनन्तमनादिमाद्यं नारायणं सुरगुरुं शुभदं वरेण्यम् ।**
**शुद्धं खगेन्द्रगमनं कमलालयेशं ते धर्मराजभवनं न विशन्ति धीराः ।।]** इति।।

पाञ्चरात्रवचनेनाप्युक्तार्थं द्रढयति–**त्रिगुणमिति** । त्रयो गुणाः सत्त्वरजस्तमांसि यस्मिन् तत् त्रिगुणम् । तत्=ब्रह्माधिष्ठितं प्रधानम् । जगद्योनिः = निखिलविश्वस्य कारणम् । अनादि = उत्पत्तिविनाशरहितं नित्यमिति यावत् । प्रभवाप्ययम् = महदादिकारणानां लयो यस्मिन् तत् । अचेतना=प्रकृतौ चैतन्यं नास्ति जडेति यावत् । परार्था = जीवात्मनो भोग्यसम्पादयित्री । नित्या = नित्यत्वं नाम प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । सततविक्रिया = अनवरतपरिणामवती । उदाहृतश्रुतिस्मृतिभ्यः प्रधानजीवपरमात्मनां

---

इसी सन्दर्भ में वचनान्तर भी उपलब्ध है—जैसे–

**"ये संश्रिताः हरिमनन्तमनादिमाद्यं नारायाणं सुरगुरुं शुभदं वरेण्यम् ।**
**शुद्धं खगेन्द्रगमनं कमलालयेशं ते धर्मराजभवनं न विशन्ति धीराः ।।**

अर्थात् भगवान् का सर्वात्मना आश्रयण करने वाला धर्मराज (यम) के भवन में प्रवेश नहीं करता अर्थात् तर जाता है ।

पांचरात्रवचन के अनुसार भी इसी अर्थ को 'त्रिगुण'' ग्रन्थ द्वारा दृढ़ करते हैं । त्रयोगुणाः–सत्वरजस्तमांसि सन्ति यस्मिन्–तत् त्रिगुणम् इस व्युत्पत्ति के अनुसार ब्रह्माधिष्ठित प्रधान (प्रकृति) को लिया गया है । जो सम्पूर्ण जगत् का उपादानकारण है, उत्पत्ति-विनाशरहित अर्थात् नित्य है । महदादिकार्यों का लयस्थान, अचेतन प्रकृति में चैतन्यगुण नहीं है–अर्थात् जड़ है । जीवात्मा के भोग्यवस्तुओं का सम्पादन करने वाली है, वह प्रकृति प्रागभाव की अप्रतियोगी होती हुई ध्वंस की अप्रतियोगी

**इत्यादिस्मृतिभ्यश्च, चिदचिदीश्वराणां त्रयाणां स्वरूपस्वभाववैलक्षण्यसिद्धिः । पुनः सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । छा० ६।२।१। आत्मा वा इदमेकमासीद् तै० २।१। एको ह वै नारायण आसीत् । महानारायण उ० । 'तत्त्वमसि' छा० ३।१४।३। अयमात्मा ब्रह्म । बृ०२।५।१९। सर्वं खल्विदं ब्रह्म । छा० ३।१४।१।**

---

स्वरूपतः स्वभावतश्च वैलक्षण्यं सिद्धमित्यमुमर्थमाह–**चिदचिदीश्वराणामिति** । एतावता प्रबन्धेन तत्त्वत्रयस्य पारमार्थिकत्वमभिहितम् । सम्प्रति चेतनाचेतनवस्तुस्वाभाविक-भेदाभेदसम्बन्धाश्रय इति प्राङ्निर्दिष्टं तत् श्रुतिप्रमाणेन समर्थयति–**सदेवेति** । हे सोम्य! अग्रे सृष्टेः प्राग् इदं परिदृश्यमानं जगत् सद्ब्रह्माभिन्नमासीत्, एकमेवाद्वितीयम् = क्षराक्षराभ्यामुत्कृष्टमन्यसहायहीनमेकसङ्ख्याकमेकशब्दार्थः । अयोगव्यवच्छेदार्थः प्रथमोऽवधारणशब्दः । तदधिकोत्कृष्टव्यवच्छेदपरो द्वितीय एवकारः स्वातिशयवस्तुशून्य इत्यर्थः । अद्वितीयशब्दश्च समाननिषेधपरः न तत्समोऽस्त्यभ्यधिकः कुतोऽन्य इति श्रुतेः । **आत्मा वेति** । इदमनभिव्यक्तनामरूपात्मकं जगद् ब्रह्मभिन्नाभिन्नम् एक एव सहायान्तरशून्यस्वतन्त्रसत्ताश्रयः सर्वज्ञोऽचिन्त्यानन्तशक्तिरात्मा परमात्मा श्रीवासुदेवोऽग्रे सृष्टेः प्रागासीत् । एको ह वेति पूर्ववत् ।

---

है, अर्थात् नित्य है । निरन्तरपरिणामिनी है ।

उदाहृत श्रुति-स्मृतियों द्वारा जीव-प्रधान परमात्मा का स्वरूपतः परस्पर वैलक्षण्य है, इसको चिदचिदीश्वरपद द्वारा प्रतिपादित करते हैं । अतः इस प्रबन्ध के तत्त्वत्रय का पारमार्थिकत्व सिद्ध होता है ।

सम्प्रति चेतनाचेतनवस्तु के स्वाभाविक भेदाभेदसम्बन्धाश्रयत्व को श्रुति प्रमाण द्वारा समर्थन करते हैं–"सदेव सोम्य" इत्यादि ।

हे सोम्य ! सृष्टि के प्राक्काल में यह परिदृश्यमान जगत् सद्ब्रह्म से अभिन्न था । क्षराक्षर दोनों से उत्कृष्ट अन्य की सहायता से हीन एक संख्या युक्त था । यहां एकशब्द अयोगव्यवच्छेद अर्थ में प्रयुक्त है ।

प्रथम अवधारणशब्द तदधिकोत्कृष्टव्यवच्छेदपरक है, द्वितीय एवकारशब्द स्वातिशयवस्तुशून्यपरक है, अद्वितीय शब्द–समान निषेधपरक है, "न तत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" यह श्रुति वाक्य इसमें प्रमाण है । आत्मा वा......यह श्रुति भी इसमें प्रमाण है । यह अनभिव्यक्तनामरूपात्मकजगत् ब्रह्म भिन्नाभिन्न एक एव सहायान्तरशून्य स्वतन्त्रसत्ता का आश्रय सर्वज्ञ अचिन्त्य अनन्तशक्ति से युक्त परमात्मा श्रीवासुदेव सृष्टि के प्राक्काल में थे–इस प्रकार का शाब्दबोध आत्मा वा इदमेक......इत्यादि श्रुतिवाक्य से होता है ।

"तत्त्वमसि" इस महावाक्य का घटक तत्पदार्थ–स्वतन्त्रसत्ता का आश्रय ब्रह्म है ।

**त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि देवते तदात्मानमेवावेद, अहं ब्रह्मास्मीत्यादिशास्त्रेण । बृ० ३।४।९। चिदचितोर्ब्रह्मतादात्म्यमुप-**

---

**तत्त्वमसीति**- तत्पदार्थवृत्तिस्वतन्त्रसत्ताश्रयाभिन्नब्रह्मात्मकपरन्त्रसत्ताश्रयाभिन्नस्त्वंपदार्थ:, तत्पदार्थो विश्वात्मा । त्वं पदार्थक्षेत्रज्ञान्तरात्मा तयोरभेद: घटो द्रव्यं पृथिवीद्रव्यमित्यादिवन्मुख्य एवेत्यर्थ: । अयमात्मेति जीवात्मा ब्रह्माभिन्नमित्यर्थ: । सर्वमिति । सर्वं समस्तमिदं परिदृश्यमानं जगन्नामरूपात्मकं, ब्रह्म = ब्रह्मात्मकमित्यर्थ, तदात्मानमिति । तत् = ब्रह्म, आत्मानमवेत् । **अहं ब्रह्मास्मीति** । प्रागुपदर्शितश्रुतिभिश्चिदचितोर्ब्रह्माभिन्नत्वमुपदिष्टमित्याह-**चिदिति** । तुल्यबलत्वाद्भेदपराणामभेदपराणां वचनानां परस्परं बाध्यबाधकभावो वक्तुं न शक्यते तेषामुभयेषां षड्लिङ्गोपेतत्वादित्याह-**एवञ्चेति** । चिदचितोर्ब्रह्मतादात्म्येत्यर्थ: । उभयविधवाक्यानाम् = भेदप्रतिपादकाभेदप्रतिपादकवाक्यानाम् । उपसंहरित-**तस्मादिति** । परस्परं बाध्यबाधकाभावादित्यर्थ: । घटकसूत्राण्याह-**अंश इति** । अंशाशिभावाज्जीवपरमात्मनोर्भेदाभेदौ दर्शयति-परमात्मनो जीवोऽश: "ज्ञाऽज्ञौ

---

तथा त्वं पदार्थ- परतन्त्रसत्ता का आश्रय जीव है । अर्थात् तत्पदार्थ-विश्वात्मा, त्वं पदार्थ-क्षेत्रज्ञान्तरात्मा, इसलिए तत्त्वं पदार्थों का अभेद सिद्ध होता है, जैसे-घट और द्रव्य का अभेद । पृथिवी और द्रव्य का अभेद मुख्य है, उसी प्रकार तत्पदार्थ और त्वंपदार्थ का अभेद भी सिद्ध होता है ।

"अयमात्मा ब्रह्म" इस वाक्य से जीवात्मा ब्रह्म से अभिन्न है ऐसा वाक्यार्थबोध होता है ।

"सर्वं खल्विदं ब्रह्म" इस महावाक्य से यह समस्त परिदृश्यमान नामरूपात्मक जगत् ब्रह्म से अभिन्न है, ऐसा वाक्यार्थबोध होता है ।

"त्वां वा.........ब्रह्मास्मीत्यादिशास्त्रेण" । इस श्रुति द्वारा ब्रह्म को ही अपनी आत्मा समझें । "अहं ब्रह्मास्मि" इति ।

पूर्वोक्त श्रुतियों द्वारा उपदिष्ट चिदचित् के ब्रह्माभिन्नत्व को चिदचित् इस ग्रन्थ से प्रतिपादित करते हैं ।

तुल्यबल होने के कारण भेदपरक वचनों और अभेदपरकवचनों का परस्पर बाध्य-बाधकभाव है ऐसा नहीं कह सकते, क्योंकि इन वचनों के षड्विधलिङ्गोपेत होने से उनमें परस्पर बाध्यबाधकभाव नहीं है । यत: चिदचित् का ब्रह्म के साथ तादात्म्य है ।

इस प्रकार उभयविध वाक्यों का बाध्य-बाधकभाव नहीं कह सकते, क्योंकि दोनों तुल्यबल हैं । सभी वाक्यों का स्वार्थ में प्रामाण्य की सिद्धि के लिये स्वाभाविकभिन्नाभिन्न पदार्थ ब्रह्मसूत्रकार द्वारा निर्णीत हैं ।

**दिश्यते। एवञ्चोभयविधवाक्यानां परस्परं बाध्यबाधकभावो वक्तुं नैव शक्यस्तुल्यबलत्वात्। तस्मात्सर्वेषां वाक्यानां स्वार्थे प्रामाण्यसिद्धये स्वाभाविकभिन्नाभिन्नं ब्रह्मसूत्रकृद्भिर्निर्णीतम्। तेनाभिप्रायेण घटकसूत्राणि**

---

द्वावजावीशानीशा'' वित्यादिभेदव्यपदेशात् तत्त्वमसीत्याद्यभेदव्यपदेशाच्च। अपि च आथर्वणिका: ''ब्रह्मदाशा ब्रह्मदासा ब्रह्मकितवा'' इति। ब्रह्मणो हि कितवादित्वमधीयते। (ब्र॰ सू॰ २।३।४२।) मूर्त्तामूर्त्तादिप्रपञ्चस्य ब्रह्मकार्यतया ब्रह्मरूपत्वेन श्रुत्युक्तस्य ''नेति नेतीति निषेधानर्हत्वं ब्रह्मणस्ततो भूयस्त्वेन निर्दोषत्वं चोक्तमेतद्दार्ढ्यार्थं प्रपञ्चस्य कार्यस्य कारणेन ब्रह्मणा सह भेदाभेदसम्बन्धं सर्वश्रुत्यर्थनिर्वाहकं स्वकीयं सिद्धान्तं भगवान्सूत्रकार आह–उभयव्यपदेशात्त्वहिकुण्डलवदिति–मूर्त्तामूर्त्तादिसर्वकार्यजातस्य ब्रह्मभिन्नत्वेऽपि तदभिन्नत्वम्। कुत:? उभयव्यपदेशात्। भेदाभेदव्यपदेशात्। ''यतो

---

उभयविधवाक्यों का तात्पर्य-भेदप्रतिपादक एवं अभेद प्रतिपादक वाक्यों से है।

'अंशो नानाव्यपदेशात् अन्यथा चापि दाशकितवादित्वमधीयतएके', इत्यादि घटक सूत्रों द्वारा—

अंशांशिभाव से जीव परमात्मा के भेदाभेद की सिद्धि होती है।

''ज्ञाऽज्ञौ द्वावजावीशानीशावित्यादि'' भेद व्यपदेश होने से जीव परमात्मा का अंश है। तत्त्वमसि इत्यादि महावाक्यों द्वारा अभेद का व्यपदेश होता है।

आथर्वणिक लोग–ब्रह्मदाशा: ब्रह्मदासा ब्रह्मकितवा'' इति। ब्रह्मणो हि कितवादित्व-मधीयते''। वे ब्रह्म के कितवादित्व का प्रतिपादन करते हैं।

मूर्त्तामूर्त्तप्रपंच ब्रह्म का कार्य होने से ब्रह्मरूप है। अत: ''नेति नेति'' इस श्रुति से प्रपञ्च निषेध के अनर्ह हैं। इसी अनर्हता की दृढ़ता के लिये प्रपंचकार्य का कारण के साथ भेदाभेद सम्बन्ध जो सभी श्रुतियों के अर्थ का निर्वाहक है, वही भेदाभेद सम्बन्ध स्वकीय सिद्धान्त है। भगवान् सूत्रकार भी कहते हैं—''उभयव्यपदेशात्त्वहि कुण्डलवदिति। मूर्त्तामूर्त्त सम्पूर्ण कार्य ब्रह्म से भिन्न होने पर भी अभिन्न है। यतो वा इमानि भूतानि जायन्ते, य: पृथिव्यां तिष्ठन्....इत्यादि श्रुतियों द्वारा भेद का व्यपदेश है।

''सर्व खल्विदं ब्रह्म'' इत्यादि श्रुति द्वारा अभेद–व्यपदिष्ट है। इसी अर्थ को दृष्टान्त द्वारा सिद्ध करते हैं—

'अहिकुण्डलवदिति', विवक्षितांश को लेकर ही दृष्टान्त दिये जाते हैं–कुण्डलोपादान रज्जु का आकार विशेष ही अहि का कारण है। अहिस्थानीयभूत-मूर्त्तामूर्त्तादि विश्व को लिया गया है, कुण्डलपद से परतन्त्र व्याप्य कार्य को लिया

**प्रणीतवान् । 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके' । ब्र० सू० २।३।४२। उभयव्यपदेशात् त्वहिकुण्डलवत् ब्र०सू० ३।२।२७।**

---

वा इमानि भूतानि जायन्ते यः पृथिव्यां तिष्ठन्' इत्यादिभेदव्यपदेशात् । सर्वं खल्विदं ब्रह्म इत्याद्यभेदव्यपदेशात् । तत्र दृष्टान्तमाह–**अहिकुण्डलवदिति** । सर्वत्र विवक्षितांशमात्रेण दृष्टान्ता उपादीयन्तेकुण्डलोपादानभूतो रज्ज्वाकार अहिः कारणम्, तत्स्थानीयं कार्यभूतं मूर्त्तामूर्त्तादिकं विश्वम् । तत्र कुण्डलं परतन्त्रं व्याप्यं कार्यञ्च अहिस्तदपेक्षया स्वतन्त्रो व्यापकः कारणञ्च । अतस्तयोर्भेदः । अहिव्यतिरेकेन कुण्डलस्य स्थितिप्रवृत्त्याभा-वात्ततोऽभेदश्च । एवं प्रपञ्चस्य चिदचिच्छक्तिमद्ब्रह्मकार्यस्य कारणेन ब्रह्मणा सह स्वाभाविकौ भेदाभेदौ भवतः सूत्रानुरूपश्रुतिपूगः । 'द्वा सुपर्णा सयुजा', 'पृथगात्मानं प्रेरितरञ्च मत्वा', 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वम्' ब्रह्मैवेदं सर्वम्, आवेदं सर्वमित्यादि । ब्रह्मात्मकत्वान्मूर्त्तामूर्त्तादिकस्य प्रतिषेधत्वं नेति भावः । प्रकाशाश्रयवद्वा तेजस्त्वात् (ब्र०सू० ३।२।८।)

ननु भवत्वचेतनवर्गस्य ब्रह्मणा सह भेदाभेदसम्बन्धः । जीवस्य तु तेन सह भेदाभेदसम्बन्धो न सङ्गच्छते । अतोऽनन्तेन तथा लिङ्गम् (ब्र०सू० ३।२।२६) इत्यत्र जीवोऽनन्तेन सह साम्यं प्राप्नोति तयोरत्यन्तभेदप्रतीतेरित्यत आह–उभयव्यपदेशादित्यनुवर्तते । वाशब्दश्चोद्यनिवृत्त्यर्थः । नास्ति तयोरत्यन्तभेदः, "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं ततस्तु तं पश्यति निष्कलं ध्यायमानः", "ब्रह्मविदाप्नोति परम्" । "परात्परं पुरुषमुपैति दिव्यम्", "अज्ञो जन्तुरनीशश्च", "यः सर्वज्ञः, सर्ववित्",

---

गया है । अहि-तदपेक्षा स्वतन्त्र व्यापक कारण–विवक्षित है । अतः कारण और कार्य में परस्पर भेद है । जिस प्रकार अहि से भिन्न कुण्डल की स्थिति-प्रवृत्त्यभाव होने से रज्जु से भिन्न कार्यभूत कुण्डल नहीं है । अर्थात् अभिन्न है, उसी प्रकार चिदचिच्छक्तिमद् ब्रह्म के कार्य का कारण ब्रह्म के साथ स्वाभाविक भेदाभेद है, सूत्र के अनुरूप श्रुतियां– "द्वा सुपर्णा सयुजा......" "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वम्" ,ब्रह्मैवेदं सर्वं "आत्मैवेदं सर्वम्" इत्यादि श्रुतियां ब्रह्म का कार्य के साथ भेदाभेद सम्बन्ध ब्रह्मात्मकत्वात् मूर्त्तामूर्तादि का प्रतिषेध नहीं है । 'प्रकाशाश्रयवद्वा तेजस्त्वात्' इस ब्रह्मसूत्र द्वारा भी भेदाभेदसम्बन्ध की सिद्धि होती है । मूर्तामूर्त जगत् का ब्रह्म में निषेध नहीं हो सकता यह अभिव्यक्त होता है । पुनः प्रश्न होता है कि–अचेतनवर्ग का ब्रह्म के साथ भेदाभेद सम्बन्ध रहे, किन्तु ब्रह्म के साथ जीव का भेदाभेद सम्बन्ध है यह संगत नहीं है, क्योंकि 'अतोऽनन्तेन तथाहि लिङ्गम्" सूत्र में जीव ब्रह्म के साथ साम्य प्राप्त करता है–ऐसा प्रतिपादन किया गया है ।

इससे सिद्ध है कि जीव और ईश्वर में अत्यन्त भेद है । इस की निवृत्ति के लिये ही–"प्रकाशाश्रयवद्वा" इस सूत्र में "उभय व्यपदेशात्" इसकी अनुवृति होती

**प्रकाशाश्रयवद्वा तेजस्त्वादित्यादीनि । ब्र०सू० ३।२।२८।**

**तस्मात्स्वाभाविकभेदाभेद एव सूत्रकारसम्मतः । अत्यन्तभेदोऽत्यन्ताऽभेदश्च भ्रान्तिरिति निश्चीयते । ननु यदुक्तम्- चिदचितोर्ब्रह्मणा**

---

"अविद्यायामन्तरे वर्तमाना:", "एष आत्माऽपहतपाप्मा सत्यकामः सत्यसङ्कल्पः", "य आत्मनि तिष्ठन्" इत्यादि स्वाभाविकभेदव्यपदेशात् । "तत्त्वमसि", 'अहं ब्रह्मास्मि", "अयमात्मा ब्रह्म" इत्यादिस्वाभाविकाभेददर्शनाच्च जीवस्य ब्रह्मणा सह भेदाभेदसम्बन्धः । दृष्टान्तमाह-**प्रकाशाश्रयवदिति** । प्रकाश:-सूर्यादिप्रभारूप: । आश्रयः = सूर्यादि: । तत्र हि प्रकाशस्य आश्रयेण सह स्वाभाविकौ भेदाभेदौ भवतः । तस्य च तं बिना पृथगवस्थानाभावात् ।

नन्वत्यन्तभिन्नयोस्तदभेदे कोऽयं निर्बन्धस्तत्र हेत्वन्तरमाह-**तेजस्त्वादिति** । प्रकाशाश्रययोस्तेजस्त्वादभेदस्तद्वदंशभूतस्य जीवस्यांशिना स्वाभाविकौ भेदाभेदौ भवत

---

है, "वा" शब्द भी सूत्र में चोद्य की निवृत्ति के लिये ही दिया गया है, अर्थात्-जीव का ब्रह्म के साथ भेदाभेद सम्बन्ध है । जीव और ईश्वर का अत्यन्त भेद नहीं है इसमें- "यदा पश्य......ध्यायमानः" ब्रह्मविदाप्नोति परम् "परात्परं पुरुषमुपैति दिव्यम्"...... तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म, प्रज्ञानं ब्रह्म" ये श्रुतिवाक्य प्रमाण हैं- अर्थात् जीव और ईश्वर का परस्पर भेदाभेद सम्बन्ध है । भेदाभेद को सिद्ध करने के लिये "प्रकाशाश्रयवद्वा" इस सूत्र का अवतरण हुआ है—जैसे सूर्यादिप्रकाश के आश्रय सूर्यादि हैं । यहां पर प्रकाश का सूर्यादि आश्रय के साथ स्वाभाविक भेदाभेद है क्योंकि सूर्य के बिना प्रकाश की पृथक् स्थिति नहीं है ।

यहां शंका हो सकती है कि अत्यन्त भिन्न प्रकाश और सूर्य का अभेद है, इसमें क्या प्रमाण है ? इसका समाधान इस प्रकार किया जाता है-प्रकाश और सूर्य दोनों तेज हैं, इसलिए तेजस्त्व रूप से दोनों में अभेद हैं। जीव और ईश्वर में अंशांशिभावसम्बन्ध होने से अभेद है । दोनों के अभेद सिद्धि में-"अंशो नानाव्यपदेशादन्यथा चापीत्यत्रोभयश्रुतिविरोधपरिहारश्च" यह सूत्रप्रमाण है ।

यद्यपि जीव और पुरुषोत्तम का स्वाभाविक भेदाभेद सम्बन्ध प्रसिद्ध है, तथापि तार्किकादिपक्ष के समान अत्यन्तभेद निरास के लिये पुनः यहां कहा गया है यह विशेषता है ।

इसी का उपसंहार "तस्मात्" इस ग्रन्थ से किया गया है—

श्रीमाध्वमतानुयायी जीव और ब्रह्म का अत्यन्तभेद मानते हैं ।

श्रीशंकराचार्यमतानुयायी जीवेश्वर का अभेद मानते हैं, किन्तु जीव प्रधान (प्रकृति) का परस्पर भेदाभेदसम्बन्ध स्वाभाविक है, इसे सिद्धान्ततः मानते हैं ।

**स्वाभाविकभेदाऽभेद एव सम्बन्धो, नान्य इति तदाग्रहमात्रम् । यतः केवलद्वैतस्य केवलाऽद्वैतस्य चापि शास्त्रे सत्त्वात् । तत्प्रवर्तकानां चाऽऽचार्यत्वाविशेषेण तन्निषेधायोगादिति चेन्न—द्वैतविषयकाणामद्वैतविषयकाणां चोभयविधवाक्यानां शास्त्रे सत्त्वेऽपि तेषामितरेतरबाध्यबाधकभावायोगादुभयेषां तुल्यबल-त्वादित्युक्तमेव । एकतरबाधं विना एकतरस्याऽसिद्धेश्च ।**

---

इत्यर्थः । अंशो नानाव्यपदेशादन्यथा चापीत्यत्रोभयश्रुतिविरोधपरिहाराय जीवपुरुषोत्तमयोः सम्बन्ध उक्तः । इह तु तार्किकादिपक्षवदत्यन्तभेदनिषेधाय पुनरुक्त इति विशेषः । निगमयति—**तस्मादिति** । घटकसूत्रप्रणयनादित्यर्थः । **अत्यन्तेति** । केवलभेदवादिनः श्रीमाध्वमतानुयायिनः । **अत्यन्तेति** । केवलाभेदवादिनः श्रीशङ्कराचार्य्यमतानुयायिनः । जीवप्रधानयोर्ब्रह्मणा सह स्वाभाविकभेदाभेदसंसर्गः प्रागभिहितस्तमाक्षिपति—**नन्विति** । तत्प्रवर्तकानाम् = केवलद्वैतकेवलाद्वैतमतप्रवर्तकानाम् , तन्निषेधायोगात् = केवलद्वैतकेवलाद्वैतयोर्निषेधायोगात् । 'सैन्धवघनोऽनन्तरोऽवाह्यः'' अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं पापञ्च'', ''बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानत्याय कल्प्यते'' । ''नित्यो नित्यानाम्'', ''गौरनाद्यन्तवती'' ''तत्त्वमसि'', ''अयमात्मा ब्रह्म'', ''सर्वं खल्विदं ब्रह्मेति'' भेदप्रतिपादिका अभेदप्रतिपादिकाश्च श्रुतयस्सन्ति, ताभिश्चेतनाचेतनयोः ब्रह्मणा सह स्वाभाविकभेदाभेदसंसर्गः प्रतिपाद्यते । केवलभेदवादावलम्बनेऽभेदप्रतिपादकश्रुतीनां दुर्बलत्वं वाच्यम् । केवलाभेदवादिनां मते भेदप्रतिपादकवचनानां बाधः प्रसज्येत । न चोभयेषां वचनानां प्रतिबध्यप्रतिबन्धकभावः कल्पयितुं शक्यते, तुल्यबलत्वादित्याशयेनोक्तां शङ्कां परिहरति । **नेति** । तेषाम् = केवलद्वैतप्रतिपादकवचनानां केवलाद्वैतप्रतिपादकवचनानाञ्च । **एकतरबाधं विनेति** । भेदप्रतिपादकवक्यानां बाधमन्तरा केवलाभेदवादोऽभेदप्रतिपादकवचनानां बाधं विना केवलभेदवादश्च न सिद्ध्यतीत्यर्थः ।

---

इसको केवलद्वैत-केवल अद्वैत का ब्रह्म में निषेध नहीं किया जा सकता है; क्योंकि भेदाभेदप्रतिपादकश्रुतियों द्वारा जीवब्रह्म का भेदाभेदसम्बन्ध सिद्ध है ।

**भेदप्रतिपादकश्रुतियां**— ''सैन्धवघनोऽनन्तरोऽबाह्यः'' ''अणुर्ह्येष आत्मा पापञ्च'' ''वालाग्रशतभागस्य......स चानन्त्याय कल्प्यते'' इत्यादि ।

**अभेदप्रतिपादकश्रुतियां**—''तत्त्वमसि'' 'अयमात्माब्रह्म' ''सर्वं खल्विदं ब्रह्म'' इत्यादि । द्वैतविषयक-अद्वैतविषयक उभयविध वाक्यों का शास्त्र में रहने पर भी उन वाक्यों का परस्पर बाध्य-बाधकभाव नहीं होता है, क्योंकि वे तुल्यबल है, एकतर के बाध के बिना एकतर की सिद्धि नहीं हो सकती। इस प्रकार केवलद्वैतवादी के द्वारा केवलभेद की सिद्धिहेतु नैयायिक के समान ब्रह्म की जगत् के प्रति उपादान कारणता नहीं मानी जाती है, किन्तु निमित्तकारणतामात्र स्वीकार की जाती है ।

**एवञ्च केवलद्वैतवादिभिस्तादृशभेदसिध्यर्थं नैयायिकवद् ब्रह्मणो जगदुपादानत्वं नाङ्गीक्रियते, किन्तु निमित्तत्त्वमात्रमेवेति। तथा सति तन्मते, सदेव सोम्येदमग्र आसीत् छा० ६।२।१। एकमेवाद्वितीयम्, छा० ६।२।१ तदैक्षत बहु स्यां प्रजायेय, छा० ६।२।३।**

---

केवलभेदवादिनो ब्रह्मण उपादानकारणं नानुमन्यन्ते किन्तु वैशेषिकादिवन्निमित्तकारणत्वमेवेति तन्मतं निरसयितुमनूद्यति–**एवञ्चेति**तादृशभेदसिद्ध्यर्थमिति। विश्वब्रह्मणोरत्यन्तभेदसिद्ध्यर्थमन्यथा तयोरभेदः सिद्ध्येतेत्यर्थः। तथा सति = विश्वं ब्रह्मणो निमित्तकारणत्वाभ्युपगमे। तथा सति, इत्यादिश्रुतीनां बाधो जायत इति योजना। तन्मते = अत्यन्तभेदवादिमते। **सदेवेति**। 'इदम्' शब्दवाच्यस्य कार्यजातस्य जगतः सच्छब्दवाच्ये कारणेऽतिसूक्ष्मत्वेन सत्त्वेऽपि नामरूपविभागाभावेन पृथग्ग्रहणानर्हत्वात् सदेवेति कारणेनैक्यनिर्देशः सूपपन्नस्तथा चात्र कार्यकारणयोरनन्यत्वाभिधानाद्विश्वं प्रति ब्रह्मणः कारणत्वमभिहितम्। "तदैक्षत बहु स्यां प्रजायेय" इति। बहुभवनसङ्कल्पवत्त्वं कारणस्य प्रदर्शितं तस्योपादानकारणत्वं सूचयितुमाह–**बहुस्यामिति**। अहमादौ प्रजायेय = देवमनुष्यादिरूपेण प्रादुर्भवामि। नियम्यं जगच्च स्यात् तदनन्तरं त्यदादिशब्दवाच्यब्रह्मादिजगन्नियामकतया अहं बहुरूपः स्यामित्यर्थः।

---

यदि केवलद्वैत की सिद्धि नैयायिक के समान द्वैतवादी द्वारा स्वीकार किया जाय तो अद्वैत प्रतिपादकश्रुतियों का बाध हो जायेगा। जैसे–सदेव सोम्येदमग्र आसीत्

"एकमेवाद्वितीयम्"। "तदैक्षत बहुस्यां प्रजायेय"।

"नामरूपे व्याकरवाणि"। "अयमात्मा ब्रह्मम" इत्यादि।

'इदम्' शब्द से वाच्य सम्पूर्ण जगदात्मक कार्य का सत् शब्द से वाच्य कारण में अतिसूक्ष्मरूपसे रहने पर भी नामरूप विभाग के अभाव होने से पृथक् ग्रहण करने के योग्य सृष्टि के आदि में नहीं था। कारण के साथ कार्य का ऐक्य निर्देश होने से कार्य-कारण का अनन्यत्व का अभिधान होने से ब्रह्म की जगत् के प्रति कारणता की सिद्धि होती है। ब्रह्म के बहुभवन-सत्यसंकल्प की सिद्धि होने पर भी "प्रजायेय" इस अंश से ब्रह्म की उपादानकारणता प्रतिपादित है। मैं सृष्टि के आदि में देवमनुष्यादि रूप से प्रादुर्भूत होऊँ।

मुझसे निमम्य जगत् हो, इसके अनन्तर आदिशब्दवाच्य-ब्रह्मादिजगन्नियामकरूप बहुरूप हम हो जावें। नाम रूप से व्याकरण ही संकल्प है। जगन्नियामकरूप से स्वयं भी बहुरूप होकर सृष्टजगत् में प्रवेश किये। सर्वव्यापक ब्रह्म की सब वस्तुओं में पुष्कल प्रतीति के योग्य स्थितिविशेष को अनुप्रवेश कहते हैं।

सच्च-चेतन, त्यच्च-विकारास्पद अचेतन, ब्रह्म ही चेतनाचेतननामभाक् होता है।

**नामरूपे व्याकरवाणि, छा० ६।३।२। त्रिवृतं त्रिवृतं करवाणि। छा० ६।३।३। तत्सृष्ट्वा तदेवानुप्राविशत् सच्च त्यच्चाभवत्। तै० २।६।१। आत्मैवेदं सर्वम्। छा० ७।२६।१। सर्वं खल्विदं ब्रह्म। छा० ६।१४।१ तज्जलानिति शान्त उपासीत। छा० ३।१४।१। अयमात्मा ब्रह्म। मा० १।२, ऐतदात्म्यमिदं सर्वम्। छा० ६।८।६ इत्यादिश्रुतीनाम्।**

---

ईक्षणं निर्वक्ति-**नामरूप इति**। नामरूपव्याकरणं सङ्कल्पः। तत् सृष्ट्वा तदनुप्राविशत् = तन्नियामकतया स्वयमपि बहुरूपो भूत्वा सृष्टं तदेव जगदनुप्राविशत्। सर्वव्याप्तस्य ब्रह्मणः सर्ववस्तुषु पुष्कलप्रतीत्यर्थस्थितिविशेष एवानुप्रवेशः। सच्च = चेतनम्। त्यच्च = विकारास्पदमचेतनम्। अभवत् = ब्रह्मैव चेतनाचेतननामरूपभाग् भवतीत्यर्थः। आत्मैवेदम्। इदं जगन्नामरूपात्मकं ब्रह्मात्मकमित्यर्थः। सर्वं खल्विदमिति। समस्तमिदं परिदृश्यमानं जगन्नामरूपात्मकं ब्रह्मात्मकं कथं सर्वस्य जगतो ब्रह्मात्मकत्वमभ्युपेयत इत्यत आह-**तज्जलानिति**। तस्माद् ब्रह्मणो जातं तज्जं तथा तस्मिन्नेव लीयतेऽतस्तल्लं तथा तस्मिन्नेव स्थितिकालेऽनति प्राणिति चेष्टतेऽतोऽनित्यर्थः। तज्जत्वात्, तल्लत्वात्, तदनत्वाच्च सर्वं विश्वं ब्रह्मात्मकं तेन ब्रह्माभिन्नमिदं सर्वं जगत्स्वरूपेण भिन्नमितरेतरात्यन्तविलक्षणत्वादिति भावः। इति-एवंरूपेण शान्तः, भगवन्निष्ठधीस्सन् उपासीत। **अयमात्मेति। ऐतदात्म्यमिति।** ब्रह्मव्याप्यत्वेन ब्रह्मात्मकमित्यर्थः। एताभिः श्रुतिभिः विश्वं प्रति ब्रह्मणो जगदुपादानत्वमुपदिष्टं तस्य निमित्तकारणत्वाभ्युपगमे तु तासां व्याकोपः स्यात्।

---

यह नामरूप जगत् ब्रह्मात्मक है। जगत् के ब्रह्मात्मकत्वहेतु निर्देशपूर्वक प्रतिपादन करते हैं— उस ब्रह्म से उत्पन्न होने से जगत् तज्ज है, तथा उसी परमात्मा में लय होने से तल्ल भी है, उसी में ही स्थितिकाल में अनति प्राणिति चेष्टा करने से अनिति कहा जाता है, तज्जत्वात् तल्लत्वात् तदनत्वाच्च सम्पूर्ण विश्व ब्रह्मात्मक है, ब्रह्मात्मक ये जगत् स्वरूप से भिन्न हैं, अर्थात् परस्पर अत्यन्त विलक्षण है। एवंभूत ब्रह्म को शान्त होकर चिन्तन करें।

यह आत्मा ब्रह्म से भिन्नाभिन्न है, ऐतदात्म्य-ब्रह्म से व्याप्य होने के कारण-ब्रह्मात्मक है। इन श्रुतियों द्वारा विश्व के प्रति ब्रह्म की जगदुपादानकारणता की सिद्धि होती है। निमित्तकारणता स्वीकार करने पर इन श्रुतियों के व्याकोप की आपत्ति होगी।

श्रुतिप्रमाण द्वारा ब्रह्म का जगत् के प्रति अभिन्ननिमित्तोपादानकारणता का निर्णय करके वादरायणसूत्रों द्वारा जगदुपादानकारणता का प्रतिपादान करते हैं- 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्। प्रतिज्ञा और दृष्टान्त के अनुपरोध से प्रकृति-उपादान, जैसे-प्रतिज्ञा-"उत तमादेश........विज्ञातम्"। इस प्रकार उपादान कारण के विज्ञान से सब कार्य का विज्ञान हो जाता है। यतः कार्य उपादनकारण से अनतिरिक्त होता है।

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ब्र० सू० १।४।२३। इत्यादिसूत्राणाम्।**

श्रुतिमुखेन ब्रह्मणो जगदभिन्ननिमित्तोपादानकारणत्वं निर्णीय सम्प्रति बादरायणसूत्रैरुपादानकारणत्वं तस्य निर्दिशति–**प्रकृतिश्चेति**। प्रकृतिरुपादानं निमित्तञ्च ब्रह्मैव कुत **प्रतिज्ञेति**। प्रतिज्ञा च "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति, अमतं मतमविज्ञातं विज्ञातमित्युपादान-कारणविज्ञानेन सर्वकार्यविज्ञानविषया, कार्यस्य तदनतिरिक्तत्वात्"। दृष्टान्तोऽपि यथा–सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिरूपः। उपादानत्वे सत्येव सर्वविज्ञानप्रतिज्ञामृत्पिण्डादिदृष्टान्तौ नोपरुध्येयाताम्। न च कुलालमृत्पिण्डन्यायेन निमित्तोपादानभेदश्शङ्कनीयस्तत्र हि निमित्तोपादानाभेदग्राहक-प्रमाणाभावात् तद्भेद इह तत्प्रमणे जाग्रति कथमभेदो न स्यात्। "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्"इति सृष्टेः प्राठोकत्वावधारणात् अद्वितीयपदेनाधिष्ठानान्तराभा-वज्ञापनाच्चेत्यर्थः। हेत्वन्तरेणापि निमित्तोपादानोभयरूपत्वमवगम्यत इत्याह–

---

एवं दृष्टान्त भी—हे सोम्य ! एकमृत्पिण्ड के ज्ञान से मृत्पिण्ड से बने हुए सब कार्यों का ज्ञान हो जाता है, उपादानकारणता के रहने पर ही 'सर्वविज्ञानप्रतिज्ञा मृत्पिण्डादिदृष्टान्तौ भवतः' अन्यथा बाधित हो जायेंगे।

यहां 'कुलालमृत्पिण्डन्याय' से निमित्तोपादान के भेद की शंका नहीं करनी चाहिये–यहां पर निमित्तोपादानाभेदग्राहक प्रमाण के अभाव होने से घट कार्यस्थल में निमित्तकारण और उपादान कारण में भेद है, किन्तु प्रकृतस्थल में श्रुतियों के प्रमाण से अभेद की सिद्धि में कोई विवाद नहीं है।

दूसरे हेतु द्वारा भी ब्रह्म के अभिन्ननिमित्तोपादानकारणता की सिद्धि होती है।

जैसे–"आत्मकृतेः परिणामात्" "तदात्मानं स्वयमकुरुतेति" इस श्रुति द्वारा ब्रह्म का सृष्टि में कर्तृ-कर्म भाव का श्रवण होने पर ब्रह्म के निमित्तोपादानोभयरूपत्व का निश्चय होता है। "तदात्मानम्" यहां पर द्वितीया का अर्थ है— कृतिविषयता, स्वयमिति-कृतिमत्व अर्थ है। क्योंकि आत्मकृति से आत्मसम्बन्धिनी कृति विवक्षित है। सम्बन्ध पद से विषयविषयीभाव सम्बन्ध विवक्षित है, कृति से कारण गृहीत है। कार्यकारण का तादात्म्य होने से अव्यक्तरूप कर्तृत्व और व्यक्तनामरूप से ब्रह्म का कर्मत्व है।

आत्मा जगत् का कर्त्ता है, यह पूर्व सिद्ध है। वह कृति का कर्म कैसे हो सकता है ? ऐसी शंका होने पर समाधान हैं–"परिणामात्"। परिणाम दो प्रकार का होता हे–(१) स्वरूप परिणाम (२) शक्तिविक्षेपलक्षण परिणाम।

प्रथम–ब्रह्म से अनधिष्ठित स्वतन्त्रप्रकृतिस्वरूप परिणामवाद सांख्यों का है।

**आत्मकृते: परिणामात्। ब्र० सू० १।४।३६।**

**तदनन्यत्वमारम्भणशब्दादिभ्य: ब्र०सू० २।१।१४। अहं सर्वस्य प्रभवो**

---

**आत्मकृतेरिति**। "तदात्मानं स्वयमकुरुतेति"। सृष्टौ तस्यैव कर्तृकर्मभावश्रवणादपि तस्य निमित्तोपादानोभयरूपवत्त्वमवसीयते, तदात्मानमिति द्वितीयया कृतिविषयत्वं स्वयमिति कृतिमत्वं प्रतीयते। कुत:? आत्मकृते:। आत्मसम्बन्धिनी कृतिरात्मकृति:, सम्बन्धो विषयविषयिभाव:। कृति: कारणं तस्मादित्यर्थ:। तत्राव्यक्तरूपेण कर्तृत्वं व्यक्तनामरूपत्वेन च कर्मत्वं कार्यकारणयोस्तादात्म्यात्।

नन्वात्मन: कर्तृत्वेन पूर्वसिद्धस्य कथं पुन: कृतिकर्मत्वमत आह–**परिणामादिति**। परिणामो द्विविध: स्वरूपपरिणाम:, शक्तिविक्षेपलक्षणपरिणामश्च। तत्राद्यो ब्रह्मानधिष्ठितस्वतन्त्रप्रकृतिस्वरूपपरिणामवादोऽयं साङ्ख्यानां सिद्धान्त:, द्वितीयश्चौपनिषदानाम्। तथा च सर्वज्ञत्वाचिन्त्यानन्तशक्त्यादिनिलय: परब्रह्म श्रीपुरुषोत्तम: स्वात्मकस्वाधिष्ठितनिजशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणामयति। यथाऽप्रच्युतस्वरूपादिभ्य एवाकाशोर्णनाभ्यादिभ्य: शब्दवाय्वादेस्तन्त्वादेश्च जन्मादिकम्। यथा वाऽप्रच्युतस्वरूपवान्मनस: कामक्रोधलोभमोहादीनां परस्परविलक्षणानां समुद्रादुर्मीणाञ्चोद्भवनं प्रत्यक्षागमादिमानसिद्धं तेषां तादृशपरिमितशक्तियोगादेव। एवमचिन्त्यानन्तस्वाभाविकशक्तियोगादब्रह्मणोऽपि निर्विकारादप्रच्युतस्वरूपाज्जन्मादिकं बोध्यम्। "परास्य

---

द्वितीय परिणाम औपनिषदों का है, जो उपनिषद् को प्रमाण मानते हैं। सर्वज्ञत्व-अचिन्त्य-अनन्तशक्त्यादि के समुद्र परब्रह्म श्रीपुरुषोत्तम स्वात्मक-स्वाधिष्ठित अपनी शक्ति के विक्षेप द्वारा जगदाकार रूप में अपने को परिणत करते हैं।

जैसे–अपने स्वरूप अच्युत होते हुए आकाश से शब्द, वायु आदि, और उर्णनाभि (मकड़ी) से तन्त्वादि का जन्म होता है।

अथवा–परिमित शक्तियोग से अप्रच्युत स्वभाववाले मन से काम-क्रोध-लोभ-मोह परस्पर विलक्षणों का उद्भव है, तथा समुद्र से ऊर्मियों (तरङ्गों) की उत्पत्ति होती है। यह प्रत्यक्ष आगम से सिद्ध है। एवम् अचिन्त्यअनन्तस्वाभाविकशक्ति के योग द्वारा निर्विकार अप्रच्युतस्वरूपब्रह्म से जगत् का जन्म-स्थिति-लय होते हैं।

"परास्य शक्तिर्विविधैव श्रूयते–स्वाभाविकी ज्ञानबलक्रिया च" "शक्तय: सर्वभावानामचिन्त्या: ज्ञानशक्तय:" इत्यादि श्रुति-स्मृति इसमें प्रमाण हैं।

जगत् के ब्रह्म से अनन्यता में "तदनन्यत्वमारम्भणशब्दादिभ्य:" ब्रह्म सूत्र भी प्रमाण है।

ब्रह्म की अनन्यता तथा अपृथक् सिद्धता में–"विकारो नामधेयं मृत्तिकेत्येव सत्यम्" 'सदेव सोम्येदमग्र आसीत्', 'एकमेवाद्वितीयं ब्रह्म' "येनाश्रुतं भवति" श्रुतियां प्रमाण हैं।

अहं सर्वस्य......प्रवर्तते। गीता १०।८।

**मत्तः सर्वं प्रवर्तते। गी० १०।८। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।गी० ७।७।**

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।। गीता० ।७।१९।**

---

शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "शक्तयस्सर्वभावानामचिन्त्याः ज्ञानशक्तय:" इत्यादिश्रुतिस्मृतयोऽत्रानुसन्धेयाः । **तदनन्यत्वमिति** । तस्मात्कारणाद् ब्रह्मणोऽनन्यत्वं तदात्मकत्वादिनाऽपृथक्सिद्धत्वं कार्यस्य जगतः, तत्र प्रमाणमाह- "आरम्भणशब्दादिर्येषाम् । विकारो नामधेयं मृत्तिकेत्येव सत्यम् "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं ब्रह्म, येनाश्रुतं श्रुतं भवतीति वाक्येभ्यः प्रमाणेभ्यः" इत्यर्थः । **अहमिति** अहम् = जिज्ञास्यभूतजगज्जन्मादिलक्षणलक्षितपरब्रह्मस्वरूपः । सर्वस्य = ब्रह्मादिस्थावरान्तस्य जगतः । प्रभवः = उत्पत्तिकारणम् । सर्वस्याश्रयोऽप्य-हमेवेत्याह-**मयीति** । सर्वमिदम् = चिज्जडजातं जगत् । मयि = सर्वस्यात्मतयाऽवस्थिते मयि । प्रोतम् = आश्रितम् । तत्र दृष्टान्तः-**सूत्रे मणिगणा इति** । यथा मणीनां स्थितिप्रवृत्ती सूत्राधीने तथा सर्वस्य स्थितिप्रवृत्ती मदधीने । "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ।। इति श्रुतेः "बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या। चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् इतिस्मृतेश्च ।

**बहूनामिति** । न ह्यल्पसुकृतजन्मना मत्प्रपत्तिरिष्टा भवति किन्तु बहूनां पुण्याचारविशिष्टजन्मनामन्तेऽपरजन्मनि ज्ञानवान्मां प्रपद्यते । साधनफलसम्बन्धरूपं निश्चित्य

---

अहम्-जिज्ञास्यभूत-जगज्जन्मादिलक्षणलक्षित परब्रह्म से ब्रह्मादि स्थावरान्त सम्पूर्ण चराचरात्मक जगत् उत्पन्न होता है, अतः मैं ही उत्पत्ति का कारण हूँ।

मयि......मणिगणा । गीता ७।७।

चिदचिदात्मक यह सम्पूर्ण जगत् सर्वात्मरूप से अवस्थित मुझ में आश्रित है, जैसे-मणियों की स्थिति और प्रवृत्ति सूत्र के अधीन होती है, उसी प्रकार सम्पूर्ण जगत् की प्रवृत्ति और स्थिति मेरे अधीन होती हैं । "यत्किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयते वा-अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" यह श्रुति बुद्धिर्मनो महद्वायुस्तेजोऽऽरम्भः रवं मही च या । चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम्" यह स्मृति भी कृष्ण के जगदाधारत्व में प्रमाण है ।

भगवान् कहते हैं कि-अल्पसुकृतविशिष्टप्राणी की मत्प्रपत्तिनिष्ठा नहीं होती है, किन्तु बहुजन्म के पुण्याचार से विशिष्ट ज्ञानवान् प्राणी अन्त के चरमजन्म में मुझे प्राप्त करते हैं । तथा साधन-फल-सम्बन्ध का निश्चय करके निरतिशय प्रेमपूर्वक

**सकलमिदमहञ्च वासुदेवः परमपुमान् परमेश्वरः स एकः ।**
**इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।**
**वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ।। महाभा०अनुशा०प० ।**

**क्षेत्रज्ञं चापि मां विद्धि । गी० १३।२ इत्यादिस्मृतीनाञ्च सर्वोपादानत्वसर्वात्मत्वप्रतिपादकानाञ्च बाध एव जायते । किञ्च ब्रह्मणो निमित्तमात्रत्वाङ्गीकारे श्रुत्युक्तयोः प्रतिज्ञादृष्टान्तयोरपि बाधो निश्चितो भवति । प्रतिज्ञादृष्टान्तौ यथा "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातम् । इति" प्रतिज्ञा । यथा सोम्यैकेन**

निरतिशयप्रेम्णा भजते । ज्ञानस्य स्वरूपमाह–**वासुदेव इति** । "सर्वं खल्विदं ब्रह्म", "तज्जलानिति शान्त उपासीत" इति श्रुतेर्यथा तज्जत्वात्तल्लत्वात्तदनत्वात्सर्वस्य जगतो ब्रह्मत्वं तथा "योऽयं तवागतो देवसमीपं देवतागणः । स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ।। सर्वगतत्वादनन्तस्य स एवाहमवस्थितः" इत्यादिवाक्येभ्यो वासुदेवस्य सर्वगतत्वात् सर्वरूपत्वमित्येवम्भूतज्ञानवान्स महात्मा महाविवेकसम्पन्न आत्मा बुद्धिर्यस्यातः सुदुर्लभमनुष्याणां कोटिष्वपि कश्चिदेव स्यादिति भावः ।

**क्षेत्रज्ञमिति** । पूर्वम् अहं कृत्स्नस्य जगतः प्रभव इत्यादिना सर्वस्य जगतो मत्तः पृथक् स्थित्यभावेन मदभिन्नत्वं "न चाहं तेष्ववस्थितः" "न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्" "मयाध्यक्षेण प्रकृतिः सूयते सचराचरमित्यादिना मद्भिन्नत्वं चोक्तं ततोऽन्यज्जानासि", "सर्वं समाप्नोषि ततोऽसि सर्वं" इति त्वयाप्युक्तमेव । किन्तु पूर्वाध्याये "ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां

---

मुझको भजते हैं ।

**ज्ञान के स्वरूप** का प्रतिपादन में वासुदेव इति, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत; ये श्रुतियां प्रमाण हैं ।

यथा 'तज्जत्वात् तल्लत्वात्तदनत्वात्' सम्पूर्ण जगत् का ब्रह्मत्व सिद्ध होता है तथैव योऽयं.......तत्रागतो । सत्वमेव जगत्सृष्टा..........सर्वगतत्वादनन्तस्य इत्यादि वाक्यों द्वारा वासुदेव के सर्वगतत्व होने से सर्वरूपता है, ऐसा जानने वाला महात्मा जिसकी बुद्धि महाविवेक सम्पन्न है, सुदुर्लभ हैं ।

आशय यह है कि कोटि मनुष्यों में वह एक है तथा सम्पूर्ण नामरूपात्मक जगत् मुझसे अभिन्न है, अतः परम पुरुष वासुदेव परमेश्वर एक हैं ऐसा मानता है।

इन्द्रिय-मन-बुद्धि-सत्त्व-तेज-बल-धृति ये सभी वासुदेवात्मक हैं एवं क्षेत्र (शरीर) क्षेत्रज्ञ शरीराभिमानी जीव मैं ही हूँ, अन्तर्यामिरूप से इनके भीतर मैं ही वर्तमान हूँ । म. अनुशा. प. । गीता १३।२।

**मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, यथैकेन लौहमणिना सर्वं लौहमयं विज्ञातं स्यादिति दृष्टान्तः । नहि निमित्तमात्रज्ञानेन कार्यजातं विज्ञातं भवतीति शक्यते वक्तुम् । कुलालादिज्ञानेन मृदादिविकारजातवत् सर्वानुभवविरोधात् । उपादानत्वे तु उपादानोपादेययोस्तादात्म्याद्युक्तं तज्ज्ञानेन तज्ज्ञानमिति, ब्रह्मण उपादानत्वाङ्गीकारे च मृद्घटवत् सुवर्णकुण्डलादिवच्च जगद्ब्रह्मणोर-भेदोऽप्यवर्ज्जनीयः ।**

**न च तथात्वे विकारित्वापत्तिरिति वाच्यम् । शक्तिविक्षेपलक्षण-**

---

ध्यायन्त उपासते ।। तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।।'' इत्यादिना पराप्रकृतिभूतस्य जीवपुरुषादिशब्दाभिधेयस्य क्षेत्रज्ञस्य ध्यातृत्वोपासकत्वोद्धार्यत्वेन प्रतीतं केवलभिन्नत्वं न मन्तव्यमपि तु सर्वक्षेत्रेषु देवतिर्य्यङ्मनुष्यादिशरीरेषु क्षेत्रज्ञमपि मां विद्धि । मदात्मकत्वेन मदभिन्नत्वं जानीहि । चशब्देनात्मनस्तद्वैलक्षण्यमपि समुच्चिनोति । मां ततो विलक्षणं च विद्धीत्यर्थः । प्राङ्निर्दिष्टानां श्रुतिसूत्रस्मृतीनां यदि विश्वं प्रति ब्रह्मणो निमित्तकारणत्वमभ्युपेयते, तदा ब्रह्मणो जगदुपादानकारणत्वं सर्वान्तरात्मत्वं प्रतिपादयन्त्यः प्राङ्निर्दिष्टश्रुतिसूत्रस्मृतयो बाध्येरन् । इत्याह–**स्मृतीनाञ्चेति** । प्रकृतिश्चेति सूत्रार्थं स्वयं विवृणोति–**किञ्चेति** । ब्रह्मणो निमित्तकारणत्वमात्राभ्युपगमेऽनुपपत्तिं दर्शयति–**न हीति** । तज्ज्ञानेन = उपादानकारणब्रह्मज्ञानेन । तज्ज्ञानम् = कार्यज्ञानम् । ब्रह्मणो विश्वं प्रत्युपादान-कारणत्वाभ्युपगमे जगद्ब्रह्मणोरभेदः कार्यकारणयोरनन्यत्वादित्याह–**उपादानत्व इति** ।

यदि ब्रह्मण उपादानकारणत्वमुच्यते, तदा ब्रह्मणो विकारित्वापत्तिरित्याशङ्क्य परिहरति–**न चेति** । तथात्वे = ब्रह्मणो विश्वं प्रत्युपादानकारणत्वाभ्युपगमे । परिणामो द्विविधः– प्रकृतिस्वरूपपरिणामः, शक्तिविक्षेपलक्षणो ब्रह्मपरिणामश्चेति । आद्यः साङ्ख्यपक्षः, द्वितीयो ह्यौपनिषदानां सिद्धान्तश्चेत्याशयेनाह–**शक्तिविक्षेपेति** । विक्षेपोऽत्र क्षोभस्तदुक्तं

---

इन स्मृतियों द्वारा बोध्य सर्वोपादानत्व-सर्वात्मत्व ब्रह्म केवल भेदपक्ष में बाधित होगा ।

ब्रह्म का केवल निमित्तकारणत्व स्वीकार करने से प्रतिज्ञा–दृष्टान्त दोनों बाधित हो जायेंगे, क्योंकि श्रुतियों द्वारा अभिन्न निमित्तोपादानकारणता की सिद्धि होती है ।

जैसे–हे सोम्य ! एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, यथैकेन लोहमणिना सर्वलोहमयं विज्ञातं स्यादिति दृष्टान्तः ।

केवल निमित्तकारण के विज्ञान से कार्यमात्र का ज्ञान होता है, ऐसा कथन असंगत है । जैसे केवल कुलालमात्र के ज्ञान से घटादि कार्यमात्र का ज्ञान नहीं होता है, यतः सर्वानुभव का विरोध होगा ।

अभिन्ननिमित्तोपादानकारणत्व स्वीकार करने पर ही उपादानोपादेयों का तादात्म्य

**परिणामाऽङ्गीकारात् । स्वरूपे परिणामाऽनभ्युपगमाच्च । यथोर्णनाभिः** सृजते **गृह्णते च। मु० १।१।७। यथा सतः पुरुषात् केशलोमानि यथा पृथिव्या औषधयः सम्भवन्ति तथाऽक्षरात् सम्भवतीह विश्वम् । मु० १।१।७** इति **श्रुतेः ।**

**प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः ।**

---

पराशरेण—"प्रधानं पुरुषञ्चापि प्रविश्यात्मेच्छया हरिः । क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाऽव्ययौ", इति पदार्थभावानां शक्तयो न केनापि प्राकृतबुद्धिनाऽवच्छेत्तुं शक्याः तर्काणामप्रतिष्ठितत्वेनास्माकमौपनिषदानां श्रौतस्येव सिद्धान्तस्याश्रयणीयत्वादिति भावख्यापनाय दृष्टान्तगर्भितवाक्यमाह–**यथोर्णनाभिरिति** । यथोर्णनाभेरूर्णाप्रसारणा-कुञ्चनोभयार्हतालक्षणशक्तिमत ऊर्णाविर्भावतिरोभावौ तदप्रच्युतस्वरूपतयैव भवतः । यथा च पुरुषादन्नमयात् तन्मात्रशक्तिमतः केशलोमानामुत्पत्तिमात्रकार्यसिद्धिः । यथा च भूमेस्तथाभूतशक्तिमत्या औषधीनां जन्ममात्रम् । तथा सर्वकार्योत्पादनलक्षणाचिन्त्यानन्त-सर्वशक्तेरक्षरपदार्थाद् ब्रह्मणो विश्वं भवतीति भावः । यदा स्वस्वस्वाभाविकाल्पाधिक-सातिशयशक्तिमद्भ्योऽचेतनेभ्यस्तच्छक्त्यनुसारेण स्वस्वकार्यभावापत्तावप्यप्रच्युतस्वरू-पत्वाभावाभावः प्रत्यक्षगोचरत्वेनापह्नोतुमशक्यस्तर्ह्यचिन्त्यविश्वाख्यकार्योत्पादनार्हशक्तिमतो भगवतो जगदुत्पत्तावप्यप्रच्युतस्वरूपत्वं किमशक्यमिति श्रुतेर्ध्वनितार्थः ।

उक्तार्थं स्मृतिप्रमाणेनापि द्रढयति–**प्रसार्य चेति** । केवलभेदवादिमते दोषान्तरमाह–**अपि चेति** । जीवब्रह्मणोरत्यन्तभेद इति ये मन्यन्ते, तेषां मते प्राङ्निर्दिष्टानां

---

हो सकता है, तथा अनुभव विरोध भी नहीं होगा । एवं उपादान कारण के ज्ञान से कार्यमात्र का ज्ञान हो जायेगा । ब्रह्म के उपादानकारणत्व के अङ्गीकार करने पर मृद्घट के सदृश सुवर्णकुण्डलादि के तुल्य जगद् ब्रह्म का अभेद भी अवर्जनीय है ।

ब्रह्म के उपादानकारणता पक्ष में ब्रह्म के विकारित्व की आपत्ति होगी, यह नहीं कह सकते, शक्तिविक्षेपलक्षणपरिणाम के अङ्गीकार करने से ब्रह्म के स्वरूप में परिणाम को सिद्धान्त पक्ष में स्वीकार नहीं किया जाता है । जैसे–ऊर्णनाभि (मकड़ी) स्वस्वरूप से च्युत न होती स्वशरीर से तन्तुओं की सृष्टि करती है, और खा भी जाती है, मु. १।१।७।

जैसे–सत् पुरुष से केशलोमादि की उत्पत्ति होती है, पृथिवी से ओषधियां उत्पन्न होती हैं, उसी प्रकार अक्षर-नाश-प्रागभाव के प्रतियोगी विश्व की उत्पत्ति परमात्मा से होती है ।

जैसे–कूर्म अपने अङ्गों को प्रसार कर पुनः उनका संहरण कर लेता है, उसी

**तद्वद् भूतानि भूतात्मा सृष्टानि ग्रसते पुनः (भारते, शा०प०अ० ३२६ श्लोकः ३९।) इति भीष्मवाक्याच्च ।**

**अपि चात्यन्तभिन्नयोरभेदासम्भवाच्चिदचितोर्ब्रह्मतादात्म्यप्रतिपादक-मुक्तशास्त्रविरोधादेव परित्यक्तं स्यात् । किञ्च "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेत्यादिना" ब्रह्मणोऽन्यपदार्थस्यात्यन्तभिन्नज्ञातुर्निन्दाश्रवणादतः केवलद्वैतवादमतमसङ्गतमिति निश्चीयते । तथैव केवलाद्वैतवादिमतमसङ्गतम् ।**

---

जीवब्रह्मणोरभेदप्रतिपादकानां वचनानां बाधः प्रसज्येत इति भावः । अत्यन्तभेदवादिनां मतं श्रुतिनिन्द्यमित्याह–**किञ्चेति । सर्वमिति** । यः चिदचिदात्मकं निखिलं वस्तु ब्रह्मणोऽत्यन्तभिन्नं वेद, तं सर्वं परादात् = अविभवेत् । संसारयति सर्वस्य ब्रह्मात्मकत्वेन तदभिन्नत्वादित्यर्थः । इति केवलभेदवादस्य निरसनम् । सम्प्रति केवलाभेदवादं दूषयितुमाह–**तथैवेति** । तन्मतमनूद्यते–**तथा हीत्यादिना** । भेदः प्रतियोगिभेदेन त्रिविधः, सजातीयप्रतियोगिको, विजातीयप्रतियोगिकः, स्वगतप्रतियोगिकश्च । परमात्मनि जीवात्मनः सकाशाद्विद्यमानो भेद आद्यः । आकाशादिभ्यः सकाशाद्विद्यमानो भेदो द्वितीयः । स्वगतेभ्यः कारुण्यादिगुणेभ्यः सकाशाद्विद्यमानो भेदस्तृतीयः । एवं प्राप्तं भेदत्रयम् "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयमिम्'इत्यादिश्रुतिभिर्निषिध्यते–परमार्थतः सत्यः पदार्थ, एक एवात्मा । एष एव ब्रह्मशब्देन चोच्यते, स च निर्विशेषः । कथमपीदृशस्तादृश इति

---

प्रकार ब्रह्म अपनी शक्ति द्वारा जगत् की सृष्टि और संहार भी करता है ।

अतः कार्य जगत् के साथ भेदाभेद सम्बन्ध परमात्मा का है, न केवल भेद है, न केवल अभेद है, किन्तु भेदाभेद है ।

यदि भेद स्वीकार करेंगे तो अभेदप्रतिपादक श्रुतियों का बाध होगा ।

यदि केवल अभेद मानेंगे तो भेदप्रतिपादक श्रुतियों का विरोध होगा । अतः दोनों प्रकार की श्रुतियों का समन्वय करने के लिये भेदाभेद पक्ष ही स्वीकार करना श्रेयस्कर है । किञ्च–"सर्वं तं परादाद्योऽन्यत्रात्मनः" इति–श्रुति से अन्यपदार्थ ब्रह्म को जाननेवाले पुरुष की निन्दाबोधित है, इसलिए केवलवाद असङ्गत है ।

इस श्रुति का अर्थ यह है कि चिदचिदात्मक सम्पूर्ण वस्तु ब्रह्म से अत्यन्त भिन्न ऐसा समझने वाला निन्द्य है । इस जगत् को ब्रह्म से अत्यन्त भिन्न समझनेवाला व्यक्ति तिरस्कृत हो जाता है । अतः सम्पूर्ण जगत् ब्रह्मात्मक होने से ब्रह्म से अभिन्न है, यह सिद्ध होता है ।

**तथा हि—सजातीयविजातीयस्वगतभेदशून्यं सर्वधर्मविनिर्मुक्तं शुद्धं मुक्तस्वरूपं चिन्मात्रं वस्तु परमार्थं नान्यदिति तेषां मतम् । तदनुपपन्नम्, विकल्पाऽसहत्वात् । तद्यथा, उक्ताद्वितीयनिर्विशेषवस्तुन: सत्त्वे किञ्चित्प्रमाणमस्ति न वेति वक्तव्यम् । नाद्यो वक्तुं शक्य: । तत्र न तावत् प्रत्यक्षमतीन्द्रियत्वात्तस्य ।**

**नाप्यनुमानं लिङ्गशून्यत्वात् । 'नेन्द्रियाणि नानुमानमिति' श्रुते: । नापि**

---

वक्तुं न शक्यत इति मायावादिनां मतमनूद्यते—**सजातीयेति** । सर्वधर्मविनिर्मुक्तम् = सर्वे ये धर्मा ह्रस्वत्वदीर्घत्वादय:, शब्दस्पर्शादयो, नित्यत्वज्ञातृत्वादयश्च तैर्विनिर्मुक्तं तद्रहितम् । सकलविशेषरहितमिति यावत् । चिन्मात्रम् = स्वयंप्रकाशज्ञानमात्रस्वरूपं ब्रह्मैकमेव पदार्थ: । तच्च ब्रह्म नित्यमविनाशि शुद्धं, निर्मलं, बुद्धमजडं, मुक्तं, प्रपञ्चरहितमित्यर्थ: । तेषाम् = मायावादिनाम् । तन्मतं निरस्यति—**तदनुपपन्नमिति** । तत्र हेतुमाह—**विकल्पेति** । सर्वप्रमाणस्य सविशेषविषयतया निर्विशेषवस्तुनि न किमपि प्रमाणमस्तीत्याशयेनाह—**तद्यथेति** । तत् = विकल्पासहत्वम् । यथा = येन प्रकारेण । प्रकारं निर्वक्ति—**उक्तेति** । सजातीयादिभेदशून्यं तदर्थ: । ब्रह्मणि प्रमाणमस्तीति प्रथमविकल्पं निरस्यति—**नाद्य इति** । तत्र = निर्विशेषे ब्रह्मणि निर्विशेषस्य ब्रह्मणश्चक्षुरादीन्द्रियग्राह्यत्वाभावान्न प्रत्यक्षविषयत्वमित्याह—**न तावदिति** । तस्य = निर्विशेषस्य ब्रह्मण: । **अतीन्द्रियत्वादिति** ।

एतदुक्तं भवति—इन्द्रियार्थसन्निकर्षजन्यज्ञानस्य प्रत्यक्षत्वमिति निर्विवादस्तथा चेन्द्रियार्थत्वाभावेन तत्सन्निकर्षानर्हस्य वस्तुन:सन्निकर्षाभावेन सुतरां तज्जन्यत्वाभाव इति । तथा च प्रयोगो न प्रत्यक्षप्रमाणवेद्यं ब्रह्म, अतीन्द्रियत्वात् । परमाण्वादिवत् । उक्तप्रयोगे दृष्टान्तीकृतानां परमाण्वादीनां प्रत्यक्षानर्हत्वेऽप्यनुमानगम्यत्वात्तथा-ब्रह्मणोऽप्यतीन्द्रियत्वा-विशेषादनुमानगोचरत्वमस्त्विति शङ्कां वारयन्नाह—**नापीति** ।

---

अत: केवल अद्वैतवाद भी असङ्गत है । सजातीय-विजातीय-स्वगतभेदशून्यत्व ही अभेद है, क्योंकि "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्यादि श्रुतियां अभेद में प्रमाण हैं, किन्तु केवल अभेद अङ्गीकार पक्ष में द्वैत प्रतिपादक श्रुतियों का बाध होकर, भेदाभेद पक्ष ही श्रेष्ठ है यह फलितार्थ हुआ ।

विकल्पासहत्व हेतु के द्वारा अद्वितीय निर्विशेष ब्रह्म की अद्वैतियों की सिद्धि नहीं हो सकती ।

लक्षणप्रमाण द्वारा ही किसी वस्तु की सिद्धि होती है, इसके अनुसार अद्वितीय निर्विशेष ब्रह्म की सिद्धि में कोई प्रमाण है, कि नहीं? ऐसा विकल्प यहां उपस्थित होता है ।

निर्विशेष ब्रह्म अतीन्द्रिय होने से प्रत्यक्षप्रमाण द्वारा ब्रह्म की सिद्धि नहीं हो सकती ।

**शब्दः । शब्दवृत्त्यविषयत्वात् । तत्र न तावच्छक्तिविषयत्वं जातिगुणाकारप्रकृतिप्रत्ययाद्यर्थाविषयत्वात् । नापि लक्षणाविषयत्वं सम्बन्धशून्यत्वात् । असङ्गो ह्ययं पुरुष इति श्रुतेः। बृ. ४।३।१५।**

---

श्रुतिमूलकत्वाभावेनानुमानस्याद्धप्रमाणत्वात्रानुमानम्यत्वं ब्रह्मणः, "श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च" इत्यादिस्मृतेः । उक्तप्रत्यक्षस्य प्रकृतस्यानुमानस्य च निषेधपरं श्रुतिवाक्यमाह–**नेति** । शब्दगोचरत्वमपि ब्रह्मणो नास्तीत्याह–**नापीति** । तत्र हेतुमाह–**शब्देति** । शब्दस्य शक्तिर्लक्षणाव्यञ्जनेतिवृत्तेस्त्रैविध्यमाचक्षते । तत्राद्यां वृत्तिमपाकरोति–**तत्र न तावदिति** । तत्र = ब्रह्मणि । जातिगुणक्रियासंज्ञाभेदेन चतुर्विधाः शब्दाः प्रवृत्तिनिमित्तभेदेन चैतच्चातुर्विध्यम् । जातिप्रवृत्तिनिमित्तकशब्दो जातिशब्दः । एवं गुणप्रवृत्तिनिमित्तकः शब्दो गुणशब्दः । न तावद् गौरित्यादिवज्जात्या ब्रह्म निर्देष्टुं शक्यम्, एकत्वात् तस्य जातिबाधकत्वात्,"एको देवः सर्वभूतेषु गूढः", "एकमेवाद्वितीयं ब्रह्म"त्यादिश्रुतेः । नापि शुक्ल इत्यादिवद्गुणवत्तया निर्देष्टुं शक्यम् । निर्गुणत्वात्तस्य "केवलो निर्गुणश्च" (श्वे॰६।११) इति श्रुतेः । नापि डित्थ इत्यादिवद्द्रव्यस्वरूपेण निर्देष्टुं शक्यः, अव्यक्तत्वात् । नापि चलतीत्यादिक्रियानिर्देशेन, विभुत्वेन निष्क्रियत्वात्, "निष्कलं निष्क्रियं शान्तम्", श्वे॰६।१९। इत्यादिश्रुतेः । तस्मान्न रूढेर्ब्रह्मविषयकत्वमिति भावः । नापि योगस्य तत्र प्रवृत्तिसम्भवः, तस्य तत्प्रवृत्तिनिमित्तप्रकृतिप्रत्ययार्थत्वायोगादित्याशयेनोक्तम्— **प्रकृतिप्रत्ययेति** । नापि निर्विशेषे ब्रह्मणि लक्षणावृत्तेरवकाशः, शक्येन सम्बन्धाभावादित्याह–**नापीति** । शक्यसम्बन्धो लक्षणा निर्विशेषे वस्तुनि सम्बन्धाभावप्रतिपादिकां श्रुतिमुदाहरति–**असङ्ग इति** ।

---

व्याप्ति–विशिष्ट हेतु न होने से 'नेन्द्रियाणि नानुमानम्' अनुमानप्रमाण भी नहीं हो सकता । यह श्रुतिप्रमाण है ।

शब्दप्रमाण द्वारा भी ब्रह्म की सिद्धि नहीं हो सकती ।

ब्रह्म की शक्तिविषयता भी नहीं हो सकती, क्योंकि जाति-गुण-प्रकृत्यर्थ-प्रत्ययार्थ ही विषय होते हैं ।

सम्बन्ध शून्य होने से ब्रह्मशब्दनिष्ठलक्षणात्मक सम्बन्ध का विषय भी नहीं हो सकता ।

"असङ्गगो ह्ययं पुरुषः". यह ब्रह्म के सम्बन्धशून्यत्व में प्रमाण है ।

**ननु सत्यसम्बन्धाभावेऽपि शाखाचन्द्रवत् कल्पितसम्बन्धस्य सत्त्वान्न दोष इति चेन्न, दृष्टान्तवैषम्यात् । तथा हि– शाखाचन्द्रयोरुभयोरपि सावयवत्वात् प्रत्यक्षविषयत्वात् किरणद्वारा सम्बन्धस्यापि सत्त्वाद् दार्ष्टान्तेऽत्यन्तवैपरीत्यान्नोक्तार्थसिद्धिः । नापि गौण्या विषयत्वम्, निर्गुणत्वात् । विषयत्वाङ्गीकारे च मिथ्यात्वप्रसङ्गः द्वैतापत्तिश्च । तथा च प्रयोगः– ब्रह्म मिथ्या प्रमाणविषयत्वात् तव मते प्रपञ्चवदिति । नापि द्वितीयः । सर्वप्रमाणहीनत्वात्**

---

काल्पनिकसंसर्गमभ्युपेत्य लक्षणाविषयत्वं ब्रह्मण इत्याशङ्कते–**नन्विति** । दृष्टान्तवैषम्यमुपपादयति–**तथा हीत्यादिना** । निर्विशेषस्य ब्रह्मणो निरवयवत्वात्प्रत्यक्षाद्यगोचरत्वान्न कथमपि काल्पनिकसम्बन्धस्योपपत्तिरित्याशयेन दार्ष्टान्तवैपरीत्यमाह–**दार्ष्टा इति** । नापि निर्विशेषस्य ब्रह्मणो गौणीवृत्तिविषयत्वमित्याह–**नापीति** । शक्यवृत्तिलक्ष्यमाणसम्बन्धो गौणी । यथा सिंहो माणवकः । अत्र सिंहवृत्तिशौर्यादिगुणलक्षणया तद्वति माणवके वृत्तिः । "लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" इति वचनात् । दृश्यशून्ये वस्तुनि तस्याः प्रसरणाभावान्न गौणीप्रवृत्तिरित्याशयः । निर्विशेषस्य ब्रह्मणः प्रमाणागोचरत्वेऽवस्तुत्वमापद्येत इत्याशयेन द्वितीयविकल्पं निरस्यति- **नापीति** । उक्तार्थमनुमानेन द्रढयति–**निर्विशेषमिति** । ब्रह्मणः स्वयंप्रकाशत्वान्न तत्र प्रमाणान्तरापेक्षेति शङ्कते–**नन्विति** । तस्य = निर्विशेषस्य ब्रह्मणः ।

---

यद्यपि ब्रह्म में सत्य सम्बन्ध न होने पर भी, "शाखाचन्द्र" न्याय द्वारा कल्पित होने से कोई दोष नहीं है, यह कथन असंगत है, क्योंकि दृष्टान्त दार्ष्टान्तिक के अनुकूल नहीं है । यत: शाखा और चन्द्र ये दोनों सावयव तथा प्रत्यक्ष के विषय हैं । चन्द्रकिरणों का शाखा के साथ सम्बन्ध होता है, किन्तु दार्ष्टान्त में ब्रह्म के निरवयव होने से सम्बन्ध नहीं हो सकता, इसलिए शाखाचन्द्रदृष्टान्त विषम दृष्टान्त है ।

गौणीवृति द्वारा ब्रह्म की विषयता हो सकती है, यह कथन भी असंगत है; ब्रह्म के निर्गुण होने में यदि ब्रह्म की विषयता मानी जाय, तो ब्रह्म के मिथ्यात्व की आपत्ति होगी, जो इष्ट नहीं है । ब्रह्म के विषयत्व अङ्गीकार पक्ष में द्वैतापत्ति दोष होगा ।

यहाँ यह प्रयोग हो सकता है—

ब्रह्म मिथ्या, प्रमाण विषयत्वात् घटादिवत्, किन्तु ब्रह्म का मिथ्यात्व नहीं है । इसलिए ब्रह्म में प्रमाण विषयता नहीं मान सकते । प्रमाणहीन होने से द्वितीयपक्ष भी असङ्गत है–क्योंकि प्रमाणविषयता ब्रह्म में मानने से शशशृंग के तुच्छत्वापत्ति दोष होगा ।

**शशशृङ्गतुल्यत्वापत्तेः। निर्विशेषं ब्रह्मावस्तु सर्वप्रमाणशून्यत्वात्, शशशृङ्गाद्यवस्तुजातवदित्यनुमानात्। ननु तस्य स्वयम्प्रकाशकत्वात् प्रमाणान्तरानपेक्षतया स्वानुभूत्येकमानत्वान्नोक्तदोषयोग इति चेन्न। शास्त्रवैयर्थ्यप्रसङ्गात्। तथा हि निर्विशेषाद्वितीयस्य दोषस्पर्शाभावाद्बन्धाभावस्तदभावान्मोक्षाभावस्तदभावे मोक्षतत्साधनप्रतिपादकशास्त्रस्य सुतरां वैयर्थ्यम्, किञ्च तत्र धर्ममात्रानङ्गीकारे तदितरवस्तुमात्रानङ्गीकारे च "तदैक्षत बहु स्यां**

---

स्वानुभूत्येकमानत्वात् = ब्रह्मानुभूत्येकमानत्वात्। स्वप्रकाशे निर्विशेषे ब्रह्मणि अविद्यासंसर्गलेशाभावेन बन्धाभावच्चेदितरस्य वस्तुनोऽसत्त्वात् कस्य बन्धनिवृत्तये मोक्षस्तत्साधने बोधकशास्त्रस्योपयोगिता स्यादित्याशयेनोक्तं शङ्कां परिहरति-नेति। शास्त्रवैयर्थ्यं दर्शयति-**तथा हीत्यादिना**। तदभावात् = बन्धाभावात्। तदभावे = मोक्षाभावे। तत्साधनप्रतिपादकस्य = मोक्षसाधनप्रतिपादकस्य। यदि ब्रह्मणि धर्मा नाभ्युपेयन्ते तदा ईक्षणकर्तृत्वबहुभवनसङ्कल्पाश्रयत्वप्रतिपादिकाः श्रुतयो व्याकुप्येरन्, अतः सविशेष एव ब्रह्मशब्दाभिधेयः श्रीकृष्ण एव वेदान्तार्थ इत्याशयेन निर्विशेषवादं दूषयितुमाह-**किञ्चेति**। तदैक्षत बहु स्यां प्रजायेयेति = तत्परं ब्रह्म विचित्रानन्तचिदचिन्मिश्रव्यष्टिदरूपेणाहमेव बहु स्यां तदर्थं च जगदुत्पत्तिप्राक्कालिको

---

ब्रह्म के स्वयंप्रकाश होने से उसमें प्रमाणान्तर की अपेक्षा नहीं है, आत्मा के स्वानुभूत्यैकगम्य होने से ब्रह्म का मिथ्यात्वरूप दोष की प्रसक्ति नहीं हो सकती; यह कथन भी असंगत है, क्योंकि ब्रह्म के प्रतिपादकशास्त्र के वैयर्थ्य की आपत्ति होगी।

अर्थात् आत्मा के स्वयंप्रकाश होने के कारण उसका बन्ध नहीं हो सकता। बन्ध का अभाव होने से मोक्ष का अभाव हो जायेगा, क्योंकि बन्ध की निवृत्ति ही मोक्ष है, ब्रह्म स्वयं प्रकाशस्वभाव है। अतः उसका बन्धाभाव स्वतः सिद्ध है, बन्ध की निवृत्ति ही मोक्ष है, बन्धाभाव होने से मोक्षाभाव की आपत्ति हो जायेगी। इसलिए मोक्ष-तत्साधन प्रतिपादकशास्त्र का भी वैयर्थ्य होगा।

यदि ब्रह्म में धर्म स्वीकार नहीं करेंगे, एवं ब्रह्म से अतिरिक्त वस्तु है, ऐसा स्वीकार नहीं करेंगे तो "तदैक्षत बहुस्यां प्रजायेय" इत्यादि श्रुति प्रतिपादित कर्तृत्व बहुत्व संकल्पाश्रयत्व ब्रह्म का अनुपपन्न हो जायेगा, और तत्प्रतिपादक श्रुतियां कुपित हो जायेंगी। इसलिए सविशेष ही ब्रह्मशब्द का अभिधेय है, ऐसा ब्रह्मशब्द का अभिधेय श्री कृष्ण ही वेदान्तों से प्रतिपाद्य हैं। इसी आशय से "किञ्च" यह ग्रन्थांश प्रवृत्त है-तत् शब्द से वाच्य ब्रह्म विचित्रानन्तचिदचिन्मिश्रव्यष्टिजगत् रूप से मैं ही हो जाऊँ।

अर्थात् जगत् की उत्पत्ति से पूर्व ब्रह्म का इस प्रकार संकल्प बहुभवन के लिए

**प्रजायेय"। छा० ३।३, ब्रह्मैवेदमग्र आसीत्। बृ० १।४।१०। स चात्मानं वेदाऽहं ब्रह्मास्मीति। बृ० १।४।१०। सोऽकामयत बहु स्यां प्रजायेय।** तै० **३।६।१। नामरूपे व्याकरवाणि। छा० ६।३।२। यतो वा इमानि** भूतानि **जायन्ते। तै० ३।१।१। इत्यादि। यः सर्वज्ञः सर्ववित् यस्य** ज्ञानमयन्तपः। **मु० १।१।९। परास्य शक्तिर्विविधैव श्रूयते।**

**स्वाभाविकी ज्ञानबलक्रिया च श्वे० ६।८। सर्वे वेदा यत्पदमामनन्ति। कठ० २।१५। तन्त्वौपनिषदं पुरुषं पृच्छामि बृ० ३।९।२६। जन्माद्यस्य यतः**

---

ब्रह्मणः सङ्कल्पः। एतादृशो जगदुत्पत्तिविषयकः सङ्कल्पश्च ब्रह्मणोऽखिलदोषराहित्येनानन्तकल्याणगुणाश्रयत्वे सत्येव सम्भवति, नान्यथेति, तादृशधर्मवैशिष्ट्यं ब्रह्मणः सिद्ध्यतीत्यर्थः। ब्रह्मैवेदमित्यादिश्रुतीनामर्थः प्रागुपदर्शितरीत्याऽवसेयः। ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वे सर्वस्यासत्त्वान्नामरूपव्या-करणकर्तृत्वं बाध्येत। ब्रह्मणो जगज्जन्मादिकर्तृरूपधर्मबोधिकां श्रुतिमुदाहरति–**यत इति**। ब्रह्मणः सर्वज्ञत्वधर्मप्रतिपादिकां श्रुतिमाह–**"यः सर्वज्ञः" इति**। ब्रह्मणः गुणशक्त्यादिमत्वबोधिकां श्रुतिं निर्वक्ति– **परास्य शक्तिरिति**।

अस्य परब्रह्मणः शक्तिः परा स्वरूपविलक्षणा विविधा अनन्ताचिन्त्यप्रकारिका श्रूयते चेत्यनन्त्यप्रमाणनिरपेक्षेत्यर्थः। अनिर्वचनीयत्वमिथ्यात्वौपाधिकत्वादिशब्दप्रयोक्तृणां मुखं धूलीकरोति–**स्वाभाविकीति**। अनाद्यनन्तेति स्वरूपवत्नित्येत्यर्थः। न केवलं

---

हुआ। अखिलदोषरहित अनन्तकल्याणगुणों के आश्रय ब्रह्म का ही संकल्प हो सकता है, न कि निर्विशेष ब्रह्म का।

अतः सविशेष ब्रह्म ही जगत् के उत्पत्ति, स्थिति तथा लय का कारण हो सकता है, निर्विशेष ब्रह्म नहीं।

ब्रह्मव्यतिरिक्त सबके मिथ्यात्व स्वीकार करने पर नामरूपात्मक जगत् के न रहने से, परमात्मा का नामरूपात्मक जगत् का व्याकरणकर्तृत्व बाधित हो जायेगा।

'यः सर्वज्ञः सर्ववित्' 'यस्य ज्ञानमयन्तपः'। मु. १।१।९।

इस श्रुति द्वारा ब्रह्म के गुणशक्त्यादि का बोध होता है। इस ब्रह्म की शक्ति परा, स्वरूप विलक्षणा; विविधा अचिन्त्य-अनन्त प्रकार की है, ऐसा श्रुतियों में प्रतिपादित है। अर्थात् अनिर्वचनीयत्व-मिथ्यात्वौपाधिकत्वादि शब्दों का प्रयोग करनेवालों का पक्ष 'स्वाभाविकी ज्ञानबलक्रिया च', इस श्रुति प्रमाण से खण्डित हो जाता है।

भगवान् वासुदेव में केवल विविध शक्तियां ही नहीं हैं, किन्तु ज्ञानबल से युक्त क्रियायें भी हैं। श्रुति में आया हुआ चकारशब्द भगवान् के सम्पूर्णगुण-क्रियाओं के आकर्षण को अभिव्यक्त करता है। परमात्मा सब वेदान्तों से प्रतिपाद्य है।

**ब्र०सू० १।१।२।** विवक्षितगुणोपपत्तेश्च **ब्र० सू० १।२।२** सर्वोपेता च। **ब्र०सू० २।१।३०।** शास्त्रयोनित्वात् **ब्र०सू० १।१।४** इत्यादीनाम्। अहं **सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते। गी० १०।८** वेदैश्च सर्वैरहमेव वेद्यः। **गी० १५।१५।** इत्यादीनामीक्षणकर्तृत्वबहुभवनसंकल्पाद्याश्रयत्वजगज्जन्मादिकारणत्वगुणशक्त्यादिमत्त्वशास्त्रवेद्यत्वादिप्रतिपादकानाम्, "अजो ह्येको

---

शक्तेरेव तत्त्वं ज्ञानक्रियागुणानामपीत्याह-**ज्ञानबलक्रिया चेति**। ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रिया चेति। चकारः सर्वेषामपि भगवतो गुणकर्मादीनामाकर्षणार्थः। सर्ववेदान्तप्रतिपाद्यत्वं ब्रह्मणोऽस्ति, अतस्तत्प्रतिपादिकाः श्रुतीः पठति। **सर्वे वेदा इति**। पद्यते गम्यत इति व्युत्पत्त्या पदशब्दः प्राप्यवाची, यत्स्वरूपं सर्वे वेदाः साक्षात्परम्परया वा प्रतिपादयन्तीत्यर्थः। **जन्माद्यस्य यत इति**। अस्याचिन्त्यविचित्रसंस्थानसम्पन्नस्यासङ्ख्येयनामरूपा-दिविशेषाश्रयस्य विश्वस्य सृष्टिस्थितिलया यस्मात्सर्वज्ञाद्यनन्तकल्याणगुणाश्रयाद्ब्रह्मेशकालादिनियन्तुर्भगवतो भवन्तीत्यर्थः। विवक्षितगुणोपपत्तेश्चेति सूत्रार्थः प्राग्वत्। सर्वोपेता चेति सूत्रार्थः प्राग्वत्। **शास्त्रयोनित्वादिति**। इत्थंभूते ब्रह्मणि किं प्रमाणमिति जिज्ञासायां शास्त्रमेव प्रमाणमित्युक्तं शास्त्रयोनित्वात्। शास्त्रं योनिः कारणं प्रमाणं यस्य तच्छास्त्रयोनिस्तस्य भावस्तत्त्वं तस्माद् ब्रह्मज्ञानकारणत्वाच्छास्त्रस्य तद्योनित्वं शास्त्रप्रमाणकत्वमिति यावद् ब्रह्मण

---

**अतः ब्रह्म प्रतिपादक श्रुतियाँ कहती हैं–'सर्वे वेदा यत्पदमामनन्ति' 'तत्त्वौपनिषदं पुरुषं पृच्छामि' इत्यादि।**

**पद्यते गम्यते इस व्युत्पत्ति के अनुसार पदशब्द प्राप्यवाची है–सम्पूर्ण वेद उस परमात्मा के स्वरूप का साक्षात् अथवा परम्परा रूप से प्रतिपादन करते हैं। "जन्माद्यस्य यतः"।**

**असंख्यनामरूपात्मक अचिन्त्य-विचित्र संस्थान सम्पन्न जगत् की सृष्टि-स्थिति-लय जिससे होते हैं–ऐसे सर्वज्ञादि-अनन्त कल्याणगुणगण का आश्रय ब्रह्म है।**

**जगदुत्पत्ति-स्थिति-लयकर्तृत्वादिगुणों की उपपति भगवान् वासुदेव में ही सम्भव है।**

**इसमें क्या प्रमाण है? प्रश्न के समाधान में "शास्त्रयोनित्वात्" १।१।३। इस सूत्र की प्रवृत्ति है।**

**शास्त्रं योनिः कारणं प्रमाणं यस्य स शास्त्रयोनिः तस्य भावः तत्वं शास्त्रयोनित्वं तस्मात्।**

**इस व्युत्पत्ति के अनुसार ब्रह्म शास्त्रप्रमाणक है अर्थात् केवलशास्त्र द्वारा ही**

**जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य:"। श्वेता० ४।४। द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्य: पिप्पलं**

---

इत्यर्थ:। अहं सर्वस्येत्यस्यार्थ: प्राग्वत्। प्राङ्निर्दिष्टश्रुतिभ्यो निष्पन्नमर्थमाह- **ईक्षणकर्तृत्वेति**। अजो ह्येक इत्यर्थ: प्राग्वत्। द्वा सुपर्णेति। द्वेत्यादिषु सुपां सुलुगित्यनेन औङ् आकारादेश:। द्वौ जीवपरौ सुपर्णौ गमनसाधनतया पर्णशब्दोक्तपक्ष-तुल्यज्ञानादिगुणवन्तौ। सयुजौ नित्यसम्बन्धिनौ, यद्वा युज्यत इति युक्, युक्शब्दो गुणपर: समानगुणकौ, सखायौ चैतन्यादिना समानाख्यानौ उपकार्योपकारकभावेन वर्तमानौ वा परस्परविनाभूतौ वा समानमेकं वृश्चते छिद्यत इति वृक्षस्तं वृक्षवच्छेदनयोग्यं

---

जाना जाता है। प्रत्यक्षादिप्रमाणजन्यज्ञान का विषय नहीं होता।

अथवा–शास्त्रस्य योनि:कारणम् = शास्त्रयोनि: इस षष्ठी तत्पुरुष के अनुसार सम्पूर्ण ऋग् वेदादिशास्त्र जो अनेक शाखाओं से विस्तृत उन शास्त्रों का भी अभिन्न निमित्तोपादान कारण ब्रह्म है, यह भाव है।

ब्रह्म के अभिन्ननिमित्तोपादानकारणता में श्रुति स्मृतियां प्रमाण हैं। जैसे–'अहं सर्वस्य प्रभवो' 'मत्त: सर्वं प्रवर्तते'।

'वेदैश्च सर्वैरहमेव वेद्य:' मुझ परमात्मा से ही चराचर जगत् की उत्पत्ति-स्थिति-प्रलय होते हैं। एवं सम्पूर्ण वेदों से मैं (परमात्मा) ही जानने योग्य हूँ।

ईक्षणकर्तृत्व-बहुभवन-संकल्पाश्रयत्व-जगज्जन्मादिकर्तृत्व-गुणशक्त्यादिमत्व-शास्त्रवेद्यत्व प्रतिपादक श्रुतियां प्रमाण हैं। यथा– "अजो ह्येको जुषमाणो....चाकशीति"।

इस प्रकार ब्रह्माभिन्नत्वरूप से क्षेत्र-क्षेत्रज्ञ, प्रधान-पुरुष, प्रकृति पुरुष-जीवमायादि शब्दों से वाच्यवस्तु के अजत्व-मायावश्यत्व-तन्मुक्तत्व-ईश्वरत्व-सखित्व-कर्मफलभोक्तृत्व-नित्यत्व-नानात्व-शक्तिरूप-अंशत्व-कर्मबन्धार्हत्व-तन्मोक्षार्हत्व-अनादि-अनन्तत्व-गुणाश्रयत्व-जडत्व-परिणामित्व-दुरत्ययत्वादि के प्रतिपादक श्रुति-स्मृति-सूत्रों का बाध होने से शास्त्र से बहिर्भूत शास्त्रों की निराकांक्षता सिद्ध होती है।

"द्वा सुपर्णा, सुपां सुलुग्" इस सूत्र द्वारा औङ् को आकार आदेश होने से द्वौ के स्थान पर "द्वा" ऐसा हुआ है। यहां पर द्वौ शब्द से जीव और परमात्मा दोनों का ग्रहण किया गया है, जिस प्रकार पक्षी का पंख गमन का साधन होता है, उसी प्रकार पक्ष के तुल्य जीव और परमात्मा ज्ञानवान् हैं। दोनों सयुज हैं, अर्थात् नित्य सम्बन्धी हैं। अथवा–युज्यते युक्, युक् शब्द यहां पर ज्ञानपरक है। अत: जीव और परमात्मा समानगुणक होने के कारण दोनों सखा हैं–अर्थात् चैतन्यगुण होने से सुपर्ण शब्द से कहे गये हैं। दोनों उपकार्य-उपकारकभाव से वर्तमान हैं। दोनों का परस्पर अविनाभाव

**स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।। मु० ३।१।१। ज्ञाऽज्ञौ द्वावजावीशानीशौ। श्वे० १।९।**

**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, कठ० ५।१३। अक्षरात् परतः परः, मु० २।१।१। प्रधानक्षेत्रज्ञपतिर्गुणेशः। श्वे० ६।१६।२३, पृथगात्मानं प्रेरितारञ्च मत्वा, श्वे० १।६। गौरनाद्यन्तवती जनित्री**

---

शरीरं परिषस्वजाते परिष्वज्य वर्त्तते, तयोर्द्वयोर्मध्ये, अन्यः शरीराद् भिन्नो जीवस्तत्रासक्तः सन् पिप्पलं शरीरसम्बन्धकृतकर्मफलं स्वादु यथा तथा अत्ति भुनक्ति । अनश्नन्नन्यः द्वाभ्यां भिन्नः द्वयोर्नियन्तृतया वर्तमानः परमात्मा तत्रानासक्तस्तत्फलान्यनश्नन्नेवाभितोऽतिशयेन प्रकाश्यते । अत्र वृक्षादिशब्देषु योगवशाच्छरीरादिप्रतीतिर्न तु रूपकातिशयोक्तिः ।

**नित्य इति** । नित्यानां चेतनानां बहूनां नित्यश्चेतन एक एव सन् यः कामानपेक्षितानर्थान् विदधाति तद्ब्रह्म जगत्कारणमित्यर्थः । **अक्षरात् परतः पर इति** । अक्षरात्प्रधानात्परः समष्टिपुरुषस्तस्मात् परतः पुरुषात् परः परमपुरुष इत्यर्थः । अत्र प्रधानजीवाभ्यां भिन्नः परमपुरुष इत्यभिहितम् । **प्रधानेति** । प्रधानं प्रकृतिः क्षेत्रज्ञः प्रत्यगात्मा तयोर्नियन्ता परमेश्वरः । गुणेशः = सत्वादिगुणानां नियन्ता । **पृथगिति** । पूर्वमन्त्रोक्तरीत्या भ्रामयितृत्वेन प्रेरितारं नियन्तारं परमात्मानम् पृथग् मत्वा = तन्नियम्यभूतं स्वात्मानं च पृथग् मत्वा ततो मननप्रीतेन=तेन परमात्मना जुष्टः प्रीतिविषयीकृतः सन्नमृतत्वं मोक्षमेति प्राप्नोतीत्यर्थः ।

---

**सम्बन्ध है । वृश्चते-छिद्यते इति वृक्षः इस व्युत्पत्ति के अनुसार जिसका नाश होता है, उसे वृक्ष कहते हैं, वृक्ष के समान शरीर भी नाशवान् है । इसलिए इस शरीर को वृक्षपद से कहा गया है । छेदनयोग्य शरीर दोनों से सम्बन्धित है, जीव परमात्मा के मध्य शरीर से भिन्न जीव भोगासक्त होता हुआ शरीर सम्बन्धकृत स्वादु कर्मफल का भोक्ता है, तथा परमात्मा कर्मफल का भोक्ता न होता हुआ भी शरीर और जीव से भिन्न दोनों का नियन्त्रक के रूप में होता हुआ वह अनासक्त है । कर्मफल का भोक्ता न होने पर भी अत्यन्त प्रकाशमान है ।**

**यहां पर वृक्षादि शब्दों में सम्बन्ध होने से शरीर की प्रतीति है, केवल रूपक तथा अतिशयोक्ति नहीं है ।**

**वह नित्य चेतनों में नित्य चेतन है, अक्षर प्रधान पर से भी पर है, अर्थात् प्रकृति का नियन्ता है–वह परमात्मा एक होता हुआ अपेक्षित अर्थों को देता है, इसलिए वह ब्रह्म जगत् का कारण है, यह अभिव्यक्त होता है । अथवा अक्षरात्परतः पर इति ।**

**समष्टिपुरुष अक्षर शब्द से विवक्षित है, उस समष्टिपुरुष से पर = परमपुरुष को अक्षर से = पर शब्द से लिया गया है । यहां पर प्रधान (प्रकृति) और जीव से भिन्न परमपुरुष विवक्षित है ।**

**भूतभाविनी। मान्त्रिको०। अजामेकां लोहितशुक्लकृष्णां श्वे० ४।५। शारीरश्चोभयेऽपि भेदेनैनमधीयते। ब्रह्म० सू० १।२।२१। भेदव्यपदेशाच्चान्य:। ब्र० सू० १।१।२२। अधिकं तु भेदनिर्देशात्, ब्र० सू० २।१।२२।**

---

अत्रापि जीवात्मनोर्भेद: स्पष्ट: प्रतीयते। गौरनाद्यन्तवतीत्यस्यार्थ: पूर्ववत्। **अजामिति**। न जायत इत्यजा ताम्। उत्पत्तिरहितां मूलप्रकृतिम्। एकाम् = काञ्चिदजाम्। लोहितशुक्लकृष्णाम् = तेजोऽबन्नलक्षणविकारगतलोहितादिरूपयुक्ताम् त्रिगुणरूपां वा। अत्रापि भोक्तृभोग्यप्रेरयितृत्वादीनां भेद: प्रतीयते। **शारीरश्चोभयेऽपीति**। शारीरो जीवोऽपि नान्तर्यामी सर्वात्मत्वसर्वनियन्तृत्वसर्वज्ञत्वादीनामतद्धर्मत्वात्, हि यत:। उभयेऽपि काण्वा माध्यन्दिनाश्च, एनं शारीरं जीवमन्तर्यामिनो भेदेन पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते, भेदव्यपदेशात्। आदित्यादिशरीराभिमानिक्षेत्रज्ञात्तदन्त:स्थोऽन्य: स्वरूपतो भिन्न: परमात्मा कस्मात् "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद

---

प्रधान = प्रकृति, क्षेत्रज्ञ = प्रत्यगात्मा हैं। इन दोनों के नियन्ता परमेश्वर हैं। गुणेश-सत्त्वादिगुणों–का नियन्ता, पृथगमत्त्वा–परमेश्वर से नियम्य–अपने को जीव जब समझता है, तब वह परमात्मा के प्रीति का विषय होता है। परमात्मा के प्रीति का विषय होने के कारण अमृतत्व-मोक्ष प्राप्त करता है। यहां पर भी जीवात्मा का परमात्मा से भेद प्रतीत होता है।

न जायते इति अजा-प्रकृति: ताम्। अर्थात् उत्पत्ति से रहित मूल प्रकृति जो एक है, तेज-जल-पृथिवी स्वरूप विकारगत लोहितादि रूपों से युक्त है। अथवा–त्रिगुणात्मक है। यहां पर भी भोक्ता-भोग्य-प्रेरिता (नियन्ता) के भेद की प्रतीति होती है।

'शारीरश्चोभयेऽपि......।' शारीर जीव भी अन्तर्यामी नहीं हो सकता है, क्योंकि सर्वात्मत्व-सर्वनियन्तृत्व-सर्वज्ञत्व इत्यादि धर्म जीव के नहीं हो सकते हैं, कैसे ? यह प्रश्न होने पर–"चोभये" इस सूत्रस्थ शब्द की प्रवृत्ति होती है–प्रकृति और जीव में ये धर्म नहीं हो सकते क्योंकि स्वरूपयोग्यता नहीं है, ऐसा काण्व और माध्यन्दिन पढ़ते हैं, क्योंकि इस जीव को अन्तर्यामी से भिन्न पृथिव्यादि के समान अधिष्ठानत्वेन-नियम्यत्वेन स्वीकार करते हैं।

'भेदव्यपदेशात्......।' आदित्यादिशरीराभिमानी क्षेत्रज्ञों (जीवों) से एवं उनके अन्त:स्थ-स्वरूप से भिन्न परमात्मा है–क्योंकि "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यं शरीरं य आदित्यमन्तरो यमयत्येष ते आत्मान्तर्याम्यमृत:" इत्यादि श्रुतियों द्वारा जीव और ब्रह्म के भेद का कथन किया गया है।

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैवं न भविष्यामः सर्वे वयमतः परम् ।। गीता ।२।१२।**

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।। गी० ७/४।**

---

यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष ते आत्मान्तर्याम्यमृतः'' इत्यादिश्रुत्या जीवब्रह्मणोर्भेदव्यपदेशात् । **अधिकन्त्विति** । यत्सार्वज्ञ्याद्यनन्ताचिन्त्यासङ्ख्येय-कल्याणधर्माश्रयं जगदभिन्ननिमित्तोपादानकारणं तत्तस्माच्छरीरादधिकमुत्कृष्टं तदत्यन्तविलक्षणं परं ब्रह्म कुतः भेदनिर्देशात् ''आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'' इति कर्तृकर्मादिभेदस्य ''ब्रह्मविदाप्रोति परमिति'' प्राप्तृप्राप्तृव्यभेदस्य ''य आत्मानमन्तरो यमयतीति'' नियन्तृनियम्यभेदस्य च निर्देशादित्यर्थः । न त्वेवाहमित्यस्यार्थः पूर्ववत् ।

प्रकृतिशब्दवाच्यपरापरशक्तिद्वयस्वरूपमाह– **भूमिरिति द्वाभ्याम्** । भूम्यादिपञ्च-शब्दैस्तत्कारणाभूतानि गन्धादिपञ्चन्मात्राणि गृह्यन्ते, न स्थूलभूतानि, तेषां विकारत्वेन प्रकृतित्वाभावात् । मनश्शब्देन तत्कारणभूताहङ्कारो गृह्यते । अहङ्कारशब्देन तत्कारणं

---

''अधिकन्त्विति'' इस अंश से सार्वज्ञ्य-अनन्त-अचिन्त्य-असंख्येय-कल्याणगुणों का आश्रय जगत् का अभिन्ननिमित्तोपादानकारण परमात्मा को कहा गया है । इसलिए वह परमात्मा जीव से उत्कृष्ट अत्यन्त विलक्षण है, क्योंकि भेद का कथन श्रुतियों में प्रतिपादित है । जैसे–''आत्मावारे द्रष्टव्यः'' ।

कर्तृ कर्मादि का भेद भी निर्दिष्ट है, यथा–''ब्रह्मविदाप्नोति परमिति'' इस श्रुति द्वारा नियन्तृ-नियम्यभेदका निर्देश किया गया है । न त्वेवाहं......सर्वे वयमतःपरम् । भगवान् वासुदेव आत्मा के नित्यत्व का उपदेश अर्जुन को दे रहे हैं—

हे अर्जुन् ! इस जन्म के पूर्व में हम नहीं थे, ऐसा मत समझो, किन्तु पहले भी थे । तुम और ये राजा लोग पहले नहीं थे, ऐसा मत समझो, किन्तु सभी लोग थे । हम सब भविष्यत् काल में नहीं रहेंगे, ऐसा भी नहीं है, किन्तु रहेंगे । भगवान् के इन वचनों से सिद्ध हो रहा है कि आत्मा नित्य प्रागभाव तथा ध्वंस का प्रतियोगी नहीं है ।

'प्रकृतिशब्दवाच्य परापरशक्तिद्वय का स्वरूप' भूमिरापोऽनलो......प्रकृतिरष्टधा ।' इत्यादि गीता वचनों द्वारा निर्दिष्ट है । भूम्यादि पंचशब्दों द्वारा इनके कारण शब्द-स्पर्श-रूप-रस-गन्ध ये पंचतन्मात्राओं का ग्रहण होता है, स्थूलभूतों का ग्रहण नहीं होता, क्योंकि ये विकार रूप हैं । इनका प्रकृतित्व नहीं हो सकता । मनः शब्द से तन्मात्राओं का कारण अहंकार का ग्रहण किया गया है । अहंकार शब्द से अहंकार का कारण

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महाबाहो! ययेदं धार्य्यते जगत्।। गीता० ७।५।**

---

माया, इत्येवमष्टधा भिन्नेयमाकाशादिपञ्चमहाभूतदशेन्द्रियमन इति षोडशविकारादिचराचरस्य जगतः प्रकृतिरुपादानभूता मे मदीया शक्तिरिति विद्धि। **अपरेति**। अष्टधा या प्रोक्ता प्रकृतिः सेयमपरा निकृष्टा जडत्वात्परार्थत्वाच्च। इतस्त्वचेतनभूतायाः प्रकृतेरन्यां विलक्षणां स्वरूपतः स्वभावतश्चात्यन्तविजातीयां परां तस्या भोक्तृतया प्रकृष्टां जीवभूतां चेतनां प्रकृतिं शक्तिं मे मदीयां मदात्मिकां विद्धि। यया जीवभूतया चेतनया क्षेत्रज्ञाख्यया अनादिकर्मवशादन्तःप्रविष्टया इदं शरीरादिरूपं क्षेत्रसंज्ञकं जडजातं जगद्धार्य्यते। उभयोर्विष्णुशक्तित्वं विष्णुपुराणे स्पष्टमुक्तम्। "विष्णुभक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा" इत्यर्थः। **ममैवांश इति**। योऽयं जीवलोके वर्तमानो जीवभूतः प्राणोपाधियुक्तः स ममैवांशः शक्तिरूपांश एव, न तु स्वतन्त्रः। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्, जीवभूतामित्युक्तत्वात्। शक्तेः शक्तिमतः स्वरूपभेदेऽपि पृथक् स्थित्यभावाद् भेदस्यैव सम्भवात्पूर्वं सप्रमाणं निरूपितत्वाच्च। केचितु जीवः स्वरूपेण ब्रह्मैव, जीवत्वमस्याविद्योपाधिकृतं सूर्यस्य जले प्रतिबिम्बत्वमिव घटावच्छिन्नाकाश इव च। जलघटाद्युपाध्यपाये बिम्बरूपसूर्यमहाकाशतापत्तिमात्रत्ववत्, अविद्योपाध्यपाये निरुपाधिब्रह्मस्वरूपतापत्तिमात्रमेवावशिष्यत इत्याहुः। तन्निरासयति– **सनातन इति**।

---

माया को लिया गया है। इस प्रकार भूमि-अप्-अनल-वायु-आकाश-मन-बुद्धि और अहंकार ये आठ मेरी प्रकृतियां हैं। आकाशादिपञ्चमहाभूत-पंचज्ञानेन्द्रियां पंचकर्मेन्द्रियां और मन ये षोडश विकारभूत चराचर जगत् का उपादानभूत पंचतन्मात्रायें अहंकार-बुद्धि तथा माया ये मेरी आठ प्रकृतियां हैं। इस प्रकार परापर शक्तिद्वय की सिद्धि होती है।

आठ प्रकार की जो प्रकृति कही गई है, वह अपरा अर्थात् निकृष्ट है, क्योंकि वह जड़ और परार्थ है। इस जड़भूत प्रकृति से भिन्न विलक्षण स्वरूप एवं स्वभाव से अत्यन्त विजातीय पराशक्ति चेतन जीवरूप है, उसको मत्स्वरूप समझो। उस चेतन जीवस्वरूप शक्ति के द्वारा जो क्षेत्रज्ञ शब्द का वाच्य है, उसके अनादिकर्म के वशीभूत अन्तःप्रविष्ट होने से क्षेत्रशब्दवाच्य जड़ शरीर धारित है। दोनों शक्तियां विष्णु की हैं, यह विष्णुपुराण में स्पष्टरूप से उक्त है।

"विष्णुभक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा" जिस प्रकार विष्णु भक्ति परा है, उसी प्रकार क्षेत्रज्ञ शब्द वाच्यशक्ति भी परा कही गई है। जो इस जीवलोक में वर्तमान जीव है, जो प्राणोपाधि से युक्त है, वह मेरा ही अंश है, अर्थात्–मेरा शक्ति रूप है, वह स्वतन्त्र नहीं है। अपरा मेरी शक्ति प्रकृतिरूपा है ऐसा समझो।

शक्ति-शक्तिमान् का स्वरूप भेद होने पर भी, शक्ति की पृथक् स्थिति का

**पुरुषं चैव विद्ध्यनादी उभावपि''।। गी॰ १३।१९।**

**तत्र यः परमात्मा स तु नित्यो निर्गुणः स्मृतः ।**
**न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ।।**

**कर्मात्मा त्वपरो योऽसौ कर्मबन्धैः स युज्यते ।**
**स सप्तदशकेनापि राशिना युज्यते पुनः ।।**
**त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्। विष्णु॰पु॰अं॰ १। अ॰ २।२२।**

---

प्रकृतिं पुरुषञ्च उभावपि–अनादिरेव विद्धि । न विद्यते आदिकारणं ययोस्तौ तथा। प्रकृते: सर्वविकारोपपादनत्वात् । तस्यापि प्रकृत्यन्तराङ्गीकारेऽनवस्थापत्तेश्च । पुरुषस्यापि मदंशत्वात्, न जायते म्रियते वा विपश्चिद् इत्यजत्वाभिधानाच्चानादित्वं निर्विवादम् ।

**यः परमात्मेति** । निर्गुण: = प्राकृतगुणशून्य: । **पद्मपत्रेति** । यथा पद्मपत्रमम्भसि स्थितमपि अम्भसा न लिप्यते तद्वदित्यर्थ: । परमात्मस्वरूपं निरूप्य जीवस्वरूपं निरूपयति– **कर्मात्मेति** । त्रिगुणेत्यादीनामर्थ: प्राग्वत् । भूतेन्द्रियसङ्घातरूपे चेतनभोगायतनं शरीरं क्षेत्रपदवाच्यम्, य एतद्भूतसङ्घातरूपं क्षेत्रं भेदेन जानाति तं क्षेत्रज्ञमुच्यते । प्रधानम् = प्रकृति: । पुरुष: = जीव: । ब्रह्मातिरिक्तपदार्थान् दर्शयति–**ब्रह्मभिन्नत्वेनेति** । ब्रह्मभिन्नत्वेन वस्तुनोऽजत्वादिप्रतिपादिकानां बाधादिति योजना । उक्तश्रुतीनां सङ्क्षेपेणार्थ

---

स्वीकार पक्ष में अणुत्व के प्रतिपादक श्रुति-सूत्र का विरोध होगा, प्रतिबिम्बवाद में भ्रान्तिकल्पित ही जीव है—यह श्रुति-सूत्र का विरोध होने से समीचीन नहीं है ।

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' । गी. १३।१९।

प्रकृति-त्रिगुणात्मिका अचेतनरूपा, अथवा क्षेत्रलक्षणा अपराशक्ति । प्रकृति रूप अपराशक्ति से विलक्षण चेतनरूपा क्षेत्रज्ञलक्षणा जीवरूपा पराशक्ति है । प्रकृति और पुरुष दोनों अनादि हैं–न विद्यते आदिकारणं ययो: तौ इस व्युत्पत्ति के आधार पर प्रकृति सर्वविकार का उपादान कारण होने से अनादि है । ''न जायते म्रियते वा विपश्चित्'' इति । इस श्रुति के अनुसार जीव के अजत्व कथन से पुरुष के अनादित्व की सिद्धि होती है ।

परमात्मा–निर्गुण-प्राकृतगुणशून्य है । जैसे पद्मपत्र जल में रहता हुआ भी जल से लिप्त नहीं होता, उसी प्रकार परमात्मा जीव प्रकृति से संबन्धित होने पर भी उनके गुण दोष से लिप्त नहीं होता है ।

परमात्मा के स्वरूप का निरूपण करके जीवस्वरूप का निरूपण करते हैं— ''कर्मात्मात्वपरो......प्रभवाप्ययम्'' । विष्णु. पु. अ. १। अ. २।२२।

परमात्मा से भिन्न जीवात्मा कर्मात्मा कहा जाता है, क्योंकि कर्म उसके

**''ममैवांशो जीवलोके जीवभूतः सनातनः''। गी० १५।७। ''प्रकृतिं**

न हि प्रतिबिम्बोऽवच्छिन्नो वा सनातनो भवति प्रमाणाभावात्, प्रतिबिम्बो नानादि उपाधिजत्वात् सूर्यादिप्रतिबिम्बवत् । किञ्च सावयवम् एव जलदर्पणाद्युपाधौ प्रतिबिम्बदर्शनात्र निरवयवे उपाधौ प्रतिबिम्बो दृष्टः श्रुतोऽनुभूयते वा । प्रकृतेऽप्यविद्यारूपस्य बुद्धिरूपस्य वोपाधेर्निरवयवत्वात् कथं तत्र प्रतिबिम्बत्वकल्पनम्? बुद्धेः सावयवत्वाङ्गीकारे । अणुर्वा ह्येष आत्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश, उत्क्रान्तिगत्यागतीनाम्, नाणुतच्छ्रुतेरिति चेन्नेतराधिकारादित्याद्यणुत्वप्रतिपादकेषु श्रुतिसूत्रेषूपाध्यणुत्वनिरूपित-जीवाणुत्वमिति प्रतिपादितसिद्धान्तभङ्गेन जीवस्य प्रतिबिम्बत्वं कथञ्चिदप्यनुपपन्नम् । उपाधेर्निरवयवत्वे प्रतिबिम्बत्वानुपपत्तिः सावयवत्वेऽणुत्वप्रतिपादकश्रुतिसूत्रविरोधाद् भ्रान्तिपरिकल्पित एव जीवप्रतिबिम्बवाद इत्यलं विस्तरेण । स जीवोऽनादिकर्मवशतया विषयभोगवासनानुविद्धः प्रकृतौ प्रकृतिकार्येऽहङ्कारे लीनतया स्थितानि पुनस्तत्तत्कर्मानुरूपकालेन प्रादुर्भावितानि मनः षष्ठं येषां तानि श्रोत्रादीन्द्रियाणि भोगसाधनार्थं कर्षति गृह्णाति । जीवभूत इत्येकवचनं जात्यभिप्रायकम्, बहुत्वस्य वाक्यशतैर्निरूपितत्वात् । **प्रकृतिमिति** । त्रिगुणात्मिकाऽचेतना क्षेत्रं लक्षणा=अपराशक्तिर्या प्रागुक्ता सा प्रकृतिरुच्यते । या तु तद्विलक्षणा चेतनरूपा क्षेत्रज्ञलक्षणा परा प्रकृतिरित्युक्ता सेह पुरुष इत्युच्यते ।

अभाव होने से भेदाभेद ही शक्ति-शक्तिमान् का मानना उचित है ।

कुछ (अद्वैत वेदान्ती) जीव स्वरूपसे ब्रह्म ही है, जीव का जीवत्व अविद्योपाधिकृत है । जैसे–जल में सूर्य का प्रतिबिम्ब भी बिम्बरूप है, अर्थात् आकाशस्थ सूर्य से अलग नहीं, किन्तु जलरूपोपाधिकृत भेद की प्रतीति हो रही है । जैसे–घटावच्छिन्नाकाश महाकाश से भिन्न नहीं है । जल घटाद्युपाधि के हट जाने से बिम्ब रूप सूर्य एवं महाकाश केवल अवशिष्ट रह जाता है, वैसे ही अन्तःकरण उपाधि के हट जाने से केवल ब्रह्म ही रह जाता है । जीव और ब्रह्म के ऐक्य मानने वालों के मत का 'ममैवांशो......' इत्यादि द्वारा खण्डन करते हैं ।

प्रमाणाभाव के कारण प्रतिबिम्ब अथवा अवच्छिन्न सनातन नहीं होता है । उपाधिजडत्व होने से प्रतिबिम्ब अनादि नहीं होता । सूर्यादि प्रतिबिम्ब के समान । सावयव जल-दर्पणादि उपाधि में प्रतिबिम्ब परिलक्षित होता है, निरवयव–उपाधि में प्रतिबिम्ब नहीं देखा जाता अथवा अनुभव तथा श्रवण से भी गम्य नहीं है ।

प्रकृत में अविद्यारूप अथवा बुद्धि (अन्तःकरण) रूप उपाधि के निरवयव होने से प्रतिबिम्बत्व की कल्पना नहीं कर सकते ।

उपाधि के निरवयवत्व होने पर प्रतिबिम्बत्व की अनुपपत्ति होगी, सावयवत्व

**अचेतना पदार्था च नित्या सततविक्रिया ।**
**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।। गी० ७/१४।**

**इत्यादीनां च ब्रह्माभिन्नत्वेन क्षेत्रक्षेत्रज्ञप्रधानपुरुषप्रकृतिपुरुषजीवमायादि-शब्दाभिधेययोर्वस्तुनोरजत्वमायावश्यत्वतन्मुक्तत्वेश्वरसखित्वकर्मफलभोक्तृत्वनि-त्यत्वनानात्वशक्तिरूपांशत्वकर्मबन्धार्हत्वतन्मोक्षार्हत्वानाद्यनन्तत्वगुणत्रयाश्रयत्व-**

---

प्रकाशयति–**अजत्वेति** । अजो ह्येको जुषमाण इति श्रुत्या प्रधानक्षेत्रज्ञयोरजत्वं जीवस्य मायावश्यत्वं तन्मुक्तत्वञ्चाभिहितम् । द्वा सुपर्णा सयुजा सखायाविति वचनेनेश्वरसखित्वं कर्मफलभोक्तृत्वं क्षेत्रज्ञस्योक्तं भवति । नित्यो नित्यानामिति श्रुतिमुखेन प्रत्यगात्मनां नित्यत्वं नानात्वञ्चोपदिष्टम्, ममैवांशो जीवलोक इति श्रीमुखवचनेन जीवस्य ब्रह्मणः शक्तिरूपांशत्वञ्चोक्तम्, कर्मात्मात्वपर इति वचनेन कर्मबन्धार्हत्वं तन्मोक्षार्हत्वञ्चाभिहितम् । त्रिगुणमित्यारभ्य 'मायामेतां तरन्ति ते' इत्यन्तश्रुतिसमुदायेनानन्तत्वगुणाश्रयत्व-जडत्वपरिणामित्वं प्रधानस्याभिहितम् । यदि ब्रह्मणि धर्मो नाभ्युपेयते तदा धर्मबोधकानां प्राङ्निर्दिष्टानां श्रुतिस्मृतिसूत्राणां बाधः प्रसज्येत, तथा सति बाह्यमतप्रवेशापत्तेरित्याशयेनाह–

---

आश्रित हैं । वह कर्मबन्धन से युक्त है । वह जीवात्मा पंचज्ञानेन्द्रिय-पंच-कर्मेन्द्रिय-पंचप्राण और बुद्धि अहंकार सप्तदश अवयवात्मक सूक्ष्मशरीर से युक्त है । परमात्मा त्रिगुणात्मक जगत् का कारण अनादि-सम्पूर्ण नाम रूप जगत् के प्रलय का स्थान है ।

अचेतन पदार्थ नित्य हैं, किन्तु सतत विकारयुक्त हैं, अर्थात् पदार्थों का विनाश नहीं होता उनकी अवस्थायें परिवर्तित हो जाती हैं । सूक्ष्मावस्थापन्न हो जाना ही पदार्थों का विनाश है ।

"अजो ह्येको जुषमाणोऽनुशेते" इस श्रुति द्वारा प्रधान-क्षेत्रज्ञ का अजत्व, जीव का मायावश्यत्व, माया से मुक्तत्व भी कथित हो गया ।

"द्वा सुपर्णा सयुजा सखाया" इस वचन से ईश्वरसखित्व और कर्मफलभोक्तृत्व जीवात्मा का व्यक्त होता है ।

"नित्यो नित्यानाम्"–श्रुति प्रमाण द्वारा प्रत्यगात्माओं का नित्यत्व और नानात्व उपदिष्ट होता है ।

"ममैवांशो जीवलोके" इस श्रीमुखवचन द्वारा जीव के ब्रह्मशक्तिरूपांशता की सिद्धि हो रही है । कर्मात्पर, इस वचन से कर्म बन्धार्हत्व एव तन्मोक्षार्हत्व की सिद्धि भी हो जाती है । त्रिगुण से लेकर "मायामेतां तरन्ति ते" इन श्रुतियों से प्रधान का अनन्तत्व-गुणाश्रयत्व-परिणामित्व कथित है ।

**जडत्वपरिणामित्वदुरत्ययत्वादिप्रतिपादकानां श्रुतिस्मृतिसूत्राणां बाधाच्छास्त्रबहिर्भूतत्वप्रसङ्गो दुर्वार: ।**

**ननु व्यवहारकाले सर्वस्योक्तद्वैतस्यास्माकमङ्गीकारात्तद्विषयत्वेन भेदशास्त्रस्य नैराकाङ्क्ष्यान्न बाध: । तथा चोक्तम्— जीवईशौ विशुद्धाचित् तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योग: षडस्माकमनादय:, इति । न च तर्हि द्वैतापत्त्याऽ-**

---

**श्रुतीति** । आत्मन: शक्तिरविद्यामायादिपदवाच्या सत्त्वरजस्तमोमयस्य जगतो मूलकारणम्, इयञ्चात्मशक्ति: पारमार्थिकसत्यत्वाभावादसती, व्यावहारिकसत्यत्वात् सती चोच्यते ।

एवं जीवेशयोर्भेदोऽपि व्यावहारिक:, तत्प्रतिपादकं शास्त्रमपि व्यावहारिकभेदप्रतिपादकत्वेन चारितार्थ्यमिति शङ्कते-**नन्विति** । तद्विषयत्वेन = व्यावहारिकभेदविषयत्वेन । या चेयं माया शुद्धायाश्रित: स्वसम्बन्धेन जीवत्वमीश्वरत्वं प्रदर्शयति सा तत्सम्बन्धश्चानादिरेव स्वीक्रियते । मूलकारणस्यानादित्वं सर्वैरपि दर्शनकारैरङ्गीकृतमित्याशयेन वचनमुपादत्ते-**जीव इति** । शुद्धाचित् १। माया२ । तत्सम्बन्ध:३ । जीवत्वम्४। ईश्वरत्वम्५। तयोर्भेदश्च६ । एते षट्पदार्था अनादय इत्यर्थ: । यद्येते पदार्था अभ्युपेयन्ते तदा द्वैतापत्त्याऽद्वैतसिद्धान्तभङ्गापत्तिरित्याशङ्क्य परिहरति-**न चेति** । यथा तार्किकै: प्रागभावस्यानादित्वेऽपि सान्तत्वमभ्युपेयते तथास्माभिरपि प्रागुपदर्शितषण्णां पदार्थानामनादिसान्तत्वमुच्यते ।

---

यदि ब्रह्म में धर्म स्वीकार नहीं करेंगे तो धर्म के बोधक श्रुति-स्मृति-सूत्रों के बाधितत्व की आपत्ति, एवं बाह्यमत के प्रवेश की आपत्ति होगी । अत: ब्रह्म को निर्धर्मक नहीं मान सकते ।

पुन: अद्वैतवादी शंका करते हैं—

आत्मा की शक्ति अविद्या-मायादिशब्द का वाच्य है, सत्त्व-रजस्तमोमय जगत् का मूलकारण है । यह आत्मा की शक्ति पारमार्थिक सत्व का अभाव होने से असत् है, व्यावहारिक सत्यत्व के होने से सत् है । जीवेश्वर का भेद व्यावहारिक है । पारमार्थिक नहीं । भेद का प्रतिपादक शास्त्र भी व्यावहारिक है, वस्तुत: ब्रह्म ही सत्य है, जगन्मिथ्या है ।

यह माया शुद्धचित् के सम्बन्ध से—जीवत्व ईश्वरत्व की प्रयोजिका होती है । जीवेश्वर के साथ माया का सम्बन्ध अनादि है । माया का अनादित्व सभी दार्शनिकों ने स्वीकार किया है ।

अद्वैतमत में छ: अनादि पदार्थ हैं—(१) शुद्धा चित्, (२) माया, (३) अविद्या और चित् का सम्बन्ध, (४) जीव, (५) ईश्वर, (६) जीवेश्वरभेद ।

**द्वैतसिद्धान्तभङ्ग इति वाच्यम्, अनादिसान्तत्वाभ्युपगमात् । न चैवं विशुद्धचितोऽपि सान्तत्वापत्तिरिति वाच्यम्, तस्याः ज्ञानबाध्यत्वाभावात् । न चानादित्वाऽविशेषात् बाध्यत्वाबाध्यत्वयोर्नियामकाभाव इति वाच्यम् । आरोपितत्वानारोपितत्वयोरेव बाध्यत्वाबाध्यत्वयोर्नियामकत्वात् ।**

**एतदुक्तं भवति—बन्धस्य सत्यत्वाङ्गीकारे तस्य निवृत्तियोगान्मोक्षशास्त्रवैयर्थ्यं प्रसज्ज्येत । ज्ञानमात्रनिवर्त्यस्य क्वाऽपि सत्यत्वाऽदर्शनात् सत्यस्य चात्मनो निवृत्त्यदर्शनाच्च । अतोऽध्यस्तत्वमङ्गीकर्तव्यम् । एवञ्चाविद्याकार्याहंकाराध्या-**

---

तथा च नोक्तदोषावकाश इत्याशयेनोक्तशङ्कां व्युदस्यति—**अनादीति**। यदि तेषामनादिसान्तत्वमुररीक्रियते, तदा विशुद्धचैतन्यस्य सान्तत्वं प्रसज्येत इत्याशङ्क्य परिहरति—**न चेति**। यद्यद्ज्ञानबाध्यं तत्तत्सान्तत्वमिति नियमेन शुद्धचैतन्यस्य ज्ञानबाध्यत्वाभावेन न सान्तत्वमित्याह— **तस्या इति**। तस्याः = शुद्धचितः। एतस्य बाध्यत्वमस्याबाध्यत्वमित्यत्र किञ्चिन्नियामकं स्यात्तदा शुद्धचित् सिद्ध्येत्, तदेव तु नास्तीत्याशङ्क्यापाकरोति—**न चेति**। यदारोपितं तद्बाध्यं यदनारोपितं तदबाध्यमिति-नियामकमाह—**आरोपितत्वमिति**।

**एतदुक्तमिति**। यदुक्तं तदेतद्भवतीत्यर्थः। मिथ्याभूतमेव वस्तु तत्त्वज्ञानेन निवर्तत इति नियममभिप्रेत्याह—**तस्येति**। बन्धस्येत्यर्थः। यदि सत्यस्यापि ज्ञानेन

---

यदि अद्वैवादी इन छः पदार्थों का अनादित्व स्वीकार करेंगे, तो उनके मत में द्वैत स्वीकार करने की आपत्ति तथा अद्वैतसिद्धान्त हानि की आपत्तिरूप दोष होगा।

इस दोष का वारण इस प्रकार किया जाता है। जैसे—नैयायिक प्रागभाव का अनादित्व होने पर भी उसको विनाशी मानते हैं। उसी प्रकार इन छः पदार्थों का अनादित्व होने पर भी ब्रह्मज्ञाननिवर्त्यता स्वीकार की जाती है। इसलिए द्वैतापत्ति-सिद्धान्त की, हानि रूप दोष नहीं होगा।

जो ज्ञान से बाध्य होता है वह नाशवान् होता है, इस नियम से शुद्ध चैतन्य का ज्ञान बाध्यत्वाभाव होने से उसका नाश नहीं होगा।

शुद्धचित् के अनादि होने से उसके बाध्यत्वाबाध्यत्व का कोई नियामक नहीं है। ऐसी शंका नहीं करनी चाहिये—आरोपितत्वानारोपितत्व ही बाध्यत्वाबाध्यत्व का नियामक होने से शुद्ध चैतन्य अनारोपित है। अतः उसका बाध नहीं होता है, प्रपंच के चैतन्य में आरोपित होने से इसका ब्रह्मज्ञान से बाध हो जायेगा।

**आशय—**बन्ध के सत्यत्व स्वीकार पक्ष में बन्ध की निवृत्ति नहीं हो सकती। अविद्या की निवृत्ति को अद्वैतशास्त्र में मोक्ष कहा गया है। अविद्या और अविद्या के

**साऽऽजीवेश्वरादिव्यवहारसिद्धया तदनुवादपरत्वाद्भेदशास्त्रस्य नैराकाङ्क्ष्यात् ।**

**यथेदं रजतमिति प्रतीतिविषयशुक्तावारोपितरजतस्य शुक्तिस्वरूपसाक्षात्कारान्नेदं रजतम्, किन्तु शुक्तिका हि रजतवदवभासते—इति बाधो जायते । तथा अनाद्यविद्यया शुद्धात्मस्वरूपाज्ञानात्तस्मिन्नधिष्ठानभूतेऽध्यस्तं द्वैतजातप्रपञ्चं**

---

निवृत्ति: स्यात्तदा सत्यत्वाविशेषादात्मनोऽपि निवृत्ति: स्यात् । यत: सत्यभूतस्यात्मनो निवृत्तिर्न जायते, अतस्तत्त्वज्ञानं न सत्यस्य निवर्तकम् । अतो बन्धस्याध्यस्तत्त्वं वाच्यमित्यर्थ: । अध्यासप्रकारश्चेत्थम्-शुद्धे चिदात्मनि प्रथमो मायाध्यास: । ततस्तादृशाध्यासविशिष्टे चिदात्मनि मायापरिणामभूतस्याहङ्कारस्याध्यास: । अहङ्काराध्यासविशिष्टे चिदात्मन्यहङ्कारधर्माणां कामसङ्कल्पादीनामिन्द्रियधर्णाणाञ्च काणत्वादीनामध्यास: । जीवेश्वरयो: सोपाधिकत्वं समानम् । या चेयं माया शुद्धायाश्रित: स्वसम्बन्धेन जीवत्वमीश्वरत्वं च प्रदर्शयति सा तत्सम्बन्धश्चानादिरेव स्वीक्रियत इति परेषां पन्था: । तमनुसन्धायाह—**एवञ्चेति** । अध्यासाङ्गीकारे चेत्यर्थ: ।

तथा लोके शुक्ताविदं रजतमिति भ्रमस्तदुत्तरकाले नैदं रजतं किन्तु शुक्तिरियमित्यधिष्ठानसाक्षात्कारेण भ्रमो निवर्त्तते, तथा अनाद्यविद्यया शुद्धचैतन्याज्ञानात्तस्मिन् सकलमिदं विश्वमध्यस्तं पुनर्जीवब्रह्मणोरक्यज्ञानाद् भ्रमो निवर्त्तत इत्याह—**यथेदमिति** । तस्य = द्वैतप्रपञ्चस्य । अयमर्थ: श्रीभगवत्पादैरभिहित इत्याह—**तथा चाहेति** । अध्यासस्य सद्भावं निर्णेतुमादौ प्रत्यक्षं दर्शयति-**तमिति** । तं वर्णितं साक्षिप्रत्यक्षसिद्धम् । **अविद्याख्यमिति**, सम्भावितोक्ति: । पुरस्कृत्येत्यस्य व्यवहारहेतुता स्वानुभव-

---

कार्य नामरूपात्मकप्रपंच बन्धपदवाच्य हैं । अत: बन्धसत्यत्वपक्ष में मोक्ष के प्रतिपादकशास्त्र के व्यर्थत्व की आपत्ति होगी, इसलिए बन्ध सत्य नहीं कहा जा सकता । ज्ञानमात्र से निवर्त्य वस्तु का सत्यत्व नहीं देखा जाता है । एवं सत्य आत्मा की निवृत्ति नहीं देखी जाती । इसलिए बन्ध की अध्यस्यता स्वीकार करनी चाहिये ।

इसी प्रकार अविद्या के कार्य अहंकार के द्वारा जीवेश्वरादि व्यवहार की सिद्धि होने से तदनुवादपरक भेदप्रतिपादक शास्त्र होने के कारण निराकांक्ष है ।

जैसे-"इदं रजतम्" इस प्रतीति का विषय रजत शुक्ति में आरोपित है, उसका अधिष्ठान शुक्ति के साक्षात्कार से "नेदं रजतम्" इस रूप से बाधित हो जाता है । केवल शुक्ति ही बाध के पहले रजत के समान भास रही थी, उसमें रजत नहीं था वह मिथ्या था ।

उसी प्रकार अनादि अविद्या के कारण शुद्ध आत्मस्वरूप का अज्ञान होने के कारण उस अधिष्ठानभूत आत्मा में द्वैत नामरूपात्मक सम्पूर्ण प्रपंच अध्यस्त हो जाता

**मिथ्याभूतं, तस्य पुनरात्मैकत्वविज्ञानेन निवृत्त्या नाद्वैतसिद्धान्ते कोऽपि विरोधः । तथा चाह भाष्यकारः— तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । एवमयमनादिरनन्तो नैसर्गिको मिथ्याप्रत्ययरूपः । कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः ।**

**अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति । अन्यथा सदेव सोम्येदमग्र आसीत् । छा० ६।२।१। एकमेवाद्वितीयम् ।।**

---

सिद्धत्वमुक्तम् । **सर्वाणीति** । विधिनिषेधपराणि कर्मशास्त्राणि ऋग्वेदादीनि विधिनिषेधशून्यप्रत्यग्ब्रह्मपराणि मोक्षशास्त्राणि वेदान्तवाक्यानीति विभाग इत्यर्थः । सम्प्रत्यध्यासं सप्रमाणं निगमयति—**एवमिति** । पूर्वबुद्ध्याद्यध्यासात्संस्काराध्यासस्ततस्तादृगुत्तरबुद्ध्याध्यास इति प्रवाहात्मना प्रवाह्युपादानाज्जडात्मना वाऽनादित्वम् । तत्त्वधिया विना सर्वात्मना नाशहानेरानन्त्यम् । उपादानस्य मायाशक्तितया जडस्य प्रत्यक्चैतन्यसत्त्वानुबन्धित्वादधिष्ठानधीबाध्यत्वं सिद्धवत्कृत्योक्तम्—**नैसर्गिक इति** । मिथ्याधीहेतुत्वेन तादात्म्यमाह—**मिथ्याप्रत्ययरूप इति** । कारणाध्यासो हि कार्याध्यासस्य हेतुरित्याध्यासस्य **मिथ्याप्रत्ययत्वम्** । लक्षणातस्तथा रूप्यते न प्रतीयत इति रूपग्रहणम् । तस्यानर्थहेतुतामाह—**कर्तृत्वेति** । प्रमाणं निगमयति—**सर्वेति** । साक्षिप्रत्यक्षमेवाध्यासधर्मिग्राहकमानम् । अनुमानादिकन्तु सम्भावानार्थमित्यभिप्रेत्य प्रत्यक्षोपसंहारः कृतः ।

एवमध्यासं वर्णयित्वा तत्साध्ये विषयप्रयोजने दर्शयति—**अस्येति** । कर्तृत्वाद्यनर्थहेतोरध्यासस्य समूलस्यात्यन्तिकनाशो मोक्षः, स केनेत्यत आह—**आत्मेति** । ब्रह्मात्मैक्यसाक्षात्कारस्य प्रतिपत्तिः श्रवणादिभिरप्रतिबन्धेन लाभस्तस्या इत्यर्थः । विद्यायां कारणमाह—

---

है, अतः प्रपंच मिथ्या है । पुनः आत्मतत्त्व के एकत्व विज्ञान से मिथ्या प्रपंच की निवृत्ति हो जाती है । इसलिए अद्वैत सिद्धान्त में कोई विरोध नहीं है । इन्हीं बातों को उद्देश्यकर भाष्यकार भगवान् श्रीशंकराचार्य कहते हैं, कि अविद्याख्य आत्मा-अनात्मा का एक दूसरे में अध्यास करके लौकिकवैदिक सब प्रमाण प्रमेय व्यवहार प्रवृत्त होते हैं, जो व्यवहार प्रवृत्तिपरक हैं, वे निवृत्तिपरक हैं ।

अतः यह अध्यास अनादि अनन्त नैसर्गिक मिथ्याप्रत्ययरूप है ।

यद्यपि आत्मा में कर्तृत्व-भोक्तृत्वादि धर्म नहीं हैं, किन्तु मिथ्यात्व प्रत्ययरूप अध्यास के कारण अन्तःकरण के धर्म कर्तृत्व-भोक्तृत्व का आत्मा में आरोप हो जाने से आत्मा कर्त्ता भोक्तारूप व्यवहृत होने लगता है । यह अध्यास अनर्थ (दुःख) का कारण है । इसलिए इस अनर्थ का हेतु जो अध्यास है, उस अध्यास की निवृत्ति के लिए अपेक्षित जीवपरमात्मैक्य ज्ञान के लिए ही वेदान्तों का आरम्भ होता है ।

**बृ० २।५।१९। "तत्त्वमसि" "अयमात्मा ब्रह्म" "सर्वं खल्विदं ब्रह्म" "नेह नानास्ति किञ्चन" मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। बृ० ४।४।१९। सर्वं परादाद्योऽन्यत्रात्मन सर्वं वेद। बृ० २।४।६ यत्र हि द्वैतमिव**

---

**सर्व इति**। आरभ्यते अधीत्य विचार्यत इत्यर्थ:। विपक्षे बाधकतर्कमाह–**अन्यथेति**। अद्वैते ब्रह्मणि तात्पर्यानङ्गीकार इत्यर्थ:। छान्दोग्यषष्ठे उपक्रमं दर्शयति–**सदेवेति**। उद्दालक: पुत्रमुवाच–हे सौम्य! इदं सर्वं जगद् अग्रे, उत्पत्तेः प्राक्काले सदबाधितं ब्रह्मैवासीत्। इति तन्मतानुसारेण श्रुत्यर्थ:। स्थूलं पृथिव्यादीदं बुद्धिबोध्यं प्रागुत्पत्तेर्माभूदन्यत्तु महदादिसूक्ष्ममासीदेवेति। नेत्याह–**एकमिति**। कार्यं सतोऽन्यन्नासीदेवेत्यर्थ:। तथापि मृदो घटाकारपरिणामयितृकुलालवज्जगन्निमित्तं सतोऽन्यदासीदित्याशङ्क्याह–**अद्वितीयमिति**। जीवब्रह्मणोरेकत्वबोधिकां श्रुतिमुदाहरति–**तत्त्वमसीति**। सतोऽपि चित्त्वं विना प्रधानवन्नहेतुतेत्याशङ्क्य श्रुत्यन्तरमाह–**आत्मेति**। कार्यस्य कारणब्रह्माभिन्नत्वमित्यर्थबोधिकां श्रुतिमाह-**सर्वमिति**। भेदनिषेधिकां श्रुतिमुदाहरति

---

यदि जीवपरमात्मैक्य प्रतिपत्ति के लिए वेदान्तों का आरम्भ नहीं मानेंगे तो 'सदेव सोम्येदमग्रआसीत्' एकमेवाद्वितीयम् "तत्त्वमसि, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चन, मृत्यो: स मृत्युमाप्नोति य इह द्वैतमिव भवति ॥ तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्" ॥ इन अद्वैतप्रतिपादक-भेद के निषेधक श्रुतिवाक्यों का व्याकोप हो जायेगा। अत: प्रपंच का मिथ्यात्व और ब्रह्म का सत्यत्व स्वीकार करना ही होगा।

यह भाव है–कर्तृत्वादि अनर्थ के हेतु, अध्यास समूल का आत्यन्तिक नाश और मोक्ष किस साधन से होगा ? ऐसी जिज्ञासा होने पर अद्वैत प्रतिपादक श्रुतियों का अवतार होता है। 'सदेव......आसीदिति'। वेदान्त वाक्यों के श्रवण-मनन-निदिध्यासन द्वारा ही ब्रह्मात्मैक्य साक्षात्कार होता है, यह फलत: लभ्य हो गया।

उद्दालक ऋषि अपने पुत्र श्वेतकेतु को आत्मतत्त्व का उपदेश देते हैं–हे सोम्य ! यह दृश्यमान नामरूपात्मक जगत् उत्पत्ति के पूर्व, प्राक्काल में सत् अबाधित ब्रह्मात्मक ही था। इस प्रकार यह श्रुति अद्वैतपरक है।

स्थूल पृथिव्यादि उत्पत्ति के प्राक्काल में न रहें, किन्तु सूक्ष्म महदादि के रहने में क्या अनुपपत्ति है ? अर्थात् नहीं। ऐसी शंका होने पर समाधान करते हैं "एकमेवाद्वितीयम्" इस श्रुति द्वारा कार्यकारण का अभेद होने से एक ब्रह्म ही था, ऐसा कहा गया है।

Chandogya 6.2.1

**भवति । तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदित्यादीनामद्वैतप्रतिपादकानां भेदप्रतिषेधकानां च व्याकोपः स्यादिति चेन्न । सर्वथानुपपन्नत्वात् ।**

**तथाहि– यदुक्तं बन्धस्य सत्यत्वे तस्य निवर्त्त्ययोगान्मोक्षशास्त्रवैयर्थ्यं**

---

**नेह नानास्ति किञ्चनेति** । एकत्वमेवैकं पारमार्थिकं न नानात्वमपीत्याह–**मृत्योरिति** । **यत्रेति** । यस्यां खल्वविद्यावस्थायामाभासभूतं द्वैतं सदिव भाति तत्रेतरः सन्नितरं पश्यतीति दृष्ट्यादिगोचरमुपाधिमद्वस्तु वदन्तीति तन्मतानुसारेण श्रुत्यर्थः । इति पूर्वपक्षः ।

अथ समाधानम्, उक्तां शङ्कां परिहरति–**नेति** । हेतुं वक्ति-**सर्वथेति** । हेतुमेव विवृणोति–**तथा हीत्यादिना** । प्रागुक्तार्थमनूद्यते–**यदुक्तमिति** । तस्य = बन्धस्य । सत्यस्य

---

तथापि जिस प्रकार मिट्टी को घट रूप में परिणत करनेवाला कुलाल निमित्त कारण होता है, उपादान कारण नहीं, क्योंकि वह विकार रहित हैं, वैसे ही ब्रह्म जगत् के प्रति निर्विकार होने से केवल निमित्त कारण है, उपादान कारण नहीं हो सकता । ऐसी शंका होने पर अद्वितीय श्रुति का अवतार होता है, उस समय ब्रह्म के अतिरिक्त दूसरा कुछ भी नहीं था । इस प्रकार ब्रह्म की अभिन्ननिमित्तोपादानकारणता की सिद्धि होती है ।

जीव ब्रह्म के एकत्व बोधक श्रुति को उदाहरण रूप में प्रस्तुत करते हैं— 'तत्त्वमसीत्यादि' । सत् भी चैतन्य के बिना प्रधान के समान हेतु नहीं है, ऐसी शंका होने पर—"अयमात्मा ब्रह्म" इस श्रुति का अवतार हुआ । कार्य के कारण ब्रह्म से अभिन्नत्व बोधक श्रुति को उदाहरण रूप से प्रस्तुत करते हैं—"सर्वमिति" । भेद निषेधक श्रुति–'नेह नानास्ति किञ्चनेति', एकत्व ही पारमार्थिक है, नानात्व नहीं, इसको "मृत्यो......नानैव पश्यति" इस श्रुति द्वारा दर्शाया गया है । अविद्यावस्था में मिथ्या द्वैत सत्' के समान भासता है, इतरसत् होता हुआ अपने से भिन्न को देखता है । प्रत्यक्ष का विषय वस्तु सोपाधिक मिथ्या है (ऐसा अद्वैतवादियों का मत है, उनके अनुसार श्रुतियों का अर्थ किया गया है, किन्तु उनका मत लक्षण प्रमाण से असिद्ध होने से आदरणीय नहीं है ।) अद्वैतियों का यह सिद्धान्त अनुपपन्न है, यतः इसमें कोई प्रमाण नहीं है । जो यह कथन है कि बन्ध की सत्यता होने पर उसकी निवृत्ति नहीं हो सकती, एवं मोक्षशास्त्र की व्यर्थता होगी, यह कहना असंगत है, क्योंकि "भूयश्चान्ते विश्वमायानिवृत्तिः" इस श्रुतिप्रमाण द्वारा सत्यबन्ध की निवृत्ति होने से मोक्षप्रतिपादकशास्त्र की सार्थकता है ।

सत्य की निवृत्ति नहीं होती है, यह दुराग्रहमात्र है, क्योंकि सत्य धनवस्त्रादि की निवृत्ति दानादि द्वारा होती है, यह प्रत्यक्ष दृष्ट है । सत्य मल पंक की निवृत्ति

प्रसज्ज्येतेति तन्मन्दम्, प्रमाणज्ञानाभावात्। 'भूयश्चान्ते' विश्वमायानिवृत्तिरिति शास्त्रप्रामाण्यात् सत्यस्यैव बन्धस्य निवृत्त्या मोक्षशास्त्रस्य सार्थक्यात् सत्यस्य निवृत्तिर्न भवतीति दुराग्रहमात्रम्। सत्यस्यैव धनवस्त्रादेर्दानादिना निवृत्तिदर्शनात् सत्यस्यैव मलपङ्कादेः प्रक्षालनादिना निवृत्तिदर्शनात्। न च ज्ञानमात्रनिवर्त्यस्य क्वापि सत्यत्वादर्शनादित्युक्तमेवेति वाच्यम्। सेतुदर्शनेन सत्यस्यैव पापस्य नाशदर्शनात्। ननु तस्य श्रद्धानियमादिसापेक्षज्ञाननाश्यत्वाद् बन्धस्य च 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या ज्ञानमात्रान्निवृत्तिप्रतीतेः। अतः

---

बन्धस्य निवृत्तिर्न भवतीत्यत्र प्रमाणं नास्ति प्रत्युत सत्यस्यैव बन्धस्य निवृत्तिर्भवतीत्यत्र प्रमाणमुपन्यस्यति— **भूयश्चान्त इति**। सत्ययोः विश्वमाययोः निवृत्तिरेव श्रूयते न तु स्वरूपनाश इत्यर्थः। सत एव द्रव्यस्य दानेन निवृत्तिर्दर्शनात्सत्यस्य निवृत्तिर्न जायत इति तु रिक्तं वच इत्याह–**सत्यस्येति**। यज्ज्ञानेन निवर्त्तते तन्मिथ्याभूतमिति यत् प्रागुक्तं तमाशङ्क्य परिहरति–**न चेति**। यदि तत्त्वज्ञानस्य मिथ्याभूतस्यैव निवर्त्तकत्वमभ्युपेयते तदोत्तरज्ञानेन पूर्वज्ञानस्य गरुडध्यानादिना **विषादेः** सेत्वादिदर्शनेन ब्रह्महत्यादेश्च निवृत्तिर्न स्यादतो निश्चीयते सत्यस्यापि वस्तुनो ज्ञानेन निवृत्तिर्भवतीत्याशयेनाह– **सेतुदर्शनेनेति**। सेतुदर्शनमात्रं न पापनिवर्त्तकम् किन्तु श्रद्धाविश्वासादिनियमसापेक्षं "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति" श्रुत्या बन्धं प्रति तत्त्वज्ञानत्वेन तत्त्वज्ञानस्य निवर्त्तकता बोध्यते। अतो बन्धस्य तत्त्वज्ञाननिवर्त्यत्वोपपत्तये तस्याध्यस्तत्वं वाच्यमिति शङ्कते–**नन्विति**। तस्य = पापस्य। नित्यानित्यवस्तुविवेकः शमदमादि-साधनसम्पन्नः, इहामुत्रफलभोगविरागः, मुमुक्षुत्व-श्चैतत्साधनचतुष्टयसम्पन्नोऽधिकारी। शास्त्रोक्तलक्षणगुरुमुखादौपनिषदमेव वाक्यार्थं श्रवणेन गृहीत्वा मननादिनैव ज्ञानेन

---

प्रक्षालन करने से होती है, ऐसा दृष्ट है। इससे सिद्ध होता है कि सत्यबन्ध की निवृत्ति आत्मज्ञान से होती है। यदि यह कहा जाय कि ज्ञानमात्र से निवर्त्य वस्तु सत्य नहीं है जैसे–शुक्तिका रजत।

यह शंका भी असंगत है, जैसे–सत्यसेतु के दर्शन से सत्यपाप का नाश होता है वैसे–सत्यबन्ध का भी आत्मज्ञान से नाश होता है। यदि ऐसा कहा जाय कि, श्रद्धा-नियमादि सापेक्षज्ञान से पाप का नाश होता है, केवल सेतु के साक्षात्कारमात्र से नहीं। ऐसी स्थिति में "नान्यः पन्था विद्यतेऽयनाय", इस श्रुतिप्रमाण से केवल ज्ञानमात्र से बन्ध की निवृत्ति होती है, इसलिए बन्ध सत्य नहीं है। अर्थात् श्रुतज्ञान निवर्त्यत्व के निर्वाह के लिये बन्ध का अध्यस्तत्व स्वीकार करना होगा, केवल ब्रह्मज्ञान से बन्ध की निवृत्ति होती है, ऐसे–पक्ष में भी अधिकारी के विशेषण रूप से स्वीकृत नित्यानित्यवस्तु विवेकादिकों का भी बन्ध निवृत्ति के हेतु होने से,

Yaju 31.18

**श्रुतज्ञाननिवर्त्यत्वानिर्वाहार्थमध्यस्तत्वमिति चेन्न, त्वया विवेकादीनां ब्रह्मज्ञानसाधारणकारणतयाऽधिकारिविशेषणत्वेनापेक्षितत्वात् ।**

**अन्यथा सर्वेषां संसारिणां साधनं विनैव ज्ञानापत्त्या सर्वमोक्षप्रसङ्गात् । नापि निर्विशेषाद्वितीयस्य चेतनमात्रस्य वस्तुनोऽधिष्ठानत्वं सम्भवति, सामान्यविशेषधर्मवत्त्वस्याधिष्ठानत्वप्रयोजकत्वात् सामान्येन ज्ञातं विशेषेणाज्ञातमेवाधिष्ठानं लोके प्रसिद्धम् । यथेदं रजतमित्यत्रेदन्ता सामान्यधर्मो**

---

त्वयापि बन्धनिवृत्तिः स्वीकृता । तथा च न ज्ञानमात्रनाश्यत्वं बन्धस्येत्याशयेनोक्तां शङ्कां परिहरति–**नेति** ।

न च नियमादीनामधिकारित्वसम्पादनेनैवोपक्षीणत्वेन कर्मवन्न ज्ञानापेक्षेति वाच्यम् । प्रकृतेऽपि नियमादीनां ह्यधिकारित्वसम्पादनपरत्वेन सेतुदर्शने तदनुपयोगान्नोक्तदोषावकाशस्तस्माच्छ्रुतिबलात्सत्यस्यैव बन्धस्य निवृत्तिसम्भवेनाध्यस्तत्ववर्णनस्य दुराग्रहमात्रत्वादिति भावः । विपक्षे बाधकतर्कमुपन्यस्यति–**अन्यथेति** । विवेकादीनामधिकारिविशेषणत्वाभाव इति तदर्थः । अधिष्ठानत्वप्रयोजकरूपाभावेन ब्रह्मण्यध्यासाधिष्ठानत्वं न सम्भवति, तत्त्वाभावेनाध्यासो न सिद्ध्यतीत्याशयेनाह–**नापीति** । यदि सामान्येन ज्ञातं सद् विशेषेणाज्ञातं स्यात्तदाऽधिष्ठानं स्यात्, दृष्टं चैतद् इदं रजतमित्यत्रेदन्त्वरूपसामान्यधर्मो रजतत्वस्य साधकः शुक्तौ वर्त्तते, शुक्तित्वञ्च

---

केवल आत्मज्ञान बन्ध का निवर्तकत्वमात्र नहीं है। (अतः केवल आत्मज्ञानमात्र निवर्तकत्व बन्ध के न होने से बन्ध का मिथ्यात्व सिद्ध नहीं होगा।)

यदि अधिकारी विशेषणत्वरूप से अभिप्रेत हैं, विवेकादिकों को बन्ध निवृत्ति के प्रति हेतु नहीं मानेंगे, तो सभी सांसारिक व्यक्तियों को साधन के बिना ही ज्ञान होने से सभी के मोक्ष होने की आपत्ति होगी। अतः आत्मज्ञान से सत्यबन्ध की निवृत्ति होती है, मिथ्याबन्ध की नहीं।

निर्विशेष-अद्वितीय चेतन वस्तु जगत् का अधिष्ठान नहीं हो सकता, सामान्य विशेष धर्मवत्त्व ही अधिष्ठानत्व का प्रयोजक होता हैं। लोक में जो सामान्य रूप से ज्ञात और विशेष रूप से अज्ञात वस्तु है, वही अधिष्ठान कही जाती है। जैसे–शुक्ति में "इदं रजतम्" ऐसा ज्ञान होता है–यहां शुक्ति का इदन्त्व सामान्य धर्म है, वह रजत का साधक है, शुक्तित्व शुक्ति का विशेष धर्म है, वह रजत का बाधक है। यह लोक में सर्वानुभवसिद्ध है। अद्वैत मत में चिन्मात्र ब्रह्म में उभय धर्मों को कह सकते हैं। निर्विशेष चिन्मात्र ब्रह्म में सामान्य-विशेष धर्मों को स्वीकार करने पर, अद्वैतमत की हानि होगी।

**रजतस्य साधकः शुक्तौ वर्तते। शुक्तित्वं च विशेषधर्मस्तस्य बाधकः सर्वानुभवप्रसिद्धः। न तथा निर्धर्मके चिन्मात्रे, उभयधर्मवत्वं वक्तुं शक्यम्, सिद्धान्तभङ्गात्। कथञ्चित् सामान्यधर्म्माङ्गीकारेऽपि विशेषधर्मानङ्गीकारेण तद्बाधायोगाच्च।**

---

विशेषधर्मस्तस्य बाधक इति तस्या अधिष्ठानत्वमुपपद्यते, नैवं ब्रह्मणि सम्भवति तस्य निःसामान्यत्वनिर्विशेषत्वादित्याह-**निर्विशेषेति**। विशेषेणाज्ञातं यदधिष्ठानप्रयोजकरूपं तस्याभावसूचनाय निर्विशेषाद्वितीयचेतनमात्रस्येत्युक्तम्। अधिष्ठानप्रयोजकरूपमुपादत्ते-**सामान्येनेति**। तमुदाहरति-**यथेदमिति**। तस्य = रजतस्य। उभयधर्मवत्त्व = सामान्यधर्मविशेषधर्मवत्त्वम्। सिद्धान्तभङ्गात् = उभयधर्मवत्त्वाङ्गीकारं निर्विशेषचिन्मात्रं ब्रह्मेति सिद्धान्तभङ्गाद् ब्रह्मणि सामान्यधर्ममभ्युपेत्याह-**कथञ्चिदिति**। तद्बाधायोगाच्च = सामान्यधर्मबाधाभावात्। यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वच्चतुष्कोणाद्याकारं भवति, तथा विषयेन्द्रियसत्सम्प्रयोगे सति सावयवं तैजसमन्तकरणं चक्षुरादिद्वारेण निर्गत्य ध्रुवादिविषयपर्य्यन्तं चक्षुर्वच्छीघ्रं प्रभाकारेण परिणम्य विषयं प्राप्य तदाकारं भवति, सेयं वृत्तिरित्युच्यते। तथा च मूर्तेष्वमूर्तेषु सर्वेषु पदार्थेष्वन्ततो विद्यमानमपि चैतन्यं मनोवृत्त्याभिव्यज्यते। तदभिव्यक्तचैतन्यं ज्ञानपदवाच्यं तच्च विषयादभेदेनाभिव्यक्तं स्फुरणमित्युच्यते।

---

कथञ्चित् सामान्य धर्माङ्गीकार करने पर भी विशेष धर्म के अङ्गीकार न करने से रजत का बाध नहीं होगा।

यथा तडागोदक (तडाग का जल) छिद्र से निकलकर नालिका से केदार क्षेत्र देश में जाकर क्षेत्र के समान चतुष्कोणाद्याकाररूप से परिणत हो जाता है, उसी प्रकार विषयेन्द्रिय के सम्प्रयोग होने से सावयव तैजस अन्तःकरण चक्षुरादि द्वार से निकल—कर घटादि विषयपर्यन्त चक्षुः के समान शीघ्र प्रभाकार में परिणत होकर, विषय को प्राप्त करके विषयाकार हो जाता है, यही अन्तःकरण की विषयाकाराकारितवृत्ति कही जाती है। इस प्रकार सम्पूर्ण मूर्तामूर्त पदार्थों में विद्यमान चैतन्य मन की वृत्ति द्वारा अभिव्यक्त होता है। वह वृत्ति से अभिव्यक्त चैतन्य ही ज्ञानपद वाच्य है। वह विषय के साथ अभिन्न होने से अभिव्यक्त स्फुरण कहा जाता है। स्फुरण धर्म के ब्रह्म में रहने से ब्रह्म के अधिष्ठानत्व की उपपत्ति होती है। शुभकर्मजन्य वृत्तिविशेष औपाधिक आनन्दादि धर्म ब्रह्म में स्वीकार किये जाते हैं। अधिष्ठान के प्रयोजक आनन्दादि धर्मों के होने से अध्यास की उपपत्ति होती है।

**ननु बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं विषयाभेदेनाभिव्यक्तं स्फुरणं शुभकर्म-जन्यवृत्तिव्यक्तमानन्द इत्येवं वृत्त्युपाधिकृतभेदाज्ज्ञानादीनामात्मधर्मत्वव्यपदेशः, तदुक्तं टीकायाम्–आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवाभासन्त इतीति चेन्न, तुच्छोक्तेः । बुद्ध्यादीनां तद्वृत्तीनां च सत्यत्वे सिद्धान्तभङ्गः । असत्त्वे, उक्तार्थासिद्धेः, न च तेषां कल्पितत्वमिति वाच्यम्, अधिष्ठानकल्पकादेरेवाभावात् कल्पितत्वस्य का वार्ता, ग्रामाभावे**

---

स्फुरणधर्मस्य ब्रह्मणि सत्त्वात्तस्याधिष्ठानत्वमुपपद्यत इत्याशयेन शङ्कते–**नन्विति** । आनन्दशब्दार्थं व्याचष्टे–**शुभेति** । औपाधिका ज्ञानानन्दादयो धर्मा ब्रह्मण्यभ्युपेयन्त इत्यधिष्ठानप्रयोजकधर्मवत्त्वस्य तत्र सत्त्वादध्यास उपपद्यत इत्याह–**वृत्त्युपाधिकृतेति** । उक्तार्थं पञ्चपादिकाचार्यवचसा द्रढयति–**तदुक्तमिति** । बुद्ध्यादयः सत्यभूता मिथ्या वेति विकल्प्योक्तशङ्कां व्युदस्यति–**नेति** । आद्यविकल्पं निरस्यति-**बुद्ध्यादीनामिति** । सिद्धान्तभंगः = अद्वैतसिद्धान्तभङ्गः । सत्यस्य बुद्ध्यादिद्वितीयस्य सत्त्वात् । **उक्ता-र्थासिद्धेरिति** । यदि बुद्ध्यादीनां तद्वृत्तीनामसत्त्वमुच्यते तदा बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं ब्रह्मधर्म इत्युक्तिरसङ्गता प्रतिभाति, न ह्यसतो व्यञ्जकत्वमुपपद्यत इति भावः । ज्ञानानन्दादीनां धर्माणां कल्पितत्वमभ्युपेत्य ब्रह्मण्यधिष्ठानत्वमुपपद्यत इत्याशङ्क्य परिहरति–**न चेति** । तेषाम् = ज्ञानादीनाम् । यद्यधिष्ठानस्य कल्पकः कश्चित् स्यात्तदा तेन कल्पकेन कल्पिता धर्मा ज्ञानानन्दादयो ब्रह्मणि स्युस्तदेव तु नास्तीत्याशयेनोक्तां शङ्कां परिहरित–**अधिष्ठानकल्पकादेरिति** । उक्तार्थं दृष्टान्तेन परबुद्धावारूढं करोति–**ग्रामाभाव इति** । ग्रामसत्त्व एव सीमायाः कल्पनं न तु तदभावे तत्कल्पनम्

---

बुद्धिवृत्ति से चैतन्य अभिव्यक्त होता है—यहां पर बुद्ध्यादि सत्य हैं, या मिथ्या ? सत्य मानने पर अद्वैत सिद्धान्त भंग हो जायेगा । बुद्ध्यादि-तद्वृत्ति के मिथ्या होने पर चैतन्य की अभिव्यक्ति नहीं हो सकती । यदि बुद्ध्यादिकों का कल्पितत्त्व स्वीकार किया जाय, तो कल्पित धर्म द्वारा अधिष्ठान की कल्पना नहीं हो सकती । इसलिए बुद्ध्यादि को सत्य स्वीकार करना होगा ।

जैसे–ग्राम के सत्त्व होने पर ही सीमा की कल्पना होती है, वैसे ही बुद्ध्यादि के सत्य होने पर ही अधिष्ठान की कल्पना होगी । अतः आत्मज्ञान से सत्यबन्ध की निवृत्ति होती है, न कि मिथ्याबन्ध की ।

अज्ञान का आश्रय तथा विषय का प्रयोजक न होने से अध्यास की सिद्धि नहीं हो सकती ।

अज्ञान का आश्रय-ज्ञान मात्र ब्रह्म है, अथवा जीव है ? अथवा अन्य कोई ? १. आद्य पक्ष ज्ञानमात्र ब्रह्म, अज्ञान का आश्रय नहीं हो सकता, क्योंकि ज्ञानमात्र स्वयं

सीमावत् । किञ्चाज्ञानस्याश्रयविषयप्रयोजकाभावादप्यध्यासाभाव:, तत्राज्ञानस्याश्रयो ज्ञानमात्रं ब्रह्मैव जीवो वाऽन्यद्वा । नाद्य:-ज्ञानमात्रस्वयंज्योतियो वस्तुनोऽज्ञानाश्रयत्वानर्हत्वात् । सूर्यस्यान्धकाराश्रयत्वमनुन्मत्त: को ब्रवीतीति भाव: । नापि जीव: । तस्याध्यासकार्यत्वेन तदुत्तरभावित्वात् ।

न तृतीय: । उभयभिन्नचेतनस्यादृष्टाश्रुतत्वात् । तथा को वाऽज्ञानविषय: शुद्धानुभवमात्रम्, उत तदभिन्नम् । नाद्य: । तस्य भवन्मते ज्ञानाविषयत्वेना-

---

इत्यधिष्ठानाभावेनाध्यासस्यासम्भव: । अज्ञानस्याश्रयविषयप्रयोजकानामभावेनाध्यासो न सिद्ध्यतीत्याह–**किञ्चेति** । अज्ञानाश्रयत्वं ब्रह्मण इति मन्यन्ते वादिनस्तन्मतं निराचिकीर्षुस्त्रिधा विकल्पयति–**तत्रेति** । तेषु मध्ये इत्यर्थ: । यदि शुद्धं ब्रह्मज्ञानाश्रय: स्यात्तदाशुद्धत्वं व्याहन्येतेत्याशयेनाद्य-पक्षमपाकरोति–**नाद्य इति** । चिन्मात्रस्य ज्ञानाश्रयत्वं वदता ज्ञानस्यैव तदाश्रयत्वमुक्तं भवति । तथा चैकविषययोर्ज्ञानाज्ञानाश्रययोर्विरुद्धत्वान्नाश्रयाश्रयिभाव: सम्भवति । यथा चाज्ञानं ज्ञानाश्रितं न भवति तद्विरुद्धत्वाद् यद्यद्विरुद्धं तत्तदाश्रितं न भवति । यथा न तम: प्रकाशाश्रितमिति भाव: ।

जीवस्याज्ञानकल्पितत्वेनाज्ञानाश्रयत्वं नोपपद्यत इत्याशयेन द्वितीयकल्पं निरस्यति–**नापीति** । तदुत्तरभावित्वादज्ञानोत्तरभावित्वात् । "पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर:" इति तदुक्ते: । तृतीयकल्पमपाकरोति–**न तृतीय इति** । **उभयभिन्नेति** । ब्रह्मजीवभिन्नचेतनस्येत्यर्थ: । अज्ञानस्य चिन्मात्रमेव विषय इति विवरणकारोक्तमतं दूषयितुमुपन्यस्यति–**तथेति** । विकल्पयति–**को वेति** । तद्भिन्नम् = शुद्धानुभवमात्रभिन्नम् । शुद्धानुभवरूपायाश्रित: ज्ञातृत्वं तन्मते नास्ति चेत् कथमज्ञानविषयत्वं तस्य

---

ज्योति वस्तु अज्ञान के आश्रयत्व के अनर्ह हैं । सूर्य अन्धकार के आश्रय हैं, यह उन्मत्त ही कह सकता है, सावधानचित्त व्यक्ति नहीं ।

अत: स्वयं ज्योति ज्ञानमात्र अज्ञान का आश्रय नहीं हो सकता ।

२. जीव भी अज्ञान का आश्रय नहीं हो सकता, यत: जीव अध्यास का कार्य है, उत्तर-काल भावी है–अज्ञान के पूर्वकाल में न होने से वह अज्ञान का आश्रय नहीं हो सकता ।

३. जीव और ब्रह्म से भिन्न अन्य चेतन न दृष्ट है, और न श्रुत है । इसलिए जीव और ब्रह्म से भिन्न चेतन की असिद्धि होने के कारण इन दोनों से भिन्न चेतन अज्ञान का आश्रय नहीं हो सकता ।

किञ्च–अज्ञान का विषय क्या शुद्ध अनुभव है ? अथवा अभिन्न है ?

१. आद्य पक्ष–अर्थात् शुद्ध अनुभव अज्ञान का विषय नहीं हो सकता है,

**ज्ञानविषयत्वानर्हत्वात् । अज्ञानतन्निवर्तकज्ञानयोरेकाधिकरणवदेकविषयस्यापि नियमात् ।**

**न द्वितीयः, ज्ञानाज्ञानोभयभिन्नस्य तदानीमभावात् । तद्भिन्नस्य सर्वस्यापि तत्कार्यत्वेन तद्विषयत्वायोगात् । ननु गृहोदरवृत्तितमसो यथा गृहमेवाश्रयो विषयश्चेति प्रत्यक्षसिद्धम् । तथात्रापि शुद्धं ब्रह्मैवाज्ञानस्याश्रयो विषयश्चेति**

---

स्यादित्याशयेनाद्यकल्पं व्युदस्यति–**नाद्य इति** । तस्य = शुद्धानुभवमात्रस्य । यथा यत्राज्ञानं वर्तते तत्रैव तन्निवर्त्तकमपि वर्त्तत इत्यवश्यमभ्युपेयम् । कथमन्यथा तयोर्निवर्त्य निवर्तकभावः सिद्ध्येत् । तथैव यत्राज्ञानविषयत्वमभ्युपेयते तत्रैव ज्ञानविषयत्वमभ्यु-पेयमित्याह–**अज्ञानेति** । अज्ञानाज्ञाननिवर्तकज्ञानयोरेकाधिकरणवृत्तित्वं यथा स्वीक्रियते, तथैव ज्ञानविषयत्वाज्ञानविषयत्वयोरपि सामानाधिकरण्यं वाच्यमित्यर्थः ।

नापि जीवोऽज्ञानविषयस्तस्याज्ञानकार्यत्वेनोत्तरभावित्वादित्याशयेन द्वितीयपक्षमपि निरस्यति-**न द्वितीय इति** । तदानीम् = सृष्ट्युत्पत्तेः प्राक् । तद्भिन्नस्य = ज्ञानाज्ञानोभयभिन्नस्य तत्कार्यत्वेन = अज्ञानकार्यत्वेन । तद्विषयत्वायोगात् = अज्ञानविषयत्वायोगात् । एकस्मिन्नेव धर्मिणि ज्ञानविषयताऽज्ञानाश्रयता चाभ्युपेयते, अमुमर्थं दृष्टान्तेन परबुद्ध्यारूढं कुर्वन्नाशङ्कते **नन्विति** । दृष्टान्तवैषम्येनोक्तां शङ्कां परिहरति–**नेति** । दृष्टान्तवैषम्यं विवृणोति–**गृहतमसोरिति** । इतरेतराविरोधित्वादिति । न हि गृहस्य तमो विरोधिता, नापि तमसो गृहविरोधिता । उभयोरज्ञानरूपत्वादित्यर्थः । अज्ञानाज्ज्ञानं विलक्षणम्, तयोरकरूपत्वाभावात् परस्परविरोधित्वाच्चेति दार्ष्टान्ते वैषम्यमाह–**दार्ष्टान्तिक इति** । इतरेतरविरोधित्वात् =

---

क्योंकि जहां अज्ञान होगा, वहीं पर अज्ञान का निवर्तक शुद्ध अनुभव को भी मानना होगा । इस प्रकार दोनों का परस्पर निवर्त्य-निवर्तकभाव नहीं बन सकता है । अर्थात् एक ही अधिकरण में ज्ञान तथा अज्ञान दोनों के अधिकरणता की आपत्ति होगी ।

यदि अज्ञान और ज्ञान में अभेद मानेंगे तो दोनों के समान विषयत्व की आपत्ति होगी । इसलिए ज्ञान और अज्ञान का अभेद नहीं माना जा सकता ।

ज्ञान से भिन्न अज्ञान का सम्पूर्ण नामरूपात्मक जगत् कार्य होने से अज्ञान का विषय नहीं हो सकता है ।

यदि कहें कि गृह के भीतर रहने वाला जो तम है, उसका आश्रय और विषय भी तम है, यह प्रत्यक्ष सिद्ध है । उसी प्रकार अज्ञान का आश्रय तथा अज्ञान का विषय भी शुद्ध ब्रह्म है ।

ऐसी शंका निर्मूल है, क्योंकि दृष्टान्त की विषमता है । गृह और तम दोनों ही अज्ञान के कार्य हैं, इसलिए दोनों परस्पर अविरोधी हैं । किन्तु दार्ष्टान्तिक में ज्ञान और

**चेन्न दृष्टान्तवैषम्यात्** । **गृहतमसोरज्ञानरूपत्वेनेतरेतराविरोधित्वात्** । दार्ष्टान्तिके तु **ज्ञानाज्ञानयोरत्यन्तविजातीयत्वेनेतरेतरविरोधित्वात्** । न हि सूर्यस्यान्धकाराश्रयत्वं **तद्विषयत्वं वा कोटिचतुर्मुखैरपि संभावयितुं** शक्यम् । किञ्चाध्यासोपादानं **ब्रह्मणि यदज्ञानमङ्गीकृतं तत्स्वप्रयुक्तं ब्रह्मप्रयुक्तमन्यप्रयुक्तं** वेति विवेचनीयम् । **नाद्यः** । **आत्माश्रयदोषप्रसङ्गात्** । **जडस्य प्रयोक्तृत्वासम्भवाच्च** । **अन्यथा घटादावपि प्रयोक्तृत्वापत्तेः** । **न द्वितीयः** । **प्रयोक्तृत्वस्य कर्तृत्वविशेषधर्मवत्वात् तस्य त्वन्मतेऽध्यासवत्पुरुषाश्रयत्वाच्छुद्धेः तदसम्भवात्** ।

---

ज्ञानस्याज्ञानविरोधिता, अज्ञानस्य ज्ञानविरोधितेत्यर्थः । यथा प्रचण्डमार्तण्डमण्डलेऽन्धकाराश्रयत्वं तद्विषयत्वं नास्ति, तथा स्वयंप्रकाशे शुद्धे ब्रह्मण्यज्ञानाश्रयत्वं तद्विषयत्वं कथमपि नोपपद्यत इत्याह–**न हीति** । इत्यज्ञान-विषयत्वतदाश्रयत्वभङ्गः । यद्यध्यासस्य कारणं यदज्ञानं ब्रह्मवृत्तितयाऽभ्युपेयते तस्य प्रयोजकं पृच्छति–**किञ्चेति** । तत् = अज्ञानम् । स्वप्रयुक्तम् । अज्ञानप्रयुक्तम् । अज्ञानस्य प्रयोजकत्वज्ञानमिति यावत् । आद्यपदं निरस्यति–**नाद्य इति** । **आत्माश्रयापत्तेरिति** । अज्ञानोत्पत्तावज्ञानस्यापेक्षणादात्माश्रयः । यदि स्वोत्पत्तौ स्वस्यापेक्षितत्वं स्यात्तदा स्वभिन्नं स्यादिति तर्कमुद्रया तस्य दूषकत्वं बोध्यमित्यर्थः । चेतनस्यैव प्रयोजकत्वं न त्वचेतनस्येत्याशयेनाह–**जडस्येति** । विपक्षे बाधकतर्कमुपन्यस्यति–**अन्यथेति** । अचेतनस्यापि प्रयोजकत्वाभ्युपगम इति तदर्थः । यत् सत्क्रियं तदेव प्रयोजकं शुद्धचैतन्यस्य तव मते निष्क्रियत्वात्तस्याज्ञानप्रयोजकत्वं नोपपद्यत इत्याशयेन द्वितीयविकल्पमपाकुरुते = **न द्वितीये इति** । तस्य = कर्तृत्वविशेषधर्मस्य । त्वन्मते = अत्यन्ताभेदवादिमते । तदसम्भवात् । कर्तृत्वासम्भवात् । अन्यथा शुद्धत्वं व्याहन्येत ।

---

अज्ञान दोनों परस्पर अत्यन्त विजातीय हैं । इसलिए दोनों एक दूसरे के विरोधी हैं, जैसे–सूर्य अन्धकार का आश्रय और विषय नहीं हो सकता, क्योंकि दोनों परस्पर विरोधी है । दोनों का अविरोध करोड़ों ब्रह्मा भी नहीं कर सकते हैं । उसी प्रकार ज्ञान और अज्ञान के विरोध का वारण कोई नहीं कर सकता है ।

किञ्च–अध्यास के उपादान कारण अज्ञान को ब्रह्म में स्वीकार किया है–क्या वह स्वप्रयुक्त है ? अथवा ब्रह्मप्रयुक्त है ? अथवा अन्यप्रयुक्त है ?

**प्रथम पक्ष संगत नहीं है**–आत्माश्रय दोष होने से । अज्ञान की उत्पत्ति में अज्ञान की अपेक्षा होने से आत्माश्रय दोष है । यदि जड वस्तु का प्रयोक्तृत्व मानें तो घटादि में भी प्रयोक्तृत्व की आपत्ति होगी ।

**द्वितीय पक्ष भी असंगत है**–प्रयोक्तृत्व के कर्त्ता के कर्तृत्व रूप विशेष धर्म होने से, अद्वैत मत में अध्यास के समान पुरुष के आश्रय होने से, निर्धर्मक शुद्ध ब्रह्म में नहीं हो सकता है ।

**अपि च देवतिर्यङ्मनुष्यनारक्यादियोनिप्राप्तिरूपानर्थहेतोरविद्यायाः स्वरूपं शुद्धं ब्रह्म जानाति न वा। जानाति चेत्तथा ज्ञात्वा को वा अकर्मवश्यः स्वतन्त्रस्तामात्मनि प्रयुञ्ज्यात्। ज्ञातृत्वापत्त्या भवन्मते शुद्धत्वहानेश्च। न जानाति चेदज्ञतापत्त्या ब्रह्मत्वासिद्धेः शुद्धं चिन्मात्रं न ब्रह्म अज्ञसत्त्वात् संसारिजीववदित्यनुमानात्। नापि तृतीयः। उभयेतरवस्त्वनङ्गीरात्। अङ्गीकारे**

---

द्वितीयकल्पे सकलानर्थकारणीभूताया अविद्याया स्वरूपज्ञानं शुद्धब्रह्मणोऽस्ति न वेति शङ्कते–**अपि चेति**। तथा ज्ञात्वा = अविद्ययाऽनर्थोत्पादकत्वस्वरूपं ज्ञात्वा। ताम्। अविद्याम्। यदि ब्रह्मणोऽविद्या-स्वरूपज्ञातृत्वमभ्युपेयते तदा शुद्धत्वं व्याहन्येत इत्याह–**ज्ञातृत्वेति**। यदि ब्रह्म अविद्यायाः स्वरूपं न जानातीत्युच्यते तदा सर्वज्ञस्य ब्रह्मणोऽज्ञत्वं प्रसज्येत इत्याशयेनाह-**न जानातीति**। प्रयोगं दर्शयति-**शुद्धमिति**। **अन्यप्रत्युक्तमिति**। तृतीयविकल्पमपाकरोति–**नापि तृतीय इति**। **उभयेतरेति**। ब्रह्मज्ञानेतरवस्त्वंनङ्गीकारादित्यर्थः। चिदज्ञानोभयातिरिक्तस्याज्ञानप्रयोजकस्य स्वीकारेऽनवस्थादोषप्रसङ्ग इत्याह–**अङ्गीकारे चेति**। **अनवस्थापत्तेरिति**। अज्ञानसिद्धौ तत्प्रयोजकज्ञानान्तरसिद्धिस्तत्प्रयोजकसिद्धौ, अज्ञानसिद्धिस्तत्सिद्धौ तत्प्रयोजकज्ञानान्तरं कल्पनीयमित्येवं परम्परायामनवस्थेत्यर्थः। इति पराभिमतज्ञानप्रयोजकभङ्गः। अज्ञानस्य सत्यत्वमसत्यत्वं वेति विकल्पयति–**किञ्चेति**। आद्यपक्षं निरस्यति–**नाद्य इति**। सत एवाधिष्ठानरूपावरकत्वं न त्वसत इत्याशयेन द्वितीयकल्पमपि निराकरोति–**न द्वितीय इति**। अधिष्ठानस्वरूपावरण एवाध्यासस्तदभावे तदभाव इत्याह–**अधिष्ठानेति**।

---

यदि देव-तिर्यङ्-मनुष्य-नारक्यादि योनिप्राप्तिरूप अनर्थ के हेतु अविद्या के स्वरूप को शुद्ध ब्रह्म जानता है कि नहीं ?

यदि अविद्या के स्वरूप को जानता है, तो कर्म के वश्य न होता हुआ स्वतन्त्र ब्रह्म मैं अज्ञ हूँ" इसे अपने आत्मा में कैसे प्रयोग करेगा ? अर्थात् प्रयोग नहीं करेगा। एवं शुद्ध निर्धर्मक ब्रह्म में ज्ञातृत्व की आपत्ति होने पर अद्वैत मत में ब्रह्म के शुद्धत्व की हानि हो जायेगी।

यदि नहीं जानता है तो ब्रह्म के अज्ञतापत्तिरूपदोष होने से उसकी सर्वज्ञता न होने से ब्रह्मत्व की असिद्धि हो जायेगी। सांसारिक जीव के सदृश अज्ञतारूपदोष होने से ब्रह्म के शुद्ध चिन्मात्रस्वरूपता की हानि हो जायेगी। यहां अनुमान प्रयोग होता है-शुद्ध चिन्मात्र ब्रह्म नहीं है, अर्थात् ब्रह्म से भिन्न है, अज्ञतावत्त्वात् अर्थात् अज्ञता के होने से सांसारिक जीव के समान।

तृतीय पक्ष भी संगत नहीं है–क्योंकि अद्वैत मत में जीव ब्रह्म से भिन्न वस्तु नहीं मानी जाती, अविद्या और अविद्या का कार्य सभी अवस्तु हैं।

यदि अविद्या कार्य दूसरी वस्तु मानी भी जाय तो अनवस्था दोष होगा, क्योंकि

**च तत्राप्युक्तयुक्त्या प्रयोजकान्तरं तस्याप्यन्यदित्यनवस्थापत्तेः । किञ्चाज्ञानस्य सत्त्वमसत्त्वं वा । नाद्यः । भवतामनङ्गीकारात् । न द्वितीयः । असतः आवरकत्वासम्भवात् । अधिष्ठानावरणाभावेऽध्यासाभावः । नहि शुक्तिस्वरूपे भासमाने रजतारोपो भवतीति भावः । किञ्च स्वप्रकाशे आवरणासम्भवेऽपि, अध्यासार्थं दुराग्रहेण तदङ्गीकारे च किं तद् ब्रह्मस्वरूपावरकं तद्धर्मविशेषावरकं वेति वाच्यम् । नाद्यः जगदान्ध्यप्रसङ्गात् । न द्वितीयः स्वरूपेतरधर्मानङ्गीकारात् । अन्यथा सिद्धान्तभङ्गप्रसङ्गात् ।**

---

यद्यपि स्वप्रकाशे सदा भासमाने प्राप्तप्रकाशप्रतिबन्धरूपाऽऽवृत्तिर्नोपपद्यते तथाप्यध्याससिद्धये दुराग्रहमात्रेणाज्ञानरूपमावरणं भवद्भिरभ्युपेयते, तेन ब्रह्मस्वरूपमाव्रियते, आहोस्वित्द् ब्रह्मणि विद्यमाना ये ज्ञानानन्दादयो धर्मा वाऽऽव्रियन्त इत्याशयेनाह–**किञ्चेति** । आव्रियतेऽनेनेति व्युत्पत्त्याऽज्ञानमावरणमिह विवक्षितम् । तत् = आवरणम् । तद्धर्मविशेषावरकम् = ब्रह्मणो धर्मविशेषाः ज्ञानानन्दपूर्ण-त्वादयस्तेषामावरकम् । ब्रह्मणि सिद्धप्रकाशलोपरूपावरणस्वीकारे जगत आन्ध्यं प्रसज्येत तद्भासैव सर्वस्य भानं भवति "तस्य भासा सर्वमिदं विभाति" इति श्रुतेरित्याशयेनाद्यविकल्पं निरस्यति–**नाद्य इति** । स्वरूपातिरिक्तधर्मा ब्रह्मणि न सन्तीति भवतां राद्धान्त इत्याशयेन द्वितीयविकल्पमपि दूषयति–**न द्वितीय इति** । विपक्षे बाधकतर्कमुपन्यस्यति–**अन्यथेति** । स्वरूपेतरधर्माभ्युपगम इति तदर्थः ।

---

दूसरी वस्तु का प्रयोजक अन्य अज्ञान होगा, इस प्रकार अनन्त अप्रामाणिक पदार्थ कल्पनापत्तिरूप अनवस्था दोष होगा ।

किञ्च–अज्ञान सत्य, अथवा असत्य है ? अज्ञान सत्य नहीं हो सकता है, क्योंकि अज्ञान का सत्यत्व अद्वैतियों के द्वारा स्वीकृत नहीं है ।

द्वितीय अज्ञान का असत्वपक्ष भी संगत नहीं है । असत् अज्ञान का आवरकत्व नहीं हो सकता, क्योंकि अधिष्ठान के आवरणाभाव से अध्यास का अभाव हो जायेगा । जैसे–शुक्ति के स्वरूप का अवभास होने पर रजत का आरोप नहीं होता है, वैसे ही असत् अज्ञान से अधिष्ठान का आवरण होने से अध्यास नहीं हो सकेगा ।

यद्यपि स्वप्रकाश आत्मा में आवरण का होना असम्भव है, तथापि अध्यास के लिए दुराग्रहपूर्वक स्वीकार करने पर, वह अज्ञान ब्रह्म के स्वरूप का आवरक है ? अथवा ब्रह्म के धर्म विशेष का आवरक है ?

प्रथम पक्ष संगत नहीं है, क्योंकि वह अज्ञान यदि ब्रह्म के स्वरूप का आवरक है, ऐसा स्वीकार करने पर जगत् के आन्ध्य की आपत्ति होगी ।

द्वितीय पक्ष भी असंगत है, क्योंकि अद्वैत सिद्धान्त में ब्रह्म के स्वरूप से अतिरिक्त धर्मविशेष को ब्रह्म में नहीं माना गया है । यदि धर्म विशेष को ब्रह्म में माना जाय तो अद्वैत सिद्धान्तभङ्ग हो जायेगा ।

**ननु निर्विशेषश्रुतिबाधभयाद्भिन्नधर्मानङ्गीकारेऽपि स्वरूपस्यैवानन्दांशमात्रस्याज्ञानावृतत्वेऽपि सत्तांशस्यानावृतत्वान्नोक्तदोषयोग इति चेन्न, असम्भवात् । निरवयवे वस्तुन्यंशादिकल्पनाया अन्याय्यत्वात् । सांशत्वापत्त्या मिथ्यात्वापत्तेश्च ब्रह्म । मिथ्या, सांशत्वात् घटादिवदित्यनुमानात् । निरवयवशब्दव्याकोपात्, निर्विशेषवादभङ्गाच्च । ननु यदुक्तं स्वयंप्रकाशरूपस्यात्मनोऽज्ञानाश्रयत्वाऽनर्हत्वादिति । तत् सत्यम् । तथापि अज्ञानस्य मिथ्यात्वाङ्गीकारान्नोक्तदोषस्पर्शावकाशः । तथा चोक्तं भाष्यकृद्भिः—मिथ्याज्ञाननिमित्त इति ।**

---

यद्यपि यदि ब्रह्मणि धर्मा अभ्युपेयन्ते तदा ब्रह्मणो निर्विशेषबोधकश्रुतीनां बाधः स्यादतो ब्रह्मणि स्वरूपेतरधर्मो नास्ति, तथापि ब्रह्मण्यंशद्वयमस्ति, आनन्दांशं सत्तांशञ्चाद्यस्याज्ञानावृतत्वेऽपि द्वितीयस्यांशस्यानावृत्वान्न जगदान्ध्यदोषस्य प्रसक्तिरित्याशयेन शङ्कते-**नन्विति** । न हि निरवयवे निर्विशेषे ब्रह्मण्यंशांशिभावः कल्पयितुं शक्यत इत्याशयेनोक्तां शङ्कां परिहरति—**नेति** । यदि ब्रह्मणः सांशत्वं कल्प्यते तदा तस्य मिथ्यात्वं निरवयवबोधकश्रुतीनां बाधश्च निर्विशेषवादभङ्गश्च प्रसज्येतेत्याशयेनाह—**स्वांशत्वेति** । अज्ञानस्य प्रयोजकाभावादध्यासो न सिद्ध्यतीति प्रागुक्तदोषं निरसितुं शङ्कते—**नन्विति** । उक्तार्थे स्वभाष्यसम्मतिमाह—**मिथ्याज्ञाननिमित्त इति** । मिथ्या च तदाज्ञानञ्च तदेव निमित्तमुपादानं यस्य स तथेत्यर्थः । तथा च मिथ्याज्ञानस्याज्ञानकारणस्य सत्त्वात्तथा चाज्ञानकारणा-भावादध्यासोऽनुपपन्न इति दोषो नास्तीति भावः ।

---

यद्यपि निर्विशेष श्रुतिबाध के भय से भिन्नधर्म अनङ्गीकार होने पर भी आनन्दांशमात्रस्वरूप का अज्ञान से आवृतत्व होने पर भी सत्तांश के अनावृतत्व होने से जगत् के आन्ध्यदोष की आपत्ति नहीं होगी । इस प्रकार की आशंका नहीं करनी चाहिये, क्योंकि असम्भव दोष होगा । निरवयव वस्तु ब्रह्म में अंशादि की कल्पना करना अन्याय्य अर्थात् उचित नहीं होगा ।

अंश विशेष कल्पना करने पर ब्रह्म के मिथ्यात्व की आपत्ति होगी ।

यहां पर अनुमान प्रयोग होगा—ब्रह्म मिथ्या है, सांशत्व के होने से, घटादि के सदृश, इस अनुमानप्रमाण से ब्रह्म के मिथ्यात्व की सिद्धि होने लगेगी । इसलिए ब्रह्म को सांश नहीं माना जा सकता है ।

सांश मानने पर निरवयव शब्द का व्याकोप होगा, और निर्विशेषवाद के भंग की आपत्ति होगी ।

पुनः अद्वैतवादियों द्वारा यह शंका की जा सकती है कि यद्यपि स्वयंप्रकाशरूप आत्मा का अज्ञानाश्रयत्व नहीं हो सकता, तथापि अज्ञान के मिथ्यात्व अङ्गीकार होने से कोई दोष नहीं हो सकता ।

**प्रचण्डमार्त्तण्डमण्डले पेचकानुभवसिद्धान्धकारवत्, अहमज्ञ इत्यनुभवसिद्धमज्ञानं दुरपह्नवम्। कल्पितस्याधिष्ठानास्पर्शित्वात्, नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति, चेत्सत्यम्—प्रचण्डमार्त्तण्डमण्डले पेचकानुभवसिद्धान्धकारवदिति दृष्टान्तस्य तथा स्वप्रकाशे परब्रह्मण्यपि अज्ञानकल्पका उलूकसदृशा एव ज्ञेया इति दार्ष्टान्तिकस्य वक्तव्यत्वात्। अस्मदिष्टत्वाच्च।**

---

स्वप्रकाशात्मन्यसङ्गे कथमविद्यासङ्ग इति शङ्कापनोदाय मिथ्यापदमुपन्यस्तं भगवत्पादैस्तेन भ्रान्तिज्ञानप्राप्तावज्ञानमित्युक्तं भवति। तत्र दृष्टान्तं प्रदर्शयन्नहमज्ञ इत्यनुभवं प्रमाणत्वेनोपन्यस्यति—**प्रचण्डेति**। यथा दिवाभीतमति: पेचक: सौरालोके अन्धकारमारोपयति। स चान्धकार: काल्पनिको मिथ्याभूत: सत्यभूतसौरप्रकाशाश्रितस्तथा, अहमज्ञो मामन्यञ्च न जानामि त्वदुक्तार्थं न जानामीति प्रत्यक्षप्रमाणसिद्धमज्ञानं वर्त्तत इत्यर्थ:। **अहमज्ञेति**। अहमज्ञ इत्येवमज्ञानविषयक: प्रत्यक्षानुभव एवाज्ञाने प्रमाणम्। अत्र ह्यात्मानमाश्रित्य बाह्याध्यात्मिकेषु व्याप्ता जडात्मिका अविद्याशक्तिरनुभूयते। एतच्चाज्ञानं नाज्ञानाभावस्वरूपम्, किन्तु तदपेक्षया, अन्यदेव भावरूपञ्चैतदिति भाव:। **अधिष्ठानेति**। कल्पितस्याज्ञानस्य पारमार्थिकस्वरूपज्ञानं प्रति प्रतिबन्धकत्वं नास्तीत्याह—**नित्येति**। वादिनां मध्ये न तावत्तार्किकयोगमीमांसकसाङ्ख्यानां

---

**भगवान् श्री शंकराचार्य ने कहा है—मिथ्या ज्ञान के कारण प्रमाण-प्रमेयादि व्यवहार होते हैं। जैसे–दिन के भय से पेचक (चमगादड़) ऊलूक पक्षीविशेष–प्रचण्डसौरप्रकाश में अन्धकार का आरोप करता है, वस्तुत: वह अन्धकार काल्पनिक है, मिथ्या–सत्यसूर्यप्रकाश के आश्रित है। उसी प्रकार मैं अज्ञ हूँ, अपने को तथा अन्य को मैं नहीं जानता हूँ, तुम्हारे द्वारा उक्त अर्थ को नहीं जानता हूँ, इस प्रत्यक्षप्रमाण से अज्ञान की सिद्धि होती है। किन्तु ज्ञानाभाव की अपेक्षा भिन्न भावरूप यह अज्ञान है। यह कल्पित अज्ञान अधिष्ठान का स्पर्श भी नहीं कर सकता है। यह अज्ञान नित्यस्वरूपज्ञान का अविरोधी है, इसलिए किसी प्रकार दोष की आशंका नहीं है।**

**कल्पित अज्ञान का पारमार्थिक स्वरूप ज्ञान के प्रति प्रतिबन्धकत्व नहीं है, इस प्रकार की शंका करना उचित नहीं है। वादियों के मध्य तार्किक योग-मीमांसक-सांख्यों का किसी के मत में कल्पित अज्ञान स्वीकृत नहीं है। उपनिषत् को प्रमाण मानने वाले हम लोगों के मत में केवलशास्त्र के द्वारा ब्रह्म में अज्ञान था, इस समय है, आगे भी रहेगा, इस प्रकार तीनों काल में भी अज्ञान की कल्पना का गन्ध भी नहीं है। इस प्रकार के विशुद्ध ब्रह्म में अज्ञान के कल्पक अद्वैतवादी ही ऊलूक स्थानीय हैं, तथा वे उपहास के पात्र हैं–इसी आशय को "प्रचण्ड मार्तण्ड" इस अंश से दिया गया है।**

**यच्चोक्तमहमज्ञ इत्यनुभवसिद्धमज्ञानं दुरपह्नवमिति तत्र पृच्छ्यते पण्डितमानी, अहमज्ञ इति प्रत्यये को वाऽहंपदार्थः शुद्धं ज्ञानमात्रम्, अहङ्कारो वा तदन्यो वेति वक्तव्यम्। नाद्यः। ज्ञानमज्ञं ब्रह्माज्ञं, आत्माज्ञ इत्युक्तं स्यात्। न द्वितीयः। अहङ्कारोऽज्ञ इति प्रत्ययः स्यात्। ब्रह्मज्ञाने प्रमाणाभावाच्च। अहमर्थस्य शुद्धात्मस्वरूपत्वाङ्गीकारे च तस्य मुक्तप्राप्यत्वापत्त्याऽस्मदिष्टा-पत्तेस्तवसिद्धान्तभङ्गात्।**

---

कस्यचिदप्यज्ञानकल्पकत्वं वक्तुमशक्यं तैरज्ञानवादानङ्गीकारात्। नाप्यौपनिषदानामस्माकं शास्त्रैकवेद्ये ब्रह्मण्यज्ञानमासीदस्ति भविष्यति वेति कालत्रयेऽप्यज्ञानकल्पनागन्धाङ्गीकारः परिशेषाद्ये ब्रह्मण्यज्ञानं कल्पयन्ति त एवोलूकस्थानीया इत्युपहसन्नाह–**प्रचण्डेति**। प्रागुक्तं दूषयितुमनूद्यति–**यच्चोक्तमिति**। त्रिधा विकल्पयति–**को वेति**। आद्यपक्षं निरस्यति–**नाद्य इति**। द्वितीयविकल्पमपाकरोति **न द्वितीय इति**। ब्रह्मण्यज्ञानसद्भावे किमपि प्रमाणं नास्तीत्याह–**ब्रह्मज्ञान इति**। यद्यहमर्थस्य शुद्धात्मस्वरूपत्वमभ्युपेयते तदा तस्य मुक्तोपसृप्यत्वमावश्यकं वाच्यं तच्चास्माकमिष्टं तव सिद्धान्तभङ्गः स्यादित्याह–**अहमर्थस्येति**। तस्य = अहमर्थाभिन्नशुद्धात्मस्वरूपस्य। **अस्मदिति**। अस्माकं राद्धान्ते, अहमर्थाभिन्नस्यैव परमात्मस्वरूपत्वं न तु तव मते तथात्वमित्यर्थः।

---

जैसे–प्रचण्ड सूर्य के प्रकाश में दिन के प्रकाश से भयभीत ऊलूक अन्धकार की कल्पना करता है, उसी के समान स्वप्रकाश ब्रह्म में अज्ञान के कल्पक ऊलूक के समान है, तथा वे उपहास के पात्र हैं। ऐसा समझना चाहिये।

यह कहा गया था कि–'अहम् अज्ञः' अर्थात् मैं अज्ञ हूँ, इस प्रकार के अनुभव से सिद्ध अज्ञान का अपलाप नहीं किया जा सकता, किन्तु यह कहना भी असंगत है।

अज्ञान को स्वीकार करने वाला व्यक्ति जो अपने आप को पण्डित समझता है तो उससे पूछते हैं–'मैं अज्ञ हूँ' इस अनुभव में अहं पदार्थ शुद्ध ज्ञानमात्र है ? अथवा अहंकार है ? अथवा उससे अन्य है ?

प्रथम पक्ष संगत नहीं है, क्योंकि ज्ञान अज्ञ है, ब्रह्म अज्ञ है, अथवा आत्मा अज्ञ है, इत्यादि अनुभवों की आपत्ति होगी।

द्वितीय पक्ष भी संगत नहीं है, क्योंकि अहंकार अज्ञ है, इस अनुभव की आपत्ति होगी। ब्रह्म में अज्ञान है, इसमें कोई प्रमाण नहीं है। अहमर्थ को शुद्ध आत्मस्वरूप स्वीकार करने पर उसको मुक्तों द्वारा प्राप्य होने के कारण हमारा पक्ष ही सिद्ध होगा, अद्वैत मत की हानि होगी।

**न तृतीय: । उभयेतरस्याध्यासकार्यत्वेन तदानीमभावात् । यदुक्तं कल्पितस्याधिष्ठानास्पर्शित्वमिति तदनुपपन्नम् । अज्ञानस्य कल्पकाभावेन कल्पितत्वासिद्धे: । तथा हि– को वा अज्ञानस्य कल्पक: स्वयमेव वा चिन्मात्रं वा उभयेतरो वा ? नाद्य: । आत्माश्रयदोषात् । कल्पनायाश्चेतनधर्मत्वेन जडे तदसम्भवात् । अन्यथा घटादेरपि कल्पनाश्रयत्वापत्ते: । न द्वितीय: । निर्विशेषकल्पकत्वासम्भवात् ।**

---

तदन्यो वा अहमर्थ इति तृतीयविकल्पं निराकरोति–**न तृतीय** इति । अन्त:करणतादात्म्याध्यासापन्नो जीवस्तव मते न पूर्वसिद्धाज्ञानाश्रय इत्याह–**उभयेतरस्येति** । ब्रह्मज्ञानेतरस्येत्यर्थ: । प्रागुक्तार्थं दूषयितुमनूद्यते–**यदुक्तमिति** । अज्ञानस्य कल्पकं पृच्छति–**को वेति** ? आद्यपक्षं निरस्यति–**नाद्य इति** । **आत्माश्रयेति** । अज्ञानस्य कल्पकं यद्यज्ञानं स्यात्तदा स्वस्य स्वकल्पकत्वे आत्माश्रय इत्यर्थ: । कल्पकत्वं नाम कल्पनाश्रयत्वं कल्पना तु चेतनाश्रिता । न तु जडाश्रिता । तथा च जडेऽज्ञाने कल्पकत्वं न घटत इत्याशयेनाह–**कल्पनायाश्चेति** । तदसम्भवात् = कल्पनाया असम्भवात् । विपक्षे बाधकतर्कमुपन्यस्यति–**अन्यथेति** । जडवर्गस्यापि कल्पनाश्रयत्व इति तदर्थ: । द्वितीयकल्पमपाकरोति–**न द्वितीय इति** । यदि चिन्मात्रस्याज्ञानकल्पकत्वं स्यात्तदा निर्विशेषत्वं व्याहन्यत इत्यर्थ: ।

---

तृतीय पक्ष भी असंगत है–क्योंकि उभय से भिन्न को अध्यास का कार्य होने के कारण, अज्ञान अध्यास की स्थिति नहीं हो सकती ।

यह कहा गया है कि कल्पितवस्तु अधिष्ठान की स्पर्शी नहीं होती है—यह कहना भी असंगत है–अज्ञान के कल्पक का अभाव होने से, उसका कल्पितत्व असिद्ध है ।

अज्ञान का कल्पक कौन है ? क्या स्वयं अज्ञान कल्पक है ? अथवा चिन्मात्र है ? अथवा उभय से भिन्न है ?

प्रथम पक्ष असंगत है, क्योंकि आत्माश्रय दोष है, कल्पना का आश्रय चेतन होता है, कल्पना जड़ का धर्म नहीं हो सकती है । यदि जड़ को भी कल्पना का आश्रय मानेंगे तब घटादि में भी कल्पना के आश्रयत्व की आपत्ति होगी ।

द्वितीय पक्ष भी संगत नहीं है, क्योंकि निर्विशेष चिन्मात्र का कल्पकत्व ही असिद्ध है ।

**न तृतीयः उभयेतरस्याध्यासोत्तरभावित्वात् । वास्तवतानङ्गीकाराच्च । यत्पुनरुक्तं नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति तत्तुच्छम् । अज्ञोक्तिवद्विद्वदुपेक्षितत्वात्, यतस्तयोः परस्परं विरुद्धस्वभावत्वेनैव स्वरूपसिद्धिर्नान्यथा यज्ज्ञानमज्ञानाविरोधि तज्ज्ञानमेव नास्ति । यदज्ञानं ज्ञानाविरोधि तदज्ञानमेव नास्ति । लोके शास्त्रे च प्रसिद्धेः, अज्ञानं ज्ञानविरोधीत्यनुन्मत्तः को ब्रवीतीति भावः, तस्मादहमज्ञ इति प्रतीत्याश्रयो भवतां मते न कोऽपि सिध्यति ।**

---

तृतीयपक्षं व्युदस्यति–**न तृतीय इति** । उभयेतरस्य = ब्रह्मज्ञानेतरस्य । तन्मते ब्रह्मातिरिक्तवस्तूनाम-पारमार्थिकत्वान्न तेषामज्ञानाश्रयता घटत इत्याशयेनाह–**वास्तवत्वेति** । असति ज्ञानाश्रयता नोपपद्यत इति भाव: । प्रागुक्तार्थं दूषयितुमनूद्यते-**यत्पुनरिति** । यदि चैतन्यरूपस्य ज्ञानस्याज्ञानविरोधित्वं न स्यात्तदा तस्य ज्ञानत्वमेव न स्यात्। अज्ञाननिवर्तकस्यैव ज्ञानत्वाभ्युपगमात् । यद्यज्ञानं ज्ञाननिवर्तकं न स्यात्तदा तस्याज्ञानत्वमनुपपन्नं ज्ञाननिवर्त्यस्यै-वाज्ञानलक्षणत्वादित्याशयेनोक्तार्थं निरस्यति–**तत्तुच्छमिति** । तयो: = ज्ञानाज्ञानयो: । **विरुद्धस्वभाव इति** । ज्ञाननिवर्त्यमज्ञानस्वरूपम्, ज्ञानञ्चाज्ञाननिवर्तकमित्यर्थ:, **अन्यथेति** । अन्यथा प्रकारान्तरेण तयो: स्वरूपं वक्तुमशक्यमित्यर्थमुसंहरति-**तस्मादिति** । तदभावे = अज्ञानाश्रयाभावे । इत्यज्ञान-प्रयोजकाभावादध्यासासिद्धि: । अद्वैतद्वैतसिद्धान्तवादिनां सिद्धान्ते को वाऽज्ञानाश्रय इति जिज्ञास्यते-**नन्विति** । तदधीन: = भगवदायत्तस्वरूपस्थितिप्रवृत्तिक: । सनातन: = नित्य: । तदंशभूत: = परमेश्वरांश: । **अनादीति** । अनादिकर्मात्मिकया अविद्यया आवृतं

---

तृतीय पक्ष भी असंगत है, क्योंकि उभय से भिन्न को अध्यास का कार्य जो उत्तर काल में होने वाला है । अध्यास के कार्य की वास्तविकता भी स्वीकार नहीं की जाती है ।

यह कहा गया है कि नित्यस्वरूपज्ञान अज्ञान का विरोधी नहीं है । यह कथन अत्यन्त तुच्छ है–यत: अज्ञव्यक्ति की उक्ति परित्यक्त हो जाती है । उसी प्रकार यह भी कथन परित्यक्त हो जायेगा, क्योंकि अज्ञान और नित्यस्वरूपज्ञान दोनों अत्यन्त परस्पर विरुद्ध स्वभाव के हैं । इसलिए इनमें अविरोध नहीं हो सकता है ।

भावस्वरूप से ही दोनों के स्वभाव की सिद्धि होने से यदि अज्ञान ज्ञान का विरोधी नहीं है, तब वह ज्ञान ही नहीं हो सकता है, क्योंकि जो अज्ञान, ज्ञान का विरोधी नहीं है, वह अज्ञान ही है ।

लोक और शास्त्र में अज्ञान, ज्ञान का विरोधी नहीं होता है, ऐसा उन्मत्त ही कह सकता है, स्वस्थ व्यक्ति नहीं कह सकता ।

**तदभावेऽध्यासाभाव इति सिद्धम्।** ननु भवतां मते कस्तदाश्रय इति चेच्छृणु, **परमात्मभिन्नोऽल्पशक्तिस्तदधीनः** सनातनस्तदंशभूतोऽनादिकर्मात्मिका- **विद्यावृतधर्मभूतज्ञानो जीवक्षेत्रज्ञादिशब्दाभिधेयस्तत्प्रत्याश्रय** इति। ज्ञाऽज्ञौ **द्वावजावीशानीशौ। श्वे० १।९।**

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**

**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति। मु० ३।१।१**

**आत्मा हि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः।**

---

धर्मभूतं ज्ञानं यस्य स तथोक्त इति विग्रहः। तत्प्रत्याश्रयः अहमज्ञ इति प्रत्याश्रयः। परब्रह्मणो वासुदेवस्य सर्वज्ञत्वबोधिकां जीवस्याज्ञत्वबोधिकाञ्च श्रुतिमुदाहरति- **ज्ञाऽज्ञाविति।** जानातीति ज्ञः = सर्वविषयकज्ञानाश्रयः। अज्ञः = अज्ञानाश्रयः। द्वावजौ = जीवेश्वरौ नित्यौ, एतेन ब्रह्मणि येऽज्ञानं कल्पयन्ति ते श्रुतिविरुद्धार्थवादिनो निरस्ता वेदितव्याः। श्रुत्या जीवेश्वरयोर्नित्यत्वं बोध्यते तेन जीवस्य कल्पितत्वं ब्रुवाणा अपि तथा ईशानीशौ = नियन्तृनियन्तारौ। परमात्मभिन्न इति यदुक्तं तं श्रुतिमुखेन दृढयति **द्वा सुपर्णेति।** अस्यार्थः प्रागुपदर्शितः। परब्रह्मणः सर्वोत्कृष्टत्वहेयप्रत्यनीक-

---

ब्रह्म में अज्ञान का अभाव होने से, अध्यास के अभाव की सिद्धि होती है।

सिद्धान्त में अज्ञान का आश्रय कौन है ? ऐसी जिज्ञासा का समाधान करते हैं—परमात्मा से भिन्न अल्पशक्तिमान् परमात्मा के आधीन सनातन परमात्मा का अंशभूत अनादिकर्मात्मक धर्मभूतज्ञानात्मक जीव अविद्या से आवृत हो गया, क्षेत्रज्ञादिशब्द वाच्य जीव ही 'अहं अज्ञः' अर्थात् मैं अज्ञ हूँ, इस अज्ञान का आश्रय है।

परन्तु वासुदेव के सर्वज्ञत्व का ज्ञान कराने वाली तथा जीव के अज्ञत्व का ज्ञान कराने वाली श्रुतियाँ प्रमाण रूप में दर्शाते हैं—"ज्ञाज्ञौ द्वावजावीशानीशौ....द्वा सुपर्णा अभिचाकशीति"।

जानातीति ज्ञः, व्युत्पत्ति के अनुसार सर्वविषयक ज्ञान का आश्रय ज्ञः पद गृहीत है, भगवान् वासुदेव ही ज्ञ हैं। अज्ञ-अज्ञान का आश्रय जीव है, 'द्वावजौ' जीव तथा ईश्वर ये दोनों नित्य हैं। इस प्रकार ब्रह्म में जो अज्ञान की कल्पना करते हैं, वे श्रुति विरुद्ध अर्थ को स्वीकार करने के कारण निरस्त हो गये।

जीव ईश्वर के नित्यत्व कथन से जीव को कल्पित मानने वाला पक्ष भी निरस्त हो गया। ईशानीशौ-नियम्य और नियन्ता, जीव नियम्य है और ईश्वर नियन्ता है। जीव परमात्मा से भिन्न है, इसे द्वासुपर्णा श्रुति प्रमाण से दृढ़ करते हैं।

परमात्मा सर्वोत्कृष्टहेयप्रत्यनीकगुणव, स्वंतन्त्रसत्व का आश्रय है। जीव अल्पशक्तित्व-अस्वतन्त्रसत्त्व का आश्रय है, इसे बोध कराने वाली 'आत्मा हि

**अस्ति खल्वन्योऽपरो भूतात्मा योऽयं सितासितैः कर्मफलैरभिभूयमानः । सदसद्योनिना यस्य संमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद् गुणाद्यैः सूप्यमानः कलुषीकृतश्चेत्यादिश्रुतिभ्यः प० ३।२। अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । गी० ५।१५। तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा । कर्मात्मा त्वपरो योऽसौ कर्मबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप**

गुणवत्त्वस्वतन्त्रसत्त्वाश्रयस्य जीवस्याऽल्पशक्तित्वास्वतन्त्रसत्त्वाश्रयस्य च बोधिकां श्रुतिमुदाहरति–**आत्मा हीति** । श्रुत्यन्तरेणाप्युक्तार्थं स्फुटयति-**अस्तीति** । **अज्ञानेनेति** । अनादिकर्मात्मकाज्ञानेन स्वाभाविकं धर्मभूतं ज्ञानमावृतं तेन हेतुना जन्तवो मुह्यन्ति = अज्ञानेनावृतज्ञानत्वाज्जीवा मोहमन्यथाज्ञानं प्राप्नुवन्ति–अनिष्टे इष्टबुद्ध्या प्रवर्त्तन्ते ।

परमः' श्रुति का उदाहरण देते हैं–परमात्मा स्वतन्त्र तथा अधिक गुणवान् है । जीव अल्पशक्ति और अस्वतन्त्र है, अन्य जीवात्मा पुण्य-पापकर्मजन्मफलों से तिरस्कृत हैं ।

अनादि कर्मात्मक अज्ञान द्वारा स्वाभाविकधर्मभूतज्ञान के आवृत होने से जीव अन्यथा ज्ञान प्राप्त करता है । अनिष्ट में इष्टबुद्धि होने से अनिष्ट की प्राप्ति के लिये प्रवृत्त हो जाता है तथा भगवान् में वैषम्य और पापपुण्य की कल्पना करने लगता है ।

सत् और असत् योनि के सम्बन्ध से जिसकी बुद्धि सदसद्विचार से शून्य हो गई है, वह अपने में स्थित सब कुछ कारयिता भगवान् को नहीं देख पाता है, अर्थात् अनुभव नहीं कर पाता है । अतः रजतमगुणों से उसका अन्तःकरण कलुषित रहता है ।

भगवान् श्री कृष्ण स्वयं प्रतिपादित किये हैं–"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः'। गी. ५।१५।

अज्ञान से धर्मभूतज्ञान के आवृत हो जाने से जीव मोह प्राप्त करते हैं । जीव के साथ रहता हुआ परमात्मा नित्य-प्राकृतगुणों से रहित, कर्मजन्मफलों से लिप्त नहीं होता है, जैसे–जल में स्थित पद्मपत्र जल के गुणदोष से लिप्त नहीं होता है, उसी प्रकार परमात्मा भी कर्मजन्म फलों से लिप्त नहीं होता है । अन्य जीवात्मा पाप-पुण्य-कर्मों का अधिकारी है, वही कर्म जन्मफलों से युक्त होता है । वही जीवात्मा पंचज्ञानेन्द्रिय पंचकर्मेन्द्रिय-पंचप्राण-बुद्धि-अहंकार इनके समुदायसूक्ष्मशरीर से संबन्धित भूयोभूयः उत्पन्न होता रहता है ।

**सर्वगा। संसारतापानखिलानवाप्नोत्यतिसन्ततान्। तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल! तारतम्येन वर्तते।। वि० पु०अ० ६।६१।**

**ममैवांशो जीवलोके जीवभूतः सनातनः। गी० १५।७४ क्षेत्रज्ञञ्चापि मां विद्धीत्यादिस्मृतिभ्यश्च। अतो ब्रह्मण्यध्यासोऽयुक्त एवेति सिद्धम्। नन्वध्यासस्यासङ्गस्वप्रकाशात्मनि अयुक्तत्वमलङ्कार इति चेन्न। पुनस्तत्र**

---

भगवति वैषम्यं पुण्यपापञ्च कल्पयन्तीत्यर्थः। जीवेश्वरभेदप्रतिपादिकां स्मृतिमुदाहरति- **तत्रेति**। अनादिकर्मात्मिकाविद्यावृतधर्मज्ञानमिति प्रागुदाहृतं तं स्मृतिमुखेन दृढयति- **अविद्येति**। सनातनस्तदंशभूत इत्युक्तं तं श्रीमुखवचनेन समर्थयति- **ममैवांश इति**। योऽयं जीवलोके वर्त्तमानो जीवभूतः प्राणोपाधियुक्तः स ममैवांशः शक्तिरूपांश एव न तु स्वतन्त्रः।

केचित्तु जीवस्वरूपेण ब्रह्मैव जीवत्वमस्याविद्योपाधिकृतं मन्यन्ते तानपाकरोति- **सनातन इति**। न हि प्रितिबिम्बोऽवच्छिन्नो वा सनातनो भवति प्रमाणाभावात्। क्षेत्रज्ञशब्दाभिधेय इत्युक्तं तं श्रीमुखवचनेन प्रमाणयति- **क्षेत्रज्ञमिति**। सर्वक्षेत्रेषु देवतिर्यङ्मनुष्यादिशरीरेषु क्षेत्रज्ञं मां विद्धि मदात्मकत्वेन मदभिन्नं जानीहि। चशब्देनात्मनस्तद्वैलक्षण्यमपि समुच्चिनोति, मां ततो विलक्षणं विद्धीत्यर्थः। उपसंहरति- **अत इति**। उक्तश्रुतिस्मृतियुक्तिभ्य इत्यर्थः। अध्यसोऽयुक्त इति प्राग् यदुक्तं तं समर्थयन् शङ्कते- **नन्विति**। 'असङ्गो ह्ययं पुरुषः' इति श्रुत्या ब्रह्मणोऽसङ्गत्वं प्रतिपाद्यते

---

भगवान् कहते हैं कि अविद्या कर्मशब्द की मेरी तृतीय शक्ति है। उसी अविद्या-रूपी तृतीय शक्ति द्वारा जीवरूप मेरा अंश भी शक्तिशब्द का वाच्य है वेष्टित है, अर्थात् अविद्या का आश्रय है। जीव के अविद्या से वेष्टित होने के कारण जीव परमात्म पारतन्त्र्य की सिद्धि होती है।

हे भूपाल! कर्म अविद्या से धर्मभूतज्ञान के तिरोधान होने से जीव को शक्तिशब्द से कहा गया है। वह जीवाख्यशक्ति कर्मानुसार प्रत्येक शरीर में भिन्न-भिन्न रूप से अवस्थित है। इसलिए शरीर भेद से जीव भिन्न-भिन्न है, इससे एक जीवात्मवाद का खण्डन हो जाता है। Vishnu Puran 6-6।

कुछ लोग ब्रह्म को ही जीवत्वस्वरूप से अवस्थित स्वीकार करते हैं-क्योंकि अविद्या से अवच्छिन्न चैतन्य को जीव कहते हैं। जिनका ऐसा मत है, उसका निराकरण "जीवलोके जीवभूतः सनातनः"। इस गीतास्मृति के द्वारा "सनातन" शब्द के प्रयोग से जीव की नित्यता सिद्ध होती है, मिथ्यात्व सिद्ध नहीं होता है।

इस प्रकार ब्रह्म में अध्यासकल्पना अयुक्त है।

**युक्त्युपपादनस्य जलताडनादेरिव वैयर्थ्यात् । एवञ्चाध्यासाऽयुक्तत्वमलङ्कार-त्वेनाङ्गीकुर्वतां निरपत्रपाणां शास्त्रसिद्धान्तयोर्बाधस्याप्यलङ्कारत्वेनाङ्गीकारे को दोषः ।**

**ननु तमप्रकाशयोरिवाऽत्यन्तविरुद्धस्वभावयोश्चिज्जडयोस्तद्धर्माणां चेतरेतरैक्यानुपपत्तिरुक्ता, इति ? सत्यम् । तथापि अत्यन्तविविक्तयोरपीतरेतरा-विवेकेनान्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाऽध्यस्य, मनुष्योऽहम्, ममेदमिति**

---

तेन स्वयंप्रकाशे ब्रह्मण्यध्यासत्वं नोपपद्यत इत्यस्माकमलङ्कार इत्याह–**अध्यासस्येति** । यद्यध्यासस्यायुक्तत्वमलङ्कारतया इष्यते तदाऽद्वैतसिद्धान्तो बाध्येत, तद्बाधोऽपि अध्यासस्यायुक्तत्वालङ्कारे चूडामणि: स्यादित्याशयेन परिहरति–**नेति । शास्त्र-सिद्धान्तयोरिति** । अध्यासस्यायुक्तत्वे तद्बोधकवेदान्तशास्त्रस्याबाध: । अद्वैतसिद्धान्तस्य वा बाधश्च न स्यादित्यर्थ: । अद्वैतसिद्धान्तबाधेन वेदान्तानामखण्डार्थ-बोधकत्वमपि बाधितं स्यात् । सोऽपि निरुक्तालङ्कारे चूडामणि: स्यादिति भाव: ।

अध्यासं सिसाधयिषुस्तावदध्यासमाक्षिपति–**नन्विति** । चिज्जडयोर्विषयित्वादी-पघटयोरिव नैक्यमित्यर्थ: । अनात्मनो ग्राह्यत्वादचित्त्वम् । आत्मनस्तु ग्राहकत्वाच्चित्त्वम् । मा भूद्धर्मिणो: परस्परभावस्तद्धर्माणान्तु जाड्यचैतन्यनित्यत्वानित्यत्वादीनामितरेतराध्यासो

---

यदि प्रश्न हो कि–असंग आत्मा में अध्यास का अयुक्तत्व भूषण है, दूषण नहीं यह कथन भी असंगत है, क्योंकि जलताडन के समान अयुक्त वस्तु के उपपादन की युक्ति व्यर्थ सिद्ध होगी । वस्तु के अयुक्तत्व को अलङ्कार रूप स्वीकार करने वाले निरपत्रपों (मर्यादारहितों) का शास्त्र–सिद्धान्तों के बाध को भी अलङ्कार रूप से स्वीकार करने में कोई शर्म (हिचक) नहीं होगी । इससे सिद्ध है कि विशुद्ध ब्रह्म में अध्यास सर्वथा अनुपपन्न है ।

अध्यास की सिद्धि के लिये श्रीशंकराचार्यप्रणीत अध्यासभाष्य को उदाहरणरूप में प्रस्तुत करते हैं—तम प्रकाश के समान अत्यन्त विरुद्ध स्वभाववाले चित् जड़ वस्तुओं का तथा उनके धर्मों का एक दूसरे में अध्यास अनुपपन्न है । तत्रापि अत्यन्त विलक्षण वस्तुओं का भी परस्पर विवेक बुद्धि के न होने पर एक दूसरे में एक दूसरे के स्वरूप का, एक दूसरे के धर्मों का, एक दूसरे में अध्यास की अनुपपत्ति नहीं हो सकती । एक दूसरे में अध्यास करके ही–"मैं मनुष्य हूँ, यह मेरा है" इत्यादि व्यवहार भी अनादिकाल से प्रवृत्त हैं । अत: अध्यास वर्णनीय है, अर्थात् प्रतिपादनीय है । इस प्रकार की शंका भी अनुपपन्न है—

यत: अविवेक के आश्रय की असिद्धि है ।

**लोकव्यवहारः, अनादिकालप्रवृत्तः । अतोऽध्यासो वर्णनीय इति चेन्न । अविवेकाश्रयाभावात् । तथा हि को वाऽविवेकाश्रयः—जडो विषयः, शुद्धात्मा वा तदन्यो वा? नाद्यः । तस्याविवेकस्वरूपत्वात् । न द्वितीयः । अविवेकपर्यायाऽज्ञानाऽश्रयत्वस्य पूर्वमेव निरस्तत्वात् । न तृतीयः । उभयान्यस्याध्यासकार्यत्त्वेन अध्यासस्याद्याप्यऽसिद्धेः किञ्च—अत्यन्त-**

---

भविष्यति । दृश्यते हि धर्मिणोर्विवेकग्रहणेऽपि तद्धर्माणामध्यासो यथा कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणस्फटिक इत्यारुण्यविभ्रम इत्यत उक्तम्—**तद्धर्माणामिति** । तयोरात्मानात्मनोर्धर्मास्तेषामपीत्यर्थः । इतरत्र धर्मान्तरे, इतरेषां धर्माणामैक्यं तस्यानुपपत्तिरित्यर्थः । उक्ता = शाङ्करभाष्ये उक्ता । **तथापीति** । जाड्यचैतन्यादिधर्माणं धर्मिणावहङ्कारात्मानौ तयोरत्यन्तभिन्न-योरितरेतरभेदाग्रहेणान्योन्यस्मिन्, अन्योन्यतादात्म्यमन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इति योजना । तदिदमर्थयोः कालभेदेन कल्पितभेदेऽप्यत्यन्तभेदाभावादिति वक्तुमत्यन्तेत्युक्तम् । परिहरति—**नेति** । तत्र हेतुमुपन्यस्यति—**अविवेकेति** । हेतुमेव विवृणोति—**तथा हीति** । त्रिधा विकल्पयति—**को वेति** । आद्यपक्षं निरस्यति—**नाद्य इति** । तस्य = जडस्य । द्वितीयपक्षमपाकरोति—**न द्वितीय इति** । शुद्धस्याज्ञानाश्रयत्वे शुद्धत्वं व्याहन्येत इति भावः । **उभयान्यस्येति** । जडशुद्धचैतन्यान्यस्येत्यर्थः । परमार्थतो

---

यथा—अविवेक का आश्रय कौन है ?

जड़ विषय है ? शुद्धात्मा है ? अथवा इन दोनों से अन्य है ? इत्यादि प्रश्नों के समाधान निम्नवत् हैं ।

**जड़ विषय का** अविवेकस्वरूप होने से, अविवेक का आश्रय नहीं बन सकता ।

शुद्ध आत्मा भी अविवेक का आश्रय नहीं बन सकता है, क्योंकि अविवेक का अर्थ है अज्ञान, उस अज्ञान का आश्रय विरोध होने से नित्य विज्ञान रूप ब्रह्म नहीं हो सकता ।

दोनों से भिन्न को अध्यास का कार्य होने से अध्यास के स्वरूप की सिद्धि अद्यावधि न हो सकी है, तो अध्यास का कार्य दोनों से भिन्न की सिद्धि नहीं हो सकती है ।

**विविक्तयोरित्युक्त्वा पुनरितरेतराऽविवेकेनेति स्वोक्तिविरोधाच्च, नहि सूर्यान्धकारयोर्दीपघटयोर्वाऽविवेकः कस्यापि जायते । सर्वानुभवविरुद्धत्वादिति भावः । किञ्चात्मनो भवतां मतेऽविषयत्वाङ्गीकारादप्यधिष्ठानत्वासिद्धिः ।**

**न च, नायमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वाद्परोक्षत्वाच्चेति वाच्यम् । विकल्पासहत्वात् । को वा तद्विषयः—शुद्धात्माऽध्यस्तो वा ? नाद्यः, अहमर्थस्वरूपत्वेन मुक्तस्वरूपत्वापत्त्या सिद्धान्तभङ्गादस्मदिष्टत्वाच्च । नन्वस्मदर्थश्चिदात्मा प्रतिबिम्बितत्वेन यत्र प्रतीयते सोऽस्मत्प्रत्ययोऽहङ्कारस्तत्र**

---

धर्मिणोस्तादात्म्यं विवेकः । धर्माणाञ्चासङ्कीर्णतविवेकस्तथा च विवेकज्ञानसत्त्वे पुनरितरेतराविवेकज्ञानं कथं भवितुमर्हतीति स्वोक्तौ विरोधमाह—**किञ्चेति** । विवेकज्ञानाविवेकज्ञानयोर्विरोधादिति भावः उक्तार्थमेव द्रढयति—**न हीति** । सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति, इदं प्रत्ययानर्हस्य प्रत्यगात्मनोऽविषयत्वमिति चिदात्मन्यध्यासं पुनरप्याक्षिपति—**किञ्चेति** ।

अयमर्थः—चिदात्मा प्रकाशते न वा । न चेत्, प्रकाशते कथमस्मिन्नध्यास-विषयस्तद्धर्माणाम्, न खल्वप्रतिभासमाने पुरोवर्तिनि द्रव्ये रजतस्य तद्धर्माणां वा समारोपः सम्भवतीति । न तावदयमात्मा जडो घटादिवत्पराधीनप्रकाश इति युक्तम् । न खलु स एव कर्त्ता च कर्म च सम्भवति । परिहरति—**न चेति** । अयमात्मा नियमेना-विषयो न भवति । तत्र हेतुमाह—**अस्मदिति** । अस्मत्प्रत्ययविषयः । आद्यपक्षमपाकरोति—

---

अत्यन्तविविक्तवस्तुद्वय का पुनः परस्पर में अविवेक कहना मेरी माता बन्ध्या है, इस उक्ति के सदृश अपनी उक्ति का विरोध होगा ।

अत्यन्त विविक्त सूर्य और अन्धकार का अविवेक नहीं होता है, एवं घट दीप का अविवेक नहीं है, उसी प्रकार अत्यन्त विविक्त आत्मा का शरीरादि के साथ अविवेक नहीं हो सकता है ।

आत्मा का अविषयत्त्व होने से अद्वैतमत में आत्मा अधिष्ठान नहीं बनेगा ।

यदि यह कहा जाय कि, सोपाधिक आत्मा विषय है, निरुपाधिक आत्मा ही अविषय है । अतः आत्मा अधिष्ठान हो जायेगा । विकल्प को सहन न करने के कारण यह कथन भी असंगत है ।

जैसे—शुद्ध आत्मा विषय है ? अथवा—अध्यस्त आत्मा ?

प्रथम पक्ष असंगत है—आत्मा के अहमर्थस्वरूपत्व होने से मुक्तत्व की आपत्ति होगी । अद्वैत सिद्धान्त की हानि होगी । अतः हमारे इष्ट की सिद्धि होगी, क्योंकि अहमर्थ ही आत्मा का स्वरूप है ।

**भासमानत्वं तद्विषयत्वमित्यर्थ इति चेन्न । चिन्मात्रस्यास्मदर्थत्वे मिथ्यात्वापत्तेः । अध्यस्तत्त्वे तु अध्यासे सति भासमानत्वं तस्मिन् सति स इत्यन्योन्याश्रयदोषः ।**

**न चानादित्वात् पूर्वाध्यासे भासमानात्मन उत्तराध्यासाधिष्ठानत्वेन सम्भवाद् नोक्तदोष इति वाच्यम् । अध्यासमात्रस्यानादित्वायोगात् । अध्यासो नानादिः पूर्वप्रमाहितसंस्कारजन्यत्वात् । शुक्तिकारजतवदित्यनुमानात् । किञ्च समसत्ताके उपाधौ प्रतिबिम्बदर्शनात् । नहि सतोऽसति तत्त्वम् । तथा चाहङ्कारस्य**

---

**नाद्य इति** । अहमिति प्रत्ययविषयत्वं यदि शुद्धात्मनोऽभ्युपेयते । तदा तस्यैव मुक्तोपसृप्यत्वं वाच्यं तथा सति तव सिद्धान्तभङ्गः स्यात् । आत्मनोऽहमर्थत्वानङ्गीकारादित्यर्थः । तथा चास्माकं मते, आत्मनस्तथात्वाङ्गीकारादिष्टमित्याह–**अस्मदिति** । अस्मत्प्रत्यय-विषयत्वादित्यस्यार्थान्तरं विवृण्वन्मुक्तदोषं व्युदस्यति–**नन्विति** । यत्र = अहङ्कारे । तत्र = अहङ्कारे । चिन्मात्रस्यास्मदर्थत्वम्, अध्यस्तत्वं वेति विकल्प्याद्यपक्षं निरस्यति–**चिन्मात्रस्येति** । द्वितीयकल्पेऽन्योन्याश्रयमाह–**अध्यस्तत्व इति** ।

अन्योन्याश्रयदोषा-सम्भवमाशङ्क्य परिहरति–**न चेति** । यज्जन्यं तन्नानादि-रित्याशयेनोक्तां शङ्कां परिहरति–**अध्यासमात्रस्येति** । प्रयोगं दर्शयति–**अध्यास इति** । चिदात्मा प्रतिबिम्बितत्वेत यत्र प्रतीयते, इति यदुक्तं तन्निरसितुमाह–**किञ्चेति** । अहङ्कारे चिदात्मनः प्रतिबिम्बो न सम्भवति । उपाधिप्रतिबिम्बयोः समानसत्ताकत्वाभावात्, विश्वभूतस्य चिन्मात्रस्य तात्त्विकत्वात्, अहङ्काररूपोपाधेरतात्त्विकत्वादित्यर्थः ।

---

अस्मदर्थ चिदात्मा जहां प्रतिबिम्बभूत होकर प्रतीयमान होता है, वह अस्मत्प्रत्यय का विषय अहंकार है । उस अहंकार में भासमानत्व ही तद्विषयत्व है, ऐसी शंका भी संगत नहीं है–चिन्मात्र को अस्मदर्थ स्वीकार करने पर चिन्मात्र के मिथ्यात्व की आपत्ति होगी । आत्मा के अध्यस्तत्व स्वीकार करने पर–अध्यास की स्थिति में भासमानता का होना, भासमानता के होने पर अध्यास का होना, इस प्रकार अन्योन्याश्रयदोष होगा ।

यदि अनादि होने से पूर्व के अध्यास में भासमान आत्मा का उत्तर अध्यास का अधिष्ठान होने पर कोई दोष नहीं है ? ऐसी शंका भी संगत नहीं है, क्योंकि अध्यास का अनादित्व नहीं हो सकता है ।

पूर्व प्रमाहित (जन्य) संस्कार से जन्य होने के कारण शुक्तिरजताध्यास के सदृश, अध्यास अनादि नहीं हो सकता है–सत् वस्तु के असत् होने पर उसका तत्त्व नहीं होता है । यदि अहंकार को सत् माना जाये, तो उसकी निवृत्ति न होने की आपत्ति होगी ।

**सत्यत्वेऽनिवृत्तिप्रसङ्गात् । कल्पितत्वे तत्र चेतनप्रतिबिम्बेनानुपपत्तेः । अन्यथा मरीचिकाजलेऽपि सूर्यादिप्रतिबिम्बापत्तेः । अपि च भ्रमसामग्रीविरहादपि अध्यासाभावः । तथा हि—भ्रममात्रे सावयवत्वमिन्द्रियसंयुक्ततयाग्राह्यत्वं सादृश्यं पूर्वप्रमाजन्यं संस्कारो दोषश्चेत्यपेक्षितम् । तत्राद्यं त्रयमधिष्ठाने दोषसंस्कारौ ज्ञातृपुरुषनिष्ठौ । यथेदं रजतमित्यत्रेन्द्रियसंयुक्ततया ग्राह्यत्वम्, सावयवत्वं परमार्थरजतसादृश्यं शुक्तौ प्रत्यक्षप्रमाणसिद्धम् । तत्संस्कारदोषौ च पुरुषनिष्ठौ न तथा दार्ष्टान्तिके निरवयवनिर्गुणपरोक्षात्मनि गुणावयवसादृश्यादीनामयोगात्**

---

सतः = ब्रह्मणः । असति = अहङ्कारे । तत्त्वम् = प्रतिबिम्बत्वम् । उक्तार्थमेव विवृणोति—**तथा चेति** । अहङ्कारस्य सत्यत्वं वा कल्पितत्वम्वेति विकल्प्याद्यपक्षं निरस्यति—**अहङ्कारेति** । द्वितीयपक्षमभिप्रेत्याह-**कल्पितत्व इति** । विपक्षे बाधकतर्कमुपन्यस्यति—**अन्यथेति**—कल्पितोऽपि प्रतिबिम्बत्वाभ्युपगम इति तदर्थः । भ्रमजनकानां संस्कारसादृश्यसम्प्रयोगानामभावादध्यासो न सिद्ध्यतीत्याह—**भ्रमेति** । भ्रमोत्पादिकां सामग्रीं दर्शयति—**तथा हीत्यादिना** । तत्र = तेषु मध्ये । आद्यत्रयम् = सावयवत्वम्, इन्द्रियसंयुक्ततया ग्राह्यत्वं, सादृश्यम् । अधिष्ठान इत्यत्र सप्तम्यर्थो वृत्तित्वम्, आद्यत्रयमधिष्ठानवृत्तितया ग्राह्यमित्यर्थः । पूर्वोक्तार्थमुदाहरति—**यथेदमिति** । अध्यासाधिष्ठाने चिन्मात्रे ब्रह्मणि सावयवत्वमिन्द्रियसंयुक्तत्वसादृश्याना-मध्यासप्रयोजकानामभावान्न तत्राध्यास उपपद्यत इत्याशयेनाह—**न तथा दार्ष्टान्तिक इति** । उक्तार्थं श्रुतिप्रमाणेन समर्थयति—

---

अहंकार को कल्पित मानने पर उसमें चेतन के प्रतिबिम्ब की अनुपपत्ति होगी । अन्यथा—मरुमरीचिका के जल में सूर्य के प्रतिबिम्ब की आपत्ति होगी ।

भ्रम के सामग्री का अभाव होने से अध्यास का अभाव है । भ्रममात्र में—सावयवत्व-इन्द्रियसंयोग सम्बन्ध से ग्राह्यत्व-सादृश्य-पूर्वानुभवजन्य संस्कार और दोष ये सब मिल कर भ्रमज्ञान की सामग्री कही जाती हैं ।

प्रथम तीन धर्म अधिष्ठान में अपेक्षित हैं—दोष और संस्कार ज्ञातृपुरुषनिष्ठ हैं । जैसे "यह रजत है" यहां पर इन्द्रियसंयुक्तस्वरूप से ग्राह्यत्व-सावयवत्व और आपणस्थरजत का सादृश्य शुक्ति में प्रत्यक्षप्रमाण से सिद्ध है, तथा पूर्वरजतानुभवजन्य संस्कार और दोष पुरुषनिष्ठ है । इसलिए शुक्ति में रजताध्यास हो जाता है, किन्तु दार्ष्टान्तिक में निर्गुण-निरवयव अपरोक्ष आत्मा में गुण-सावयवत्व-सादृश्यादिधर्मों के सम्बन्ध न होने से अध्यास नहीं हो सकता है । आत्मा के निरवयवत्व-निर्गुणत्व में "केवलो निर्गुणश्च, निष्फलं निरवद्यम्" इत्यादि श्रुतियां प्रमाण हैं ।

दोष तथा संस्कार भी शुद्ध आत्मा में नहीं हो सकते हैं, क्योंकि दोष एवं

Silver

svet. Up.

* Perceptibility - composition

**केवलो निर्गुणश्च, निष्कलं निरवद्यमित्यादिश्रुतेः । श्वे० ६।१९।** नापि दोषसंस्कारौ **संभवतः। तदाश्रयस्य ज्ञात्रन्तरस्याभावात् । अधिष्ठानमात्रस्यैव** तदा सत्त्वात् । **जीवस्य भ्रमकार्यत्वेन तदुत्तरभावित्वात् ।**

**ननु नैतदुपपन्नं यतः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति नियमाभावात् । अप्रत्यक्षे निरवयवेऽप्याकाशे बालास्तमलिनताद्यध्यस्यन्ति । नीलनभसोः सादृश्याभावेऽपि अध्यासदर्शनादिति भावः । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः । नापि संस्काररूपकारणाभावः। प्रत्यगात्मनि हेतुहेतु-मद्भावेनाध्यासप्रवाहस्यानादित्वात् । तथा च पूर्वाध्यासस्योत्तराध्यासं**

---

**केवल इति**। अध्यासप्रयोजकौ दोषसंस्कारौ तदाश्रयो नास्तीत्याह-**नापीति**। तदाश्रयस्य = दोषसंस्काराश्रयस्य। अध्यासाधिष्ठानस्य ब्रह्मण एव **प्राक्सत्त्वं** नान्यस्येत्याह-**अधिष्ठानेति**। तदुत्तरभावित्वात् = भ्रमोत्तरभावित्वात् ।

यदाशङ्कितं तदाक्षिपति-**नन्विति**। अप्रत्यक्षे = इन्द्रियाग्राह्य, बालानाम् = अविवेकिनाम्। तलम् = इन्द्रनीलकटाहकल्पम्। तथा चाधिष्ठानाधिष्ठेययोर-केन्द्रियग्राह्यत्वानियतिरिति भावः। नन्वात्मानात्मनो सादृश्याभावात्कथमध्यास इत्यत आह-**नीलनभसोरिति**। एवम् = सादृश्यस्याध्यासाप्रयोजकत्वे प्रत्यगात्मनि, जडस्याहङ्कारादेः सादृश्याभावेऽप्यध्यास उपपद्यत इत्यर्थः। संस्काररूपकारणाभावान्नाध्यास इति प्राग् यदुक्तं तमाक्षिपति-**नापीति**। प्रवाहस्यानादितया तत्कारणस्याध्यासस्याप्यना-दित्वमित्याह-**प्रत्यगात्मनीति**। हेतुहेतुमद्भावं विवृणोति-**तथा चेति**। पूर्वमिथ्या-ज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वाद्बीजाङ्कुरवत् परस्पराश्रयत्वमिति भावः। **पूर्वप्रमेति**। पूर्वप्रपञ्चज्ञानं भ्रमात्मकं तथा च पूर्वप्रमाजन्य-

---

संस्कार का आश्रय दूसरा कोई ज्ञाता नहीं है।

जीव को दोष संस्कार का आश्रय कहें, तो यह नहीं हो सकता है, क्योंकि जीव को अध्यास कार्य होने से, अध्यास उत्तरकालभावी है।

यदि पुनः कहें कि-पुरोऽवस्थित विषय में ही अध्यास होता है, यह नियम नहीं है—अप्रत्यक्ष-निरवयव आकाश में अज्ञ लोग तलमालिन्य का अध्यास करते हैं, आकाशतल मलिन हैं। यद्यपि आकाश-नील का सादृश्य न होने पर भी, आकाश में नैल्य का अध्यास होता है। इसलिए प्रत्यगात्मा में अनात्मा का अध्यास अविरुद्ध है।

'अध्यास के प्रति संस्कार कारण का अभाव है', ऐसा नहीं कह सकते हैं, क्योंकि प्रत्यगात्मा में हेतु-हेतुमद्भावरूप से अध्यास प्रवाह अनादि है; पूर्व अध्यास उत्तर अध्यास के प्रति संस्कार के द्वारा कारण है। यदि कहें कि पूर्व प्रमाजन्य संस्कार

प्रति संस्कारद्वारा कारणत्वात्। न च पूर्वप्रमाजन्य एव संस्कारो हेतुरिति वाच्यम्, लाघवेन पूर्वानुभवजन्यसंस्कारस्य हेतुत्वात्। अतः पूर्वाध्यासजन्य-संस्कारोऽस्तीत्यनेन कारणाभावान्नाध्यास इत्यपास्तमिति चेन्न। दृष्टान्ताभावात्।

तथा हि-आकाशस्य पञ्चीकृतत्वेन सावयवत्वात्। पञ्चीकृतत्वादेव पृथिव्यादिभूतानां तत्र सत्वेन तदाश्रयीभूतनीलादिरूपाणामपि तत्र सत्त्वादप्रत्यक्षत्वाभावात्। नीलादिप्रत्ययानां प्रमात्वादिति यावत्। न च दूरदेश एव तत्प्रत्ययो न तु सन्निहितदेशे कथं प्रमात्वमिति वाच्यम्। तवापि तुल्यत्वात्,

'यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे'।।

इति न्यायात्। एतेन एवमविरुद्धः प्रत्यागात्मन्यप्यनात्माध्यास इति

---

संस्काराभावान्नाध्यास इत्यर्थः। **लाघवेनेति**। अनधिगताबाधितविषयत्वरूपप्रमात्वघ-टितधर्मस्य कारणतावच्छेदकत्वकल्पनामपेक्ष्य तदघटितपूर्वानुभवजन्यसंस्कारस्य कारणत्व-कल्पनाया लघीयस्त्वमित्यर्थः। अतः = पूर्वानुभवजन्यसंस्कारात्। परिहरति–**नेति**।

दृष्टान्ताभासं विवृणोति–**तथा हीति**। गगनं रूप्येव सावयवञ्च पञ्चीकृतभूतत्वात्, पृथिव्यादिवदित्यनुमानेनापि गगने रूपवत्त्वं सावयवत्वञ्च सिद्ध्यति, तथा चेन्द्रियाग्राह्यत्वरूपहेतोर्गगनेऽसत्त्वात्स्वरूपासिद्धत्वं दृष्टान्तवैषम्यञ्चेत्यर्थः। तत्र = गगने। सदाश्रयीभूतनीलादिरूपाणाम् = पृथिव्याद्या-श्रयीभूतनीलादिरूपाणाम्। तत्र = गगने। गगनं नीलमिति प्रत्ययो दूरदेश एव जायते सविधवर्त्तिन्याकाशे नीलमिति प्रत्यय एव नोत्पद्यते। कथमुक्तप्रतीतेः प्रमात्वमित्याशङ्क्य परिहरति–**न चेति**। **तवापीति**। तव मतेऽपि दूरदेशवर्त्तिन्याकाशे तलमलिनतया अध्यासो न तु सन्निहित आकाशे तथात्वमिति दोषस्तव पक्षेऽपि समान इत्यर्थः। एतेन = प्रागुक्तार्थप्रदर्शनेन। **निरस्तमिति**। इन्द्रियसंयुक्ते

---

ही अध्यास का कारण है, तो यह कहना भी अनुचित है, क्योंकि पूर्वानुभवजन्य ही संस्कार अध्यास का हेतु होता है। इसलिए पूर्वाध्यासजन्य संस्कार है, ऐसा अनुभव होने से, कारण का अभाव है, इसलिए अध्यास नहीं होगा, यह शंका भी निरस्त हो गई। इस प्रकार अध्यास की सिद्धि विवाद रहित है।

किन्तु दृष्टान्त का अभाव होने से अध्यास की सिद्धि नहीं हो सकती है।

जैसे–पंचीकरणप्रक्रिया द्वारा आकाश सावयव है। पंचीकृत होने से ही पृथिव्यादिभूतों को आकाश में रहने से नीलादिरूप भी वहां है। अतएव आकाश में अप्रत्यक्षत्व नहीं है। आकाश में नीलादि का जो ज्ञान है, वह प्रमा है। यदि कहें कि दूरत्वदोष के कारण नील का ज्ञान हो रहा है, वास्तव में उसमें नीलरूप नहीं है–नील की प्रमा नहीं, अपितु भ्रम है। विनिगमना के विरह होने से जैसे अद्वैत मत में–नील का भ्रम है, वैसे हमारे मत में नील का ज्ञान प्रमा है, तुल्य दोष है। दोनों का तुल्यदोष

**निरस्तम् । यत्पुनरुक्तं हेतुहेतुमद्भावेनाध्यासप्रवाहस्यानादित्वात्पूर्वाध्यासस्योत्तराध्यासं प्रति संस्कारद्वारा कारणत्वादध्याससिद्धिरिति, तदपि युक्त्याभासं हेतोरेव वक्तुमशक्यत्वात् ।**

**तथा हि हेतुत्वेनाङ्गीक्रियते यः प्रथमाध्यासः सः सहेतुको निर्हेतुको वा ? नाद्यः । प्रथमाध्यासासिद्धेः । तस्याप्यन्यस्तयाप्यन्य इत्यनवस्थापत्तेश्च । प्रमाजन्यसंस्कारस्यैव पूर्वकारणत्वनियमात् । तदनङ्गीकारेऽध्यासस्य वक्तुमशक्यत्वात् । न च लाघवेन संस्कारमात्रस्यैव तत्रापेक्षितत्वान्न विषयसत्त्वमपीत्युक्तमेवेति वाच्यम् । असतः संस्कारस्यैवासम्भवात् । न च मास्तु संस्कारस्यापि कारणत्वं प्रतीतिमात्रस्यैव सुवचत्वादिति वाच्यम् । असतो**

---

रूपादिमति, सावयवे च द्रव्य एव तादृशस्य वस्त्वन्तरस्याध्यासः निरवयवे रूपादिहीने, इन्द्रियासंयुक्ते चैतन्येऽनात्मनोऽध्यासो नोपपद्यत इति भावः । प्रागुक्तार्थं दूषयितुमनूद्यते-**यत्पुनरुक्तमिति** ।

युक्त्याभासं विवृणोति-**तथा हीति** । विकल्पयति-**सहेतुकेति** । आद्यविकल्पं निरस्यति-**नाद्य इति** । तस्य = अध्यासत्त्स्य । प्रमाजन्यसंस्कारस्त्वेऽध्याससत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकं निर्दिशति-**प्रमेति** । तदनङ्गीकारे = प्रमाजन्य-संस्कारानङ्गीकारे । सद्वस्तुन एव प्रमाविषयत्वं न त्वसतस्तथा प्रमाजन्यसंस्काराभावे कथमध्यास इति भावः, तत्र = अध्यासे सद्वस्तुन एव संस्कारो न त्वसत इत्याह-पूर्वप्रतीतिमात्रमुप-

---

तत्परिहार है, केवल एक मात्र निगृहीत नहीं होगा । क्योंकि तादृश अर्थ के विचार में अपनी अलग-अलग प्रक्रिया है । इस प्रकार प्रत्यगात्मा में अनात्मा का अध्यास निरस्त हो गया ।

यह पूर्व में कहा गया था कि हेतु-हेतुमद्भाव के द्वारा अध्यास प्रवाह का अनादित्व है, पूर्वाध्यास उत्तरअध्यास के प्रति संस्कार द्वारा कारण होता है । इस प्रकार अध्यास की सिद्धि होती है । वह भी प्रमाण-युक्ति के अभाव में अनुपपन्न है ।

अध्यास की सिद्धि में हेतु कहने पर, अध्यासवादी समर्थ नहीं हो सकता है । प्रथम अध्यास द्वितीय अध्यास के प्रति हेतु होता है, वहां प्रथम अध्यास सहेतुक है ? अथवा निर्हेतुक है ? आद्य अध्यास की सिद्धि नहीं हो सकती है, क्योंकि जो अध्यास उत्पन्न है, उससे भी अन्य, उससे भी अन्य इस प्रकार अनन्त अप्रामाणिक अध्यास कल्पनाओं से अनवस्था दोष होगा ।

प्रमाजन्य संस्कार ही पूर्व अध्यास का कारण है, यदि प्रमाजन्य संस्कार को अध्यास का कारण न माना जाय, तो अध्यास का कथन ही नहीं हो सकता है । यदि लाघव से संस्कारमात्र अध्यास में अपेक्षित है-विषयसत्ता अपेक्षित नहीं है, ऐसा कथन

**विषयस्य प्रतीतिरेव सर्वानुभवविरुद्धत्वात् ।**

**अन्यथा खपुष्पशशशृङ्गादेरपि प्रतीत्यापत्तेरसत्त्वाविशेषात् । ननु खपुष्पादेरसत्त्वात् प्रतीत्यभावः प्रतीतिविषयस्यानिर्वचनीयत्वाङ्गीकारान्नोक्तविरोध इति चेन्न, सदसदुभयभिन्नपदार्थस्याभावाददृष्टश्रुतत्वाच्च । न च शुक्तिरजतस्यैवासत्त्वे प्रतीतिर्न स्यात्, सत्त्वे बाधो न स्यादतः प्रतीतिबाधाभ्यामनिर्वचनीयत्वं निश्चीयते केनापि विदुषा, तस्यान्यथा वक्तुमशक्यत्वादनिर्वचनीयत्वसिद्धिरिति वाच्यम् ।**

---

युज्यतेऽध्यासे न तु प्रतीयमानस्य परमार्थसत्तेत्याशङ्क्य परिहरति–**न चेति** । असतः प्रतीतिर्नोपपद्यत इत्याशयेनाह–**असत इति** ।

विपक्षे बाधकतर्कमुपन्यस्यति–**अन्यथेति** । असतोऽपि प्रीतिविषयत्वाङ्गीकार इति तदर्थः । अत्यन्तासतः खपुष्पादेः प्रतीतिर्नोपपद्यते, अतः प्रतीतिविषयस्य प्रपञ्चस्यानिर्वचनीयत्वमभ्युपेयते । तथा च प्रतीतिविषयस्य देहेन्द्रियादेरध्यासश्चिदात्मन्युपपद्यत इत्याशयेन शङ्कते–**नन्विति** । किन्तावदनिर्वचनीयत्वं सद्विलक्षणत्वमिति चेन्नासति नृशृङ्गादावतिव्याप्तेः । नाप्यसद्भिन्नत्वम् , आत्मन्यतिव्याप्तेः । नापि सदसद्भिन्नत्वं वस्तुजातस्य सदसदन्यतरत्वनियमेन तादृशप्रतियोग्यसिद्ध्यसम्भवादित्याशयेन निरस्यति–**नेति** । शुक्तिरजतमसच्चेन्न प्रतीयेत सच्चेन्न बाध्येत इति तर्केण शुक्तिरजतस्यानिर्वचनीयत्वं वाच्यमित्याशङ्क्य परिहति–**न चेति** । शुक्ताविदं रजतमिति प्रतीतौ यद्रजतं भासते तत् सद्रूपमसद्रूपं वेति विवेचनीयम् । यद्याद्यपक्षोऽभ्युपेयते, तदा तस्य सद्रूपत्वेन तस्य बोधो न स्यात् । यद्यसद्रूपत्वं तस्य ज्ञानमेव दुर्घटम् । असतः ज्ञानाविषयत्वात्, अतः, रजतस्यानिर्वचनीयत्वं सिद्ध्यतीत्यर्थः । इदं रजतमिति विशिष्टज्ञानमेव नास्ति प्रमाणाभावात् । सर्वेषां प्रत्ययानां यथार्थत्वेन भ्रमस्यैवासिद्धेः । विमता सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात्, अयं घट इति प्रत्ययवदित्यनुमानात् । इदं रजतमिति ज्ञानम् इदमंशस्यैव प्रत्यक्षत्वं न तु रजतांशस्य तदंशस्य तु केवलं स्मरणं जायते ।

---

**भी असंगत है ।** असत् संस्कार नहीं होता है, क्योंकि वस्तु के अनुभव से संस्कार **की उत्पत्ति होती है ।** यदि संस्कार की हेतुता भी अध्यास में नहीं है, प्रतीति मात्र से **ही अध्यास की सिद्धि** हो जायेगी । इस प्रकार का कथन भी असंगत है । असत् वस्तु **की प्रतीति ही सबके** अनुभव के विरुद्ध है, अन्यथा खपुष्प-शशशृंग आदि के प्रतीति **की आपत्ति होगी ।**

**यदि खपुष्प** के अभाव से प्रतीति का अभाव है–प्रतीति का विषय एक **अनिर्वचनीय खपुष्प** के स्वीकार होने से कोई विरोध नहीं है, ऐसा कहना भी असंगत **है—सदसदुभयभिन्नपदार्थ** का अभाव है, ऐसा पदार्थ न देखा गया है, और न सुना **गया है ।**

**सत्ख्यातिवादिनां वैदिकानां सर्वेषां ज्ञानानां सत्यत्वाभ्युपगमात् । कथं तर्हि तस्य बाधो बाधे च कथं सत्त्वमिति चेत् ? उच्यते । सतोऽपि प्रमाणबलेन निवृत्तिर्जायते न त्वत्यन्ताभावः । पुण्येन पापस्य सदौषधीभिर्रोगस्योत्तरज्ञानेन पूर्वज्ञानस्य च निवृत्तेर्दृष्टश्रुतत्वात् । ''पुण्येन पापमपनुदति'' इति श्रुतेः । एवमिदं रजतमित्यत्रापि रजतज्ञानस्य दोषसंस्कारसादृश्यात्मकसद्धेतुकत्वात् सत्त्वमेव । तस्य पुनः शुक्तिचक्षुषोःसन्निकर्षेण शुक्तिस्वरूपावरणनिवृत्त्या निवृत्तेः सम्भवात् । तस्मादज्ञानस्यैव सत्त्वाविषयस्य सत्त्वाऽनियमात् सत्ख्यातिवादसिद्धिः । ननु विषयाऽसत्त्वेऽपि प्रतीत्यङ्गीकारश्चेत्तर्ह्यागता यूयमस्मन्मार्गे । अस्माभिस्तथाभ्युपगमादिति चेन्न । सद्धेतुकाख्यातिः सत्ख्यातिरित्यर्थाभ्युपगमात् । त्वया तु द्वैतापत्तिभयाद्दोषसंस्कारादिकारणस्य सत्त्वं वक्तुमशक्यत्वात् । अतो महद्वैलक्षण्यमिति भावः । एतेनैव प्रथमाध्यासो निर्हेतुक इत्यपि निरस्तः । कारणाभावे कार्याभावनियमात् ।**

---

तथा च तत्रेदमंशं प्रत्यक्षं रजतस्मरणञ्चेति ज्ञानद्वयेन प्रवृत्त्युपपत्तौ विशिष्टवैशिष्ट्यावगाहिज्ञानकल्पनमयुक्तमिति सत्ख्यातिवादिनां पन्थास्तमाक्षिपति-**सत्ख्यातिवादिनामिति** । तस्य = रजतस्य । समाधत्ते-**उच्यत इति** सद्वस्तुनोऽपि प्रबलप्रमाणेन निवृत्तिर्भवितुमर्हतीति दृष्टान्तेन परबुद्ध्यारूढं करोति, सतोऽपि उक्तार्थं श्रुतिमुखेनापि द्रढयति-**पुण्येनेति** । इदं रजतमिति ज्ञानस्य सत्कारण-जन्यत्वात्सद्रूपत्वम्, अधिष्ठानस्वरूपावरणनिवृत्त्य रजतस्य निवृत्तिरित्याह-**एवमिति** । निगमयति-**तस्मादिति** । यदि विषयस्यासत्त्वमुररीक्रियते, तदा आगतो मदीयः पन्था । इति शङ्कते-**नन्विति-तथेति** । असतः प्रतीतिविषयत्वाभ्युपगमादित्यर्थः । सत्ख्यातिशब्दार्थनिर्वचनेनोक्तां शङ्कां व्युदस्यति-**नेति** । अध्यासहेतूनां त्वया सत्यत्वं नोपपेयते, अन्यथाऽद्वैतभङ्गापत्तेरिति स्वसिद्धान्तस्य तस्माद्वैलक्षण्यमाह-**त्वयेति** । प्रथमाध्यासस्य सहेतुकत्वमेतावता प्रबन्धेन निरस्य तस्य निर्हेतुकत्वपक्षमप्याकरोति- **एतेनेति** । यदि कार्यं निर्हेतुकं स्यात्तदा सर्वदा कार्योत्पत्तिःस्यादतो कादाचित्कत्वेन कार्यस्य सहेतुकत्वं वाच्यमिति भावः ।

---

यदि शुक्तिस्थ रजत की सत्ता न मानी जाय तो प्रतीति ही नहीं होगी, यदि उसकी सत्ता मानी जाय तो उसका बाध नहीं होगा । इसलिए प्रतीति-बाध के द्वारा एक प्रातिभासिक अनिर्वचनीय रजत की सिद्धि होती है । ऐसा अद्वैत के कुछ विद्वान् कहते हैं कि कोई विरोध नहीं है । अनिर्वचनीय रजत से भिन्न कोई रजत है, ऐसा नहीं कह सकते । इसलिए अनिर्वचनीय रजत की सिद्धि माननी पड़ेगी, किन्तु यह कथन असंगत है । सत्ख्याति माननेवाले सभी वैदिक-सब ज्ञानों की यथार्थता है, कोई भी अयथार्थप्रतीति नहीं होती है ऐसा स्वीकार करते हैं । अत: अध्यास की सिद्धि नहीं होगी ।

**असतः कुत्रापि कारणत्वादर्शनाच्च अन्यथाऽनिवृत्तिप्रसङ्गात्। न चासतोऽपि रज्जुसर्पस्य भयकम्पादिजनकत्वदर्शनात् कार्यकारणसत्तापेक्षित्वनियमभङ्ग इति वाच्यम्। स्वरूपेणाऽसतः कार्योत्पत्त्यनुकूलशक्तिमत्त्वकारणलक्षणत्वाऽसम्भवात्। भ्रमस्थलेऽपि सर्पविषयकज्ञानस्यैव भयादिहेतुत्वं नारोपितसर्पस्य। अन्यथा सर्पविषयकज्ञानात्यन्ताभाववतो बालस्यापि भ्रमो भयकम्पादिश्च भवेन्न तु तदस्ति। प्रत्युत सत्यसर्पोऽपि बालैर्गृह्यते तस्माद् ब्रह्मण्यध्यासस्य भानाभावात्कारणाभावात् प्रमाणाभावाच्च तद्वक्तृणां भ्रान्तिमत्वमिति सिद्धम्। एतेनैव तमेतमविद्याऽऽख्यमाऽऽत्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः। सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीत्यपास्तम्।**

---

असतः कारणत्वं कुत्रापि न दृश्यते, अतोऽसतां दोषसंस्कारादिकारणानामध्यासहेतुत्वं नोपपद्यत इत्याह–**असत इति**। विपक्षे बाधकतर्कमुपन्यस्यति–**अन्यथेति**। कारणस्य सत्यत्वाङ्गीकार इति तदर्थः। यदि कारणं सत् तदा कार्यस्यापि सत्त्वमपह्नोतुमशक्यं तथा चाध्यासम्य निवृत्तिर्न स्यादित्यर्थः। कार्यं कारणसत्त्वनियतमिति नियमे व्यभिचारमाशङ्क्य परिहरति–**न चेति**। कार्योत्पत्तिप्रयोजकशक्तिमत्वं कारणत्वं तच्च स्वरूपेणासति नोपपद्यत इत्याह–**स्वरूपेणेति**। उक्तव्यभिचारं निरस्यति–**भ्रमस्थल इति**। विपक्षे बाधकतर्कमुपन्यस्यति–**अन्यथेति**। असतः सर्पस्य कारणत्वाभ्युपगम इति तदर्थः। तदस्ति = भयकम्पादिरस्ति। नास्ति ब्रह्मण्यध्यासस्य सम्भावनापि अध्यायप्रयोजकसामग्र्यभावात् प्रमाणस्यासिद्धेश्चेति। निगमनयति–**तस्मादिति**। एतेन = प्रमाणाभावेन। अध्यासस्य सद्भावं निर्णेतुमादौ प्रत्यक्षं दर्शयति–**तमिति**। तम्=वर्णितं साक्षिप्रत्यक्षसिद्धम्। अविद्याख्यमिति सम्भावितोक्तिः। पुरस्कृत्येत्यस्य व्यवहारहेतुतया स्वानुभवसिद्धत्वमुक्तम्। **विधीति**। विधिनिषेधपराणि कर्मशास्त्राणि ऋग्वेदादीनि विधिनिषेधशून्यप्रत्यग्ब्रह्मपराणि मोक्षशास्त्राणि वेदान्तवाक्यानीति विभागः।

---

यदि अनिर्वचनीय रजत नहीं मानेंगे, तो उसका बाध और उसके मिथ्यात्व का निश्चय कैसे होगा ? समाधान इस प्रकार हैं—सत् वस्तु का भी प्रमाण के बल से निवृत्ति होती है, उसका अत्यन्ताभाव नहीं होता है। जैसे–पुण्य से पाप की निवृत्ति होती है, सत् औषधि से रोग की निवृत्ति होती है। उत्तर ज्ञान से पूर्व ज्ञान की निवृत्ति है, ऐसा दृष्ट व श्रुत है। "पुण्येन पापमपनुदति" यह श्रुति वाक्य प्रमाण है। इस प्रकार शुक्ति का रजत भी दोष-संस्कार-सादृश्यात्मक दोष से जन्य होने के कारण सत्य है, मिथ्या नहीं है। उसका पुनः चक्षुःशुक्ति के सन्निकर्ष से शुक्तिस्वरूपावरण की निवृत्ति होने से उस रजत की निवृत्ति सम्भव है, वह असत् नहीं है।

इसलिए ज्ञान के रहने पर विषय की सत्ता के रहने का नियम होने से "यह रजत है" इस भ्रमस्थल में भी रजत की सत्ता माननी पड़ेगी। इस प्रकार सत्ख्यातिवाद की सिद्धि होती है।

**ननु कर्त्ता द्रष्टा श्रोताऽनुमन्ताऽहमिति प्रत्यक्षस्य देवदत्तकर्तृको व्यवहार: तदीयदेहादिष्वहं ममाध्यासमूलक:, तदीयान्वयव्यतिरेकानुसारित्वात्। यदित्थं तत्तथा। यथा मृन्मूलो घट इत्यनुमानस्य, तत्र जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इत्यन्वय:। सुषुप्तावध्यासाभावे व्यवहाराभाव इति व्यतिरेक:। यदि प्रमाताऽध्यासवान् न स्यात् तर्हि प्रमाणादिव्यवहारो न स्यादित्यर्थापत्तेश्चात्र मानत्वात्। तथा चाह भाष्यकार:। कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादिप्रमाणानि शास्त्राणि चेति। उच्यते–देहेन्द्रियादिष्वहं ममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते:।**

---

सन्ति चाध्यासस‌द्भावे प्रत्यक्षानुमानार्थापत्तय: प्रमाणानि, तेभ्य इदमर्थं प्रामाणिकं कर्त्तुं शङ्कते–**नन्विति**। तावत्प्रत्यक्षमानेनाध्यासं समर्थयति–**कर्त्रेति**। अनुमानेनापि तस्य सिद्धिं दर्शयति–**देवदत्तेति**। **तदन्वयेति**। देहादिष्वध्याससत्त्वे व्यवहारसत्त्वं तदभावे व्यवहाराऽत्त्वमिति तदर्थ:। यदित्थम् = यद् हेतुमत्। तत्तथा = तत् साध्यवत्। अन्वयव्यतिरेकशब्दार्थं विवृणोति– **तत्रेति**। तत्र = अनुमाने। अर्थापत्ते: स्वरूपं निर्वक्ति-**यदीति**। अत्र = अध्यासे। अयमर्थ: श्रीभगवत्पादैरेवाभिहित इत्याह-तथा चाहेति आक्षिपति–**कथमिति**। तत्त्वपरिच्छेदो हि प्रमा विद्या तत्साधनानि प्रमाणानि कथमविद्यावद्विषयाणि नाविद्यावन्तं प्रमाणान्याश्रयन्ति, तत्कार्यस्य विद्याया अविद्याविरोधित्वादिति भाव:। सन्तु प्रत्यक्षादीनि संवृत्यापि यथा तथा शास्त्राणि तु पुरुषहितानुशासनपराण्यविद्याप्रतिपक्षतया नाविद्यावद्विषयाणि भवितुमर्हतीत्याह-**शास्त्राणि चेति**। तत्र प्रमाणप्रश्ने व्यवहारार्थापत्तिं तल्लिङ्गानुमानञ्चाह–**उच्यत इत्यादिना**। तथा च देवदत्तकर्तृको व्यवहार इति प्रागुपदर्शितानुमानप्रयोगो दर्शित:। तत्र व्यतिरेकं दर्शयति–**देहेति**। अनेन लिङ्गेन कारणतयाऽध्यास: सिद्ध्यति। व्यवहाररूपकार्यानुपपत्त्या वेति भाव:।

---

**यदि पुन: ज्ञान की ही सत्ता रहती है, विषय का सत्त्व होना अनिवार्य नहीं है। आप तो भी सत्ख्याति मानते हैं। अत: हमारे सिद्धान्त को स्वीकार करने से आपके साथ कोई विरोध नहीं है, क्योंकि हम अद्वैती वैसा ही मानते हैं–यह शंका भी उचित नहीं है–सत् है हेतु जिस ख्याति (ज्ञान) का उसे सत्ख्याति कहते हैं। अद्वैती द्वैतापत्ति के भय से दोष-संस्कार-सादृश्यादि कारण की सत्ता नहीं मान सकते हैं। इस प्रकार आपके मत में बिना कारण के ही रजत की उत्पत्ति होती है, यह महद् वैलक्षण्य है। इस युक्ति द्वारा प्रथम अध्यास निर्हेतुक है, यह निरस्त हो गया। कारण के अभाव से कार्य का भी अभाव होता है ऐसा नियम है। असत् का कारणत्व कहीं पर भी नहीं देखा गया है।**

**यदि पुन: जिस व्यक्ति को देहेन्द्रियादि में अहम्-मम का अभिमान निकल गया है, उसके प्रमातृत्व की निवृत्ति हो जाने से उसके प्रति प्रमाण की प्रवृत्ति नहीं होगी।**

**न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति। न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः सम्भवति। न चानध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियते न चैतस्मिन् सर्वस्मिन्नसति। असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते। न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति।**

**तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति कथं प्रमाणाभाव इति चेन्न। उक्तप्रत्यक्षानुमानादेराभासमात्रत्वात्। तथा हि।**

---

ननु मा प्रवर्तिषत प्रमाणानि किं नश्छिन्नमित्यत आह–**न हीति**। **व्यवहार इति**। **व्यवह्रियतेऽनेनेति** व्यवहारः। फलं प्रत्यक्षादिप्रमाणानां फलमित्यर्थः। **व्यवहारः** क्रिया च व्यवहार्याक्षेपात्समानकर्तृकता अनुमानादयो व्यवहार इति योजना। किमिति पुनःप्रमातोपादत्ते प्रमाणानि, अथ स्वयमेव कस्मान्न प्रवर्तते इत्यत आह–**न चेति**। **व्यापारः** = प्रमाणानां व्यापारः सम्भवति। न जातु करणान्यनधिष्ठितानि कर्त्रा स्वकार्ये व्याप्रियन्ते माभूत् कुविन्दरहितेभ्यो वेमादिभ्यः पटोत्पत्तिरिति भावः। अथ देह एवाधिष्ठाता कस्मान्न भवति कृतमत्राध्यासेनेत्यत आह–**न चानध्यस्तात्मभावेनेति**। सुषुप्तेऽपि व्यापारप्रसङ्गादिति भावः। यथाऽध्यस्तात्मभावं वेमादिकं कुविन्दो व्यापारयन् पटस्य कर्त्ता एवमनध्यस्तभावं देहेन्द्रियादि व्यापारयन् भविष्यति तदभिज्ञः प्रमातेत्यत आह– **न चैतस्मिन्निति**। इतरेतराध्यासे इतरेतरधर्माध्यासे चासति, आत्मनोऽसङ्गं य सर्वथा सर्वदा सर्वधर्मधर्मिवियुक्तस्य प्रमातृत्वमुपपद्यते व्यापारवन्तो हि कुविन्दादयो वेमादीनधिष्ठाय व्यापारयन्ति, अनध्यस्तात्मभावस्य तु देहादिष्वात्मनो न व्यापारयोगोऽसङ्गत्वादित्यर्थः। अतश्चाध्यासाश्रयाणि प्रमाणानीत्याह–**न च प्रमातृत्वेति**। प्रमायां खलु स्वतन्त्रः प्रमाता भवति। उपसंहरति–**तस्मादिति**।

## अथोत्तरपक्षः

निराकरोति–**नेति**। आत्मसंयुक्तशरीरादिकमेव प्रागुपदर्शितप्रत्यक्षानुमानादीनां विषयो भवितुमर्हति किमध्यासेनेत्याह–**तथा हीति**। उक्तार्थं श्रुतिमुखेन प्रमाणयति–**आत्मेन्द्रिय**

---

**इन्द्रियों के बिना प्रत्यक्षादि व्यवहार सम्भव नहीं है। अधिष्ठान के बिना इन्द्रियों का भी व्यवहार सम्भव नहीं है। अनध्यस्तात्मभाव से कोई शरीर से व्यापार नहीं करता है, इन सभी के न रहने से असङ्ग आत्मा का प्रमातृत्व ही न होगा, प्रमातृत्व के न होने पर प्रमाण की प्रवृत्ति नहीं होगी। इसलिए अविद्यावद् विषयक ही प्रत्यक्षादि प्रमाणशास्त्र हैं। इस प्रकार प्रमाण की सिद्धि होने पर प्रमाणाभाव की सिद्धि नहीं हो सकती है—**

**ऐसी शंका भी असंगत है—तुम्हारे मत में प्रत्यक्षादिप्रमाणों के आभासमात्र होने से उनसे किसी की भी सिद्धि नहीं हो सकती है। इसलिए प्रत्यक्षादि प्रमाणों का**

उक्तप्रत्यक्षानुमानादीनां देहेन्द्रियादियुक्तात्मपरत्वेनाध्यस्तविषयकत्वाभावात्। 'आत्मेन्द्रियमनोयुक्तम्भोक्तेत्याहुर्मनीषिण:' इति श्रुते:। कर्त्तुरिव भोक्तृत्वनियमात्। अन्यथा युक्तस्थानेऽध्यस्तमिति श्रुतौ प्रयोग: स्यात्। न तथात्वेऽसङ्गो हीति श्रुतिविरोधापत्तिरुक्तैवेति वाच्यम्। तस्या: श्रुते: परमात्मपरत्वात्। जीवात्मन: प्रमातृत्वे 'योऽयं वेद जिघ्राणीति स आत्मा कतम:', छां ८।१२।४ इत्युपक्रम्य। 'पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुष:'। प्रश्नो ४।९। इति श्रुतिरपि मानम्। परमात्मनस्त्विन्द्रियाद्यन्तरेणैव कर्तृत्वप्रमातृत्वाद्युपपत्तेर्न तत्राध्यासगन्धोऽपि।

---

**इति**। अत्मा चेन्द्रियश्च मनश्च तैर्युक्त इति विग्रह:। अत्रात्मपदं शरीरपरम्। मनश्शब्दस्तु तत्कार्यबुद्धेरप्युपलक्षक:, पूर्वमन्त्रे बुद्धेरपि सारथित्वेन निर्दिष्टत्वात्। भोक्ता = कर्तृत्वभोक्तृत्ववानित्यर्थ:। शरीरेन्द्रिययुक्तस्यैवात्मन: कर्तृत्वं भोक्तृत्वञ्चास्तीति न तु केवलस्येति श्रुत्यर्थ:। विपक्षे बाधकतर्कमुपन्यस्यति–अन्यथेति। कर्तृत्वभोक्तृत्वादिव्यवस्थान्यथानुपपत्त्याऽध्यासस्वीकार इति तदर्थ:। 'असङ्गो ह्ययं पुरुष:' इति श्रुत्या कथमसङ्गे परमात्मनि शरीरेन्द्रियादीनां संयोग इत्याशङ्क्यापाकरोति– **न चेति**। तथात्वे = देहेन्द्रियादीनां संयुक्तत्वे। तस्या: श्रुते: = असङ्गो ह्ययं पुरुष इति श्रुते: जीवस्य प्रमातृत्वं श्रुतिमुखेन समर्थयति–**योऽयमिति**। अत्रात्मनोऽवघ्रातृत्वोक्त्या ज्ञातृत्वं सिद्ध्यति। ते न चात्मनो ज्ञानगुणकत्वमुपपन्नमित्यर्थ:– **पुरुष इति** अत्र द्रष्टा स्पष्टेत्यादिनिर्देशादात्मनो दर्शनाश्रयत्वं सिद्ध्यति विज्ञानात्मेत्यनेन ज्ञानस्वरूपत्वञ्च सिद्ध्यति। एतेनात्मनो ज्ञातृत्वमेव न ज्ञानस्वरूपत्वमिति वदन्तस्तार्किकास्तथात्मनो ज्ञानस्वरूपत्वमेव न ज्ञातृत्वमिति वदन्तो मायावादिनश्च निरस्ता भवन्ति। भगवत: सर्वेश्वरस्येन्द्रियं विनापि प्रमातृत्वं श्रुतिमुखेन सिद्ध्यतीत्याह। **परमात्मन इति**। तत्र = परमात्मनि।

---

आभासविषयकत्व नहीं हो सकता है। इस सन्दर्भ में "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण:" यह श्रुति वाक्य प्रमाण है। क्योंकि कर्त्ता ही भोक्ता होता है। अन्यथा श्रुति में युक्त के स्थान में अध्यस्त शब्द के प्रयोग की आपत्ति होगी। अध्यस्त न मानने पर "असङ्गो हीति" श्रुति के विरोध की आपत्ति होगी। अत: श्रुति के विरोध के भय से अध्यस्त मानना आवश्यक है। तथापि यह कथन असंगत है, क्योंकि "असङ्गो हि" यह श्रुति परमात्मपरक है। जीवात्मा के प्रमातृत्व होने पर "योऽयं वेद जिघ्राणीति स आत्मा कतम:"। इस प्रकार उपक्रम करके 'पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुष:', यह श्रुति संगत होगी। परमात्मा का कर्तृत्व-प्रमातृत्व मन: इन्द्रियादि के बिना ही उपपन्न है, उस परमात्मा में अध्यास का गन्ध भी नहीं है।

**तथा च श्रुतिः । "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुःस शृणोत्यकर्णः । यस्मादतीन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते" इत्यादिः । नाप्यनुमानसिद्धिः । अध्यासस्याद्याप्यसिद्ध्या साध्याभावेन व्याप्त्यग्रहात् । अत एव हेतोः स्वरूपासिद्धत्वादध्यासासिद्ध्या तदन्वयव्यतिरेकस्य सुतरामसिद्धेः । घटादीनां मृत्परिणामरूपत्वेन दृष्टान्त-वैषम्याच्च । तथैव व्यवहारस्य देहादियुक्तात्मकर्तृकत्वेनान्यथासिद्धत्त्वा-दर्थापत्तेरपि निर्मूलत्वादाभासमात्रत्वसिद्धिः । न च सुषुप्तावध्यासाभावे व्यवहाराभावाद् व्यतिरेकसिद्धिस्तथैवान्वयसिद्धिरतो हेतोः स्वरूपासिद्ध्यभाव इति वाच्यम् । तत्र करणोपरमान्नोक्तानुपपत्त्युद्धारात् । ननु प्रमाश्रयत्वं हि**

---

उक्तार्थं श्रुतिमुखेन परबुद्ध्यारूढं करोति–**अपाणिपाद इति** । सन्दिग्धसा-ध्यवत्पक्षत्वमिति मते, अनुमानात् प्रागध्यासस्यासिद्धत्वात्साध्यसन्देहरूपायाः पक्षताया अभावात्तस्य देहादिष्वहमध्यासमूलकत्वविधेयकानुमितिर्नोपपद्यते, इत्याशयेनोक्तानुमानं निराकरोति–**नापीति** । उक्तानुमानैस्स्वरूपासिद्धिमुद्भावयति–**अत एवेति** । व्याप्ति-ज्ञानाभावादेवेत्यर्थः । तमेव विवृणोति–**अध्यासासिद्धेति** । अध्यासेति विशेषणासिद्ध्या तद्विशिष्टहेतोः स्वरूपासिद्धत्वमित्यर्थः । दृष्टान्तासिद्धिमाह **घटादीनामिति** । व्यवहारान्य-थानुपपत्त्याऽध्यासः कल्पत इति यदुक्तं तदप्यपाकरोति–**तथैवेति** । 'अन्वयव्यतिरेकावुदाहरति

---

श्रुतिप्रमाण द्वारा परमात्मा के मन इन्द्रियों के अभाव की सिद्धि होती है । जैसे–'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' ।। इत्यादि श्रुतियों से परमात्मा अतीन्द्रिय हैं–सबको देखते हैं, सबको सुनते हैं, सब जगह जाते हैं, सबका उपादान करते हैं । अनुमान प्रमाण द्वारा भी अध्यास की सिद्धि असम्भव है । अद्यावधि अध्यास की सिद्धि न होने से, साध्य का अभाव होने से व्याप्तिग्रह नहीं हो सकता है ।

अध्यास का साधक हेतु को स्वरूपासिद्धदोषयुक्त होने के कारण अध्यास की सिद्धि न होने से अध्यास के कार्यकारणभाव का नियामक अन्वयव्यतिरेक नियम की सिद्धि भी नहीं होगी । मृत् परिणामभूत घटादि दृष्टान्तों का वैषम्य दोष हो जायेगा, उसी प्रकार व्यवहार की देहादि से युक्त आत्मा का कर्तृकत्व होने से, अन्यथा सिद्धि हो जायेगी । अर्थापत्ति प्रमाण भी अध्यास की सिद्धि में निर्मूल है, केवल आभासमात्र की सिद्धि होगी ।

अध्यास का व्यवहार के साथ अन्वयव्यतिरेक नियम की सिद्धि है, जैसे–सुषुप्ति काल में अध्यासाभाव के रहने पर व्यवहार का अभाव है, व्यतिरेक की सिद्धि

**प्रमातृत्वम् । प्रमा यदि नित्यचिन्मात्रं तर्ह्याश्रयत्वायोग: करणवैयर्थ्यञ्च । यदि वृत्तिमात्रं जगदान्ध्यप्रसङ्गः । वृत्तेर्जडत्वात् । अतो वृत्तीद्धो बोध: प्रमा तदाश्रयत्वम् । असङ्गस्यात्मनो वृत्तिमन्मनस्तादात्म्याध्यासं विना न सम्भवतीति चेन्न । अनुपपन्नत्वात् ।**

**तथा हि यदुक्तं वृत्तीद्धो बोध: प्रमेति । स बोध: किमात्मस्वरूपम् ? वृत्तिरेव वा ? आत्मधर्मा वेति ? विवेचनीयम् । नाद्यौ वक्तुं शक्यौ तयोस्त्वयैव**

---

**सुषुप्तावेति**। सुषुप्तौ करणानामिन्द्रियाणां दाहमुपरमाद् व्यवहाराभावो न त्वध्यासाभावादित्याशयेनाह–**तत्रेति** । सुषुप्तावित्यर्थ: । प्रमातृत्वं निर्वक्ति–**प्रमेति** । प्रमा नित्यचिन्मात्रं वृत्तिमात्रं वा तत्राद्यपक्षं निरसितुमाह–**प्रमेति** । **आश्रयत्वायोगेति** । चिन्मात्राश्रयत्वं चिन्मात्रे नाभ्युपेयते तस्य निर्धर्मिकतया तत्राश्रयाश्रयिभावानुपपत्ते: । इन्द्रियाणां वैयर्थ्यं प्रसज्येत । द्वितीयकल्पमपाकरोति–**यदि वृत्तिमात्रमिति** । तदाश्रयत्वम् = प्रमाश्रयत्वम् । असङ्गस्य = सर्वथा सर्वदा सर्वधर्मधर्मिवियुक्तस्य । परिहरति-**नेति** ।

अनुपपत्तिं विवृणोति–**तथा हीति** । त्रिधा विकल्पयनि-**स बोध इति** । आद्यौ पक्षौ निरस्यति– **नाद्याविति** । त्वयैव दूषितत्वादिति । यदि नित्यचिन्मात्रं, तर्ह्याश्रयत्वायोग: । करणवैयर्थ्यञ्च । यदि वृत्तिमात्रं जगदान्ध्यप्रसङ्ग: । वृत्तेर्जडत्वादिति ग्रन्थेन दूषितत्वादित्यर्थ: ।

---

है । अध्यास के रहने पर व्यवहार की सिद्धि होती है अन्वय की सिद्धि है । अत: स्वरूपासिद्धि का अभाव है । इस प्रकार अध्यास की सिद्धि हो जायेगी, यह कथन असंगत है, क्योंकि सुषुप्ति काल में इन्द्रियों के उपराम हो जाने से कोई व्यवहार नहीं होता है । अध्यास का अभाव होने से व्यवहार का अभाव है, ऐसा नहीं कह सकते । अत: अध्यास की सिद्धि नहीं होगी ।

यदि प्रमाश्रयत्व को प्रमातृत्व कहेंगे, प्रमा नित्य चिन्मात्र है—तब प्रमाश्रयत्व की अनुपपत्ति हो जायेगी, तथा करणों का वैयर्थ्य दोष हो जायेगा । यदि वृत्तिमात्र प्रमा स्वीकार करेंगे तो जगत् के आन्ध्यदोष की आपत्ति होगी, क्योंकि वृत्ति जड़रूपा है । वृत्ति-इद्ध-बोध-प्रमा ये सब पर्याय हैं, तदाश्रयत्व ही प्रमातृत्व है ।

असंग आत्मा की मनोवृत्ति से युक्तमन के साथ तादात्म्य अनुपपन्न होने से अध्यास के बिना नहीं हो सकेगा । जो उक्त है–वह बोध–आत्मस्वरूप है ? वृत्ति है ? अथवा आत्मा का धर्म है ?

प्रथम पक्ष अर्थात् आत्मस्वरूप-वृत्ति में दोनों बोध नहीं हो सकते, क्योंकि इनके बोधत्व का खण्डन किया जा चुका है । यदि बोध को चिन्मात्र माना जाय तो चित्तवृति द्वारा ब्रह्म की आराधना ही अनुपपन्न हो जायेगी । इसलिए इच्छा न होते हुए

**दूषितत्वात् । किञ्च, तस्य चिन्मात्रत्वे वृत्त्याराधनाऽयोगात् परिशेषादकामेनाऽपि आत्मधर्मभूतगुण एव वक्तव्यः । स चास्मदिष्ट एव । तस्य तु वृत्तिमन्मनोऽध्यासं विनैव प्रमात्वसम्भवात् । परन्तु "अज्ञानेनावृतं ज्ञानम्" इत्यादिपूर्वोक्त-प्रमाणादनादिकर्मात्मकाज्ञानावृतत्वात् । तस्य बद्धावस्थायां करणद्वारा बहिःप्रसरणात् । तदाश्रयत्वादात्मनोऽपि करणाधीनप्रमातृत्वात् करणानां च सुषुप्तौ लयात्तदभानं न विरुद्ध्यते । एतेन तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेत्युक्तमपास्तमित्यलं विस्तरेण । तस्माद् द्रष्टृत्वकर्तृत्वादयः प्रत्यया यथार्था एव नाध्यासविषया इति सिद्धम् ।**

**ननु तथापि न ते यथार्थाः । अपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गाव-**

---

तस्य = बोधस्य । **वृत्त्याराधनेति** । बोधस्य स्वयंप्रकाशतया वृत्तेः कल्पनायोगादित्यर्थः । स च = आत्मधर्मभूतगुणः । तस्य = आत्मधर्मभूतज्ञानस्य । उक्तार्थं श्रीमुखवचनेन द्रढयति–**अज्ञानेनेति** । अनादिकर्मात्मकाज्ञानेन स्वाभाविकं धर्मभूतं ज्ञानमावृतमित्यर्थः । तस्य = धर्मभूतज्ञानस्य । तदाश्रयत्वात् = धर्मभूतज्ञानाश्रयत्वात् । तदभानम् । ज्ञानाभानम् । एतेन = प्रागुपदर्शितप्रकारेण । **तस्य इति** । सिद्धमित्यनेनान्वयः । उपसंहरति–**तस्मादिति** । षड्लिङ्गोपेतैः अपौरुषेयतया निर्दुष्टैर्वेदान्तवाक्यैर्ब्रह्मणोऽकर्तृत्वं बोध्यते, तस्मादुक्तप्रत्ययस्य भ्रान्तित्वं कल्पनीयमिति ।

शङ्कते-**नन्विति** । ते = द्रष्टृत्वकर्तृत्वादयः प्रत्ययाः । तेषाम् । **द्रष्टृत्वकर्तृत्वा-दिप्रत्ययानाम्** । उक्तासु श्रुतिषु कयाऽपि श्रुत्या ब्रह्मणोऽकर्तृत्वमुपदिष्टं चेत्तदोक्तप्रत्ययस्य

---

हुए भी परिशेष से आत्मा के धर्मभूतगुण को ही बोध मानना होगा, वह बोध सिद्धान्ती को इष्ट है, वह बोध-वृत्तिमन्मनोऽध्यास बिना ही प्रमास्वरूप होगा । किन्तु "अज्ञानेनावृतं ज्ञानम्" अर्थात् अज्ञान द्वारा आवृत ज्ञान अन्यथा व्यवहार करा देता है । इन स्मृतियों द्वारा सिद्ध होता है कि अनादिकर्मात्मक अविद्या से ज्ञान आवृत हो जाता है । उसी धर्मभूतज्ञान का बद्ध अवस्था में करणों द्वारा वाह्य प्रदेश में प्रसरण होता है, धर्मभूत ज्ञान का आश्रय होने से आत्मा का प्रमातृत्व करणाधीन है । सुषुप्ति अवस्था में करणों के लय हो जाने से किसी का भी भान नहीं होता है, इसका कोई भी विरोध नहीं है । इसी से ही–अविद्यावद् विषयक प्रत्यक्षादि प्रमाण और शास्त्र हैं, ऐसा सब निरस्त हो गया । इस विषय में अतिविस्तार करने की कोई आवश्यकता नहीं है ।

इसलिए द्रष्टृत्व-कर्तृत्वादि प्रत्यय यथार्थ हैं, आध्यासिक नहीं, यह सिद्ध हो गया ।

यदि कहें कि द्रष्टृत्व-कर्तृत्वप्रत्यय अपौरुषेय होने से यथार्थ नहीं हो सकते हैं । निर्दोष उपक्रमादि लिङ्गों के द्वारा अवधृततात्पर्य के होने से तत्त्वमस्यादिवाक्यों से

**धृततात्पर्येण च तत्त्वमस्यादिवाक्येनाकर्तृब्रह्मबोधनेन तेषां भ्रमत्वनिश्चयादिति चेन्न, वाक्यार्थज्ञानाभावात्। तथा हि अपौरुषेयतया निर्दोषेण लिङ्गावधृततात्पर्येण च तत्त्वमस्यादिवाक्येन प्रतिपाद्यमानस्य सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति सच्छब्दवाच्यस्यातिशयसाम्यशून्यस्य तदैक्षत बहु स्यां प्रजायेय तत्तेजोऽसृजतेति ईक्षणबहुभवनसङ्कल्पवतस्तेजःप्रभृतिजगत्स्रष्टुरैतदात्म्यमिद सर्वम्, तत् सत्यम्, स आत्मा, तत्त्वमसि श्वेतकेतो इति तादात्म्योपदेशोऽस्मदिष्टतमः।**

---

भ्रान्तित्वं स्यान्नैवमित्येवाभिप्रायेणोक्तां शङ्कां परिहरति-**नेति**। वाक्यार्थज्ञानाभावमेव विवृणोति–**तथा हीति**। प्रतिपाद्यमानस्येत्यादिष्ठ्यन्तचतुष्टयं ब्रह्मणो विशेषणम्। ब्रह्मणस्तादात्म्योपदेशोऽस्मदिष्टतम एवेति योजना। यदुपक्रमवाक्ये यच्छब्दवाच्यं ब्रह्म निर्दिष्टं तदेवोत्तरवाक्ये तत्पदेन बोध्यत इति बोधनायोपक्रमवाक्यमुदाहरति **सदेवेति**। अग्रे = सृष्टेरादौ, इदंशब्दवाच्यस्य कार्यजातस्य जगत: सच्छब्दवाच्ये कारणेऽतिसूक्ष्मत्वेन सत्त्वेऽपि नामरूपविभागाभावेन पृथग्ग्रहणानर्हत्वात्सदेवेति-कारणैक्यनिर्देश: सूपपन्न:। **एकमेवेति**। एकशब्दश्च कारणैकत्वं विदधाति। एवकारश्चान्ययोगव्यवच्छेदार्थकस्तत्समं निषेधति। अद्वितीयशब्दश्च तदाधिक्यं निषेधति। "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्येकार्थत्वात्। अन्यथैकपदेनैवाद्वैत-सिद्धावन्यपदयोर्वैयर्थ्यापत्तेरित्यर्थ:। **तदैक्षतेति**। तत् = सदाख्यं ब्रह्म ऐक्षत = पर्यालोचनमकरोत्। किमिति, अहमेव जगद्रूपेण, बहु स्याम् = बहुरूपं स्याम्। तदर्थं प्रजायेय = तेजोऽबन्नादिरूपेण प्रकर्षेण जायेयेति श्रुत्यर्थ:। तेज:प्रभृतिसृष्टिकर्तृत्वबोधिकां श्रुतिमुदाहरति–**तत्तेज इति**। तत् = **ब्रह्म**, तेजोभूतमसृजत इत्यर्थ:। **ऐतदात्म्यमिति**। इदं दृश्यमानं सर्वं चिदचिदात्मकं विश्वं ब्रह्मत्मकमित्यर्थ:। उक्ताभि: श्रुतिभि: पर्यालोचनबहुभवनसङ्कल्पवतो ब्रह्मणो जगज्जन्मादिकर्तृत्वं निश्चीयते।

---

अकर्तृक ब्रह्म का बोध होने से द्रष्टृत्व-कर्तृत्वादि बोधों के भ्रमत्व का निश्चय होता है, तो यह शंका भी असंगत है। क्योंकि तत्त्वमस्यादि वाक्यों द्वारा अकर्त्तृत्वादि का बोध नहीं होता है। जैसे–अपौरुषेय होने से निर्दोष षड्लिङ्गों से अवधृत तात्पर्य द्वारा तत्त्वमस्यादिवाक्य से प्रतिपद्यमान "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्यादि श्रुति घटक सत् शब्द से वाच्य-अतिशय-साम्य से शून्य "तदैक्षत बहुस्यां प्रजायेय, तत्तेजो असृजत" इत्यादि श्रुतियों द्वारा ईक्षण-बहुभवन संकल्पवत-तेजप्रभृति जगत् का स्रष्टा 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' "तत्त्वमसि श्वेतकेतो" इस प्रकार का तादात्म्योपदेश सिद्धान्ती को अभीष्ट हैं।

**परन्तु तस्मिन् वाक्ये, अकर्तृब्रह्मोपदेशस्य केनापि वाक्येनोपदिष्टत्वाभावात् । प्रत्युतेक्षणबहुभवनसङ्कल्प–कर्तृत्वपूर्वकतेजःप्रभृतिजगत्कर्तृत्वश्रवणाच्चोक्तप्रत्ययानां भ्रमत्वासिद्धेः । किञ्च, षड्लिङ्गोपेततत्त्वमस्यादिवाक्येन भवदभिप्रेतनिर्विशेषाकर्तृब्रह्मबोधनस्यैवासम्भवः; वाच्यत्वानभ्युपगमात् । वाक्यमात्रस्य किञ्चिद्धर्मावच्छिन्नवस्तुबोधकत्वनियमात् । एतेन एवमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्ष इति निरस्तम् । युक्तिभानकारणप्रमाणाभावात् ।**

**"मे माता बन्ध्या" इति वाक्याभासवदप्रामाण्यादिति यावत् ।**

---

कथं ब्रह्मणः कर्तृत्वं निषिद्ध्यते भवता, उक्तासु श्रुतिषु कर्तृत्वनिषेधकपदासत्त्वादित्याक्षिपति–**परन्त्विति** । उक्तप्रत्ययानाम् = कर्त्ताद्रष्टाश्रोताऽनुमन्ताहमित्यादिप्रत्ययानाम् । उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये, इत्यभियुक्तोक्तैरुपक्रमादिषड्लिङ्गोपेतैः तत्त्वमस्यादिवाक्यैर्निर्विशेषचिन्मात्रस्याकर्तृत्वं बोध्यत इत्यपि न वक्तुं शक्यते, तव मते ब्रह्मणः पदवाच्यत्वानभ्युपगमादित्याह–**किञ्चेति** । यद्यद् वाक्यजातं तत्तत् किञ्चिद्धर्मावच्छिन्नवस्तुबोधकमिति नियममवलम्ब्याह–**वाक्यमात्रस्येति** । एतेन = वक्ष्यमाणहेतुना । वर्णिताध्यासमुपसंहरति–**एवमिति** । अनादिविद्यात्मकतया कार्यस्यानादित्वम् । अध्यासात्संस्कारस्ततोऽध्यास इति प्रवाहतो नैसगर्गिकत्वम् । अनन्तश्च ज्ञानं विना ध्वंसायोग्यत्वमित्युक्तभाष्यार्थः । अध्यासो न कथमप्युपपद्यते युक्तिभानाभावात्, मानाभावाद्वा, कारणाभावात्, प्रमाणाभावाच्चेत्याह–**युक्तीति** ।

अयं भावः–न तावदुक्तलक्षणमनादित्वं वक्तुं शक्यम् । अनादित्वकार्यत्वयोरेकत्र

---

**किन्तु "तत्त्वमसि" इस वाक्य में अकर्तृब्रह्म का उपदेश इष्ट नहीं है, प्रत्युत् ईक्षण-बहुभवन-संकल्प-कर्तृत्वपूर्वक तेज प्रभृति जगत् कर्तृत्व का श्रवण होने से द्रष्टृत्व-कर्तृत्वादि प्रत्ययों के भ्रमत्व की सिद्धि नहीं हो सकती है ।**

**किञ्च–षड्विधलिङ्गोपेत तत्त्वमस्यादि वाक्य से अद्वैती को अभिप्रेत निर्विशेष अकर्त्ता ब्रह्म का बोध ही नहीं होगा, क्योंकि ब्रह्म अवाच्य है । वाक्यमात्र किञ्चिद् धर्मावच्छिन्न का, अर्थात् विशिष्ट वस्तु का ही ज्ञान कराते हैं, निर्विशेष ब्रह्म का ज्ञान नहीं कराते हैं ।**

**इस प्रकार 'एवमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्व भोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः" यह भी निरस्त हो गया । युक्ति एवं प्रमाण के अभाव से अनादि नैसर्गिक अध्यास की सिद्धि नहीं हो सकती है ।**

**"मे माता बन्ध्या" जैसे–यह कथन परस्पर व्याहत है, उसी प्रकार से अनादि नैसर्गिक अध्यास की सिद्धि भी व्याहत है ।**

**यत्पुनरुक्तम्–"अस्याऽनर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त" इति। तदत्यन्तानुपपन्नम्। तमेतमेव लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः। तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि न सम्बध्यत इति स्वोक्तिविरोधात्। किञ्चाध्यासस्यानर्थहेतुत्वमस्ति न वेति निश्चेतव्यम्।**

---

व्याघातात्। प्रत्युत कार्यत्वस्य सादित्वेनैव व्याप्तिप्रदर्शनाच्च। नापि नैसर्गिकत्वं वक्तुमर्हम्। आरोपप्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः समारोपनिबन्धना च प्रतीतिरित्यन्योन्याश्रयात्। नाप्युक्तलक्षणमनन्तम्। तत्त्वज्ञानेनाविद्यासंसर्गस्यैव ध्वंसः, न तु स्वरूपेण तस्य ध्वंस इति। **मे मातेति**। यद्यध्यासस्यानादित्वं तदा कार्यत्वं कथम्, यदि कार्यत्वं तदाऽनादित्वं कथमिति परम्परव्याहतिरित्यर्थः। प्रागुक्तार्थं दूषयितुमनूद्यति–**यत्पुनरुक्तमिति**। अस्य = कर्तृत्वाद्यनर्थहेतोरध्यासस्य। विरोधिप्रत्ययं विना कुतोऽस्य प्रहाणमित्यत उक्तम्। **आत्मैकत्वेति**। **तमेतमिति**। आक्षिप्तं समाहितमुक्तलक्षणलक्षितमध्यासमविद्याकार्यत्वादविद्येति मन्यन्त इत्यर्थः। विद्यानिवर्त्यत्वाच्चास्याविद्यात्वमित्याह–**तद्विवेकेनेति**। अध्यस्तनिषेधेनाधिष्ठान-स्वरूपनिर्धारणम्, विद्यामध्यासनिवर्तिकामाहुरित्यर्थः। तथापि कारणविद्यां त्यक्त्वा कार्यविद्या किमिति वर्ण्यते तत्राह–**तत्रेति**। तस्मिन्नध्यास उक्तन्यायेनाविद्यात्मके सतीत्यर्थः। अध्यस्तकृतगुणदोषाभ्यामधिष्ठानं न लिप्यत इत्यर्थः। **स्वोक्तिविरोधादिति**। पूर्वमध्यासस्यानर्थहेतुत्वमुक्तं सम्प्रति अध्यस्तकृतगुणदोषाभ्यामधिष्ठानं न लिप्यते, इति स्वोक्तिविरोध इत्यर्थः। यद्यध्यासस्यानर्थहेतुत्वमभ्युपेयते तदाऽधिष्ठानस्य दुष्टत्वं प्रसज्येत, तथा सति, "असङ्गोह्ययं पुरुष" इति ब्रह्मणोऽसङ्गत्वाप्रतिपादिकायाः श्रुतेः विरोधः स्यात्। यद्यध्यासस्यानर्थहेतुत्वं नास्ति तदा कस्य प्रहाणाय वेदान्तानामारम्भ इत्याह—**किञ्चेति**। आत्मैकत्वविद्याप्रतिपत्तिः वेदान्तविचारेणैव भाव्या तया च कर्तृत्वाद्यनर्थहेतोरध्यासस्य समुच्छेद इति परेषां पन्थास्तत्रैवं जिज्ञास्यते ब्रह्मात्मैक्यत्वसाक्षात्काररूपा प्रतिपत्तिरध्यासमात्रस्य निवर्तिका, आहोस्वित् समूलघाताध्यासस्य निवर्तिका। अमुमर्थमाह—**किञ्चेति**। सा = आत्मैकत्वविद्याप्रतिपत्तिः। तत्कारणविद्यायाः = अध्यासकारणविद्यायाः।

---

यह कहा गया है कि, इस अनर्थ हेतु के प्रहाण (नाश) के लिये सब वेदान्तों का आरम्भ होता है, यह कथन भी अनुपपन्न है। क्योंकि सदसत् के विवेचन करने की जिनकी बुद्धि है, उनको पण्डित कहते हैं। वे पण्डित इस अनादि नैसर्गिक अध्यास को अविद्या कहते हैं तथा विवेक रूप से वस्तु के स्वरूप निश्चय को विद्या कहते हैं। उस वस्तुभूत ब्रह्म में जहाँ अध्यास है उस अध्यास रूप दोष से अथवा उसके गुण से किञ्चिन्मात्र भी सम्बद्ध नहीं होता है। इस प्रकार की अद्वैतियों की उक्ति का विरोध होगा।

**नाद्यः । दोषादिसम्बन्ध्यापत्त्याऽसङ्गत्वश्रुतिविरोधात् । न द्वितीयः । अनर्थहेतुत्वाभावात्तन्निवृत्यर्थं शास्त्रारम्भस्य वैयर्थ्यात् शास्त्रारम्भो व्यर्थः प्रयोजनाभावात् दिवादीपवदित्यनुमानात् । किञ्च कर्तृत्वाद्यनर्थहेतोरध्यासस्यात्मैकत्वविद्याप्रतिपत्त्या प्रहाणं भवति । सा च वेदान्तविचारेणेति सिद्धान्तं प्रतिपद्यमानैः विद्वद्भिः प्रष्टव्या । किमात्मैकत्वविद्याप्रतिपत्त्या उक्ताध्यासमात्रस्यैव प्रहाणिर्न तु तत्कारणाविद्यायाः ? उत समूलस्यात्यन्तिकनाश इति विवेचनीयमिति । नाद्यः । मूलकारणस्य सत्वेन पुनस्तदुत्पत्त्यापातात् । अविद्यानिवर्त्तकाभावे विद्यास्वरूपहानेश्च अविद्या निवर्त्तकाऽन्तराभावेनाऽनिवृत्तिप्रसङ्गाच्च । न द्वितीयः । शुक्तिज्ञानाद्रजतबाधवद् आत्मैकत्व-**

---

आद्यपक्षं निरस्यति—**नाद्य इति** । तदुत्पत्त्यापातात् = अध्यासोत्पत्त्यापातात् । अविद्यानिवर्तकत्वमेव विद्यायाः स्वरूपं तस्य हानिः स्याद्यद्यविद्यानिवर्तकं न स्यादित्याह—**अविद्येति** । द्वितीयपक्षमपवदितुमाह—**न द्वितीय इति** । यथा शुक्तिसाक्षात्कारेण रजतं बाध्यते तद्वत्, आत्मैकत्वविज्ञानाद्विश्वस्य बाधो न भवतीत्याह—**शुक्तीति** ।

---

अध्यास की अनर्थ (दुःख) हेतुता है, कि नहीं ? इसका विचार करना चाहिये, यदि अध्यास की अनर्थ हेतुता है, तो अध्यास रूप दोष के सम्बन्ध होने से ब्रह्म के असंगत्व प्रतिपादक श्रुति का विरोध होगा ।

द्वितीय पक्ष अर्थात् अध्यास अनर्थ का हेतु नहीं है–यह कथन भी असंगत है, क्योंकि अनर्थनिवृत्ति के लिये शास्त्र का आरम्भ व्यर्थ हो जायेगा । शास्त्र का कोई प्रयोजन नहीं रहेगा । जैसे–दिन में दीप का कोई महत्त्व नहीं है–प्रयोजनाभाव होने से, उसी प्रकार अनुमान प्रमाण से सिद्ध अध्यास का भी महत्त्व न होने से अनुमान प्रमाण भी व्यर्थ है । पुनः यदि कहा जाय कि कर्त्तृत्वादि अनर्थ का हेतु अध्यास के प्रहाण (नाश) के लिये जीव परमात्मैक्यज्ञान की आवश्यकता है । वह जीवपरमात्मैक्यज्ञान वेदान्तों के विचार से होता है, ऐसा सिद्धान्त है । इस प्रकार के सिद्धान्त के अभिज्ञ विद्वानों द्वारा वे अद्वैतवादी पूछने योग्य हैं–क्या आत्मैक्य के ज्ञान द्वारा अध्यासमात्र की निवृत्ति होती है ? अध्यास के कारण अविद्या की निवृत्ति नहीं है ? अथवा समूल अध्यास का आत्यन्तिक नाश होता है ? प्रथम पक्ष संगत नहीं है–क्योंकि मूल कारण अविद्या के रहने से पुनः अध्यास के उत्पत्ति की आपत्ति होगी । अविद्या की निवृत्ति न होने से विद्यास्वरूप की हानि हो जायेगी । अविद्या के निवर्तक विद्या के होने से अविद्या के अनिवृत्ति की आपत्ति होगी ।

द्वितीय पक्ष भी असंगत है–शुक्ति अधिष्ठान के ज्ञान से रजत का जैसे समूल बाध हो जाता है, वैसे ही आत्मैकत्व विज्ञान से समूल अध्यस्त सम्पूर्ण प्रपंच का

**विज्ञानादध्यस्तसर्वप्रपञ्चस्य बाधादर्शनात् । आत्मैकत्वविज्ञानेन सर्वबाधस्वीकारे च अद्वैतसिद्धान्तसम्प्रदायोच्छेदप्रसङ्गः स्यात् । तथा हि—अद्वैतसिद्धान्त-प्रवर्त्तकाचार्या:—अज्ञा: ? आत्मैकत्वविद्यावन्तो वा ?**

**नाद्यः। अज्ञत्वादेवाऽऽचार्यत्वभङ्गात् । अज्ञोपदिष्टस्याप्रामाण्याच्च । 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः'' इति भगवदुक्तेः । अन्यथाऽ-न्धपरम्परान्यायापत्तेः । ''अन्धैर्नीयमाना यथान्धाः'' इति श्रुतेः । न द्वितीयः । अद्वैततत्त्वसाक्षात्कारवतां द्वैतदर्शनाभावेन स्वगतपरमतोद्देशपूर्वकदूषणभूषणोप-पादनात्मकशास्त्रप्रणयनरूपभेदज्ञानाऽसम्भवात् । गुरुशिष्योपदेशरूपभेददर्शनाऽ-**

---

यद्यात्मकत्वविज्ञानेन सर्वं बाध्यत इत्युच्यते तदाप्याह—**आत्मैकत्वेति** । उक्तार्थं विवृणोति—**तथा हीति** । द्विधा विकल्पयति—**अद्वैतेति** ।

आद्यपक्षमपवदति—**नाद्य इति** । अज्ञत्वमाचार्य्यत्वव्याघातकमिति भावः । उक्तार्थं श्रीमुखवचनेन प्रमाणयति—**उपदेक्ष्यन्तीति** । विपक्षे बाधकतर्कमुपन्यस्यति—अज्ञस्याप्याचार्य्यत्व इति तदर्थः । द्वितीयपक्षमपाकरोति—**न द्वितीय इति** । भेदज्ञानसत्त्व एव स्वमते साधनबाधनक्षमाः युक्तयः प्रदर्शयितुं शक्यन्ते नान्यथेत्याह—अद्वैततत्त्व इति । तस्य = गुरुशिष्यभावस्य । विपक्षे बाधकतर्कमुपन्यस्यति—**अन्यथेति** ।

---

बाध होता है ऐसा नहीं देखा गया है । आत्मैक्य विज्ञान से सर्वबाध स्वीकार करने पर अद्वैत सिद्धान्त की परिगणना होने से अद्वैत सिद्धान्त सम्प्रदाय का भी उच्छेद हो जायेगा ।

पुन: शंका होती है, कि अद्वैत सिद्धान्त के प्रवर्त्तक आचार्य अज्ञ हैं ? आत्मैकत्व विज्ञान वाले हैं ?

आद्य पक्ष असंगत है यत: अज्ञ होने से उनका आचार्यत्व नष्ट हो जायेगा । अज्ञ के द्वारा उपदिष्ट में अप्रामाण्य की आपत्ति होगी ।

'उपदेक्ष्यन्ति ते ज्ञानं **ज्ञानिनः तत्त्वदर्शिनः**' इस भगवदुक्ति का विरोध होगा । इस प्रकार से अन्धपरम्परा न्याय का आपत्ति दोष होगा । ''अन्धैर्नीयमाना यथान्धाः'' इति । द्वितीय पक्ष भी असंगत है—अद्वैततत्त्व के साक्षात्कारकर्त्ता अद्वैताचार्यों का द्वैतदर्शन के अभाव से स्वमत-परमतोपदेशपूर्वकदूषण-भूषण के उपपादनात्मक शास्त्र का प्रणयनरूप भेद का ज्ञान नहीं हो सकेगा ।

गुरु-शिष्योपदेशरूप भेददर्शन नहीं बनेगा । कोई गुरु है, कोई शिष्य है, शिष्य को उपदेश दिया जाता है, इस प्रकार का भेददर्शन नहीं बनेगा, क्योंकि आचार्य को अद्वैत दर्शन का ज्ञान है ।

**सम्भवाच्च । कोव गुरुः कस्मै शिष्याय किं वा तत्त्वमुपदिशेत् । तस्य सर्वस्य बाधितत्वात् । अन्यथा भेददर्शनस्यैव भवन्मतेऽज्ञानमूलकत्वात् । कार्यदर्शनस्य कारणसत्तापूर्वकत्वनियमेनाऽविद्यावत्वस्याऽवश्यम्भावात् । तद्योगादनाप्तत्वप्रसङ्गस्य दुर्वारत्वात् ।**

**ननु जीवन्मुक्तत्वात्तेषां दग्धपटन्यायेनानुवर्तमानबाधितभेददर्शनान्नोक्तदोषयोग इति चेन्न दृष्टान्तवैषम्यात् । दग्धपटस्य किमपि कार्य्यकारित्वाभावात् । तेषां तु पूर्ववदेव सर्वक्रियाकारित्वं प्रत्यक्षप्रमाणसिद्धमेवेति भावः । न चाऽन्यदृष्ट्यैव तेषां क्रियाकारित्वमिति वाच्यम् । नियामकाऽभावाच्छा-**

---

सर्वस्याबाधितत्व इति तदर्थः । कार्यदर्शनेन कारणस्य सत्त्वमनुमातुं शक्यत इत्याह—**कार्यदर्शनस्येति** । भेदात्मककार्यदर्शनेन तत्कारणीभूतमज्ञानमनुमातुं शक्यते तथा सत्यविद्यायोगात्त्वदीयाचार्याणामनाप्तत्वं प्रसज्येतेत्यर्थः ।

यथा दग्धपटस्याकारः प्रतीयते तद्वदस्मदीयाचार्याणां जीवन्मुक्तत्वात्तेषां बाधितभेददर्शनमनुवर्त्तत इति शङ्कते—**नन्विति** । परिहरति—**नेति** । दग्धपटस्याच्छादनरूपकार्यकारित्वं नास्तीति दृष्टान्तवैषम्यमेवाह—**दग्धपटस्येति** । तेषाम्=त्वदीयाचार्याणाम् । अन्यदृष्ट्यैव त्वदीयाचार्याणां सर्वक्रियाकारित्वं न तु स्वदृष्ट्येत्यत्र

---

अद्वैत मत में न कोई गुरु है, न कोई शिष्य है क्योंकि सब बाधित है । अद्वैतमत में भेददर्शन अज्ञानमूलक अभीष्ट है ।

कार्य का दर्शन (साक्षात्कार) कारणसत्त्वपूर्वक होता है, ऐसा नियम है । अविद्या की भी सत्ता स्वीकार करना भी आवश्यक है, उसका मिथ्यात्व स्वीकार नहीं कर सकते, क्योंकि असत् अविद्या जगत् की जननी नहीं हो सकती है ।

अद्वैताचार्य के अविद्या से सम्बन्ध होने से अनाप्तत्व का आपत्तिरूप दोष होगा ।

यदि यह कहा जाय कि जीवन्मुक्त को दग्धपटन्याय द्वारा अर्थात् पट के नाश होने पर भी दग्धपट ऐसा व्यवहार है । उसी प्रकार आत्मज्ञान के द्वारा अविद्या मूलक प्रपञ्च के बाध होने पर संस्कारवशात् भेददर्शन होता है । इस प्रकार उक्तदोष नहीं होता है, किन्तु यह कथन असंगत है, क्योंकि दृष्टान्त का दार्ष्टान्तिक के साथ विरोध है ।

दग्धपट में अर्थक्रियाकारित्व का अभाव होने से उसका मिथ्यात्व होता है, किन्तु अद्वैताचार्यों का अर्थक्रियाकारित्व होने से उनके मिथ्यात्व की सिद्धि नहीं होगी ।

यदि पुनः कहा जाय कि द्वैतवाद के अनुसार अद्वैताचार्यों की अर्थक्रियाकारिता है न कि अद्वैतमत के अनुसार । यह भी कथन असंगत है, क्योंकि आचार्यों में अर्थ

**स्त्रप्रमाणशून्यत्वाच्च। न च प्रारब्धमात्रशेषत्वात् तत्कृतकार्य्यकारित्वं न दोषावहमिति वाच्यम्। सुखदुःखादिभोगात्मकप्रारब्धकर्मणि तत्कार्य-भूतकामक्रोधादौ च विद्यमाने मुक्ताभिधानस्य, मुक्ता वयम्—इत्यज्ञजन-तावञ्चकतामात्रत्वात्। एवञ्च संज्ञामात्रजीवन्मुक्तेर्जन्मान्धस्य पुंसः कमल-नयनसंज्ञावदुपहासमात्रत्वात् जीवन्मुक्तौ प्रमाणाभावाच्च।**

**ननु तस्य तावदेव चिरं यावन्न विमोक्ष्ये—अथ सम्पत्स्य, इति श्रुतिसिद्धा जीवन्मुक्तिः किमिति निन्द्यत इति चेत्, सत्यम्। गतत्रपाणां किमप्यशोभनं नास्तीति भावात्। श्रुतौ "तावदेव चिरं न विमोक्ष्ये-अथ सम्पत्स्ये" इति**

---

किञ्चिद्विनिगमकमस्ति येन त्वत्पक्षः सिद्ध्येत्। न तु तदस्तीत्याशयेनाह—**नियामकेति**। तर्हि द्वैतस्य सत्त्वं तव मुखेनैव सिद्धमद्वैतभङ्गादिति भावः। प्रारब्धकर्मजन्यवर्तमानदेहनिर्वाहाय तेषां प्रारब्धमात्रमवशिष्यत इत्याशङ्क्य परिहरति–**न चेति**। प्रारब्धकर्मणि विद्यमाने सति मुक्त्युपपादनं दुराग्रहमात्रमित्याह—**सुखदुःखेति**।

जीवन्मुक्तौ प्रमाणमुपन्यस्यति—**नन्विति**। श्रुत्यर्थं तावद्विवृणोति—**श्रुताविति**। तावदेव चिरं यावन्न विमोक्ष्य इत्यनेन वर्त्तमानकाले प्रारब्धकर्मजन्यभोगस्य प्रतिबन्धकस्य विद्यमानत्वान्न मोक्ष इत्यभिहितम्। अथ सम्पत्स्य इत्यनेन च प्रारब्धकर्मभोगानन्तरं भाविमोक्षश्च साक्षादुच्यत इत्यर्थः। एतावता प्रसङ्गप्राप्तः सपरिकरोऽयमध्यासवादो निरस्तः। तत्सिद्धं परमते विषयसम्बन्धप्रयोजनासिद्ध्याऽधिकार्यसिद्धिरिति। एवञ्चानुबन्धाभावे

---

क्रियाकारिता नहीं है इसका नियामक कोई नहीं और शास्त्रप्रमाण से शून्य है।

यदि कहा जाय कि जीवन्मुक्त के प्रारब्धकर्म के शेष होने से अर्थक्रियाकारित्व के रहने पर भी कोई दोष नहीं है। यह कथन भी असंगत है, क्योंकि सुख-दुःखादिभोगाश्रयरूप-पारब्ध कर्म के रहने पर जीवन्मुक्तकथन अर्थात् "हम मुक्त हैं" ऐसा कथन अज्ञता का परिचायक है उसके इस कथन का पर्यवसान वञ्चक के वाक्य में ही होगा।

जीवन्मुक्त यह संज्ञा उसी प्रकार की है जैसे-किसी जन्मान्ध व्यक्ति की कमलनयनसंज्ञा उपहास का पात्र होती है। जीवन्मुक्त की सिद्धि में कोई प्रमाण नहीं है।

यदि कहा जाय कि—"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पततस्ये" इस श्रुति से सिद्ध मुक्ति आप द्वैतवादियों के निन्दा करने योग्य नहीं है, अर्थात् जीवनमुक्ति की सिद्धि हो जायेगी। किन्तु यह कथन भी संगत नहीं है, क्योंकि जिनको वेदान्तार्थ की अवगति नहीं है, तथा लोकमर्यादा से शून्य है ऐसे अद्वैतियों के लिए

**पदैः प्रारब्धभोगप्रतिबन्धकं वर्तमानकाले मोक्षाभावं भाविमोक्षञ्च साक्षादुच्यमानं ज्ञात्वाऽज्ञात्वा वा यथेष्टवादित्वादत एव यथाकामचारिणां सिद्धान्ते किमपि दूषणं नास्तीति भावः । एवञ्च वेदान्तशास्त्रस्याप्रयोजकत्त्वेन वैयर्थ्यात्- केवलाद्वैत-वादिमतमसङ्गतमेवेति सिद्धम् । अध्यासाज्ञानलक्षणतन्निवर्त्तकादिविशेषनिरासस्तु परमतगिरिवज्राख्ये ग्रन्थे विस्तृतस्तत्रैव द्रष्टव्य इत्यलं विस्तरेण ।**

---

शास्त्रप्रणयनस्य सुतरां वैयर्थ्यमित्याह—**एवञ्चेति** । अध्यासस्याज्ञानस्य च लक्षणम् । अज्ञाननिवर्तकं तद्विषयादिकं विशेषरूपेणनिरस्तमित्याह—**अध्यासेति** । यत्र यस्याध्यासस्तस्यैव विपरीतधर्मकल्पनमध्यासः । इति माध्यमिकस्याध्यासलक्षणम् । मायावादिनस्तु स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इत्याहुः । तत्र—यदुक्तं लक्षणं तदापातरमणीयं मूलाविद्याध्यासे तदसम्भवस्य दुर्वारत्वात् । एकत्र सतोऽन्यत्रारोपत्वं भ्रमत्वम् । अत्यन्तासतोऽध्यासायोगात् । तत्रारोप्य निरासे पूर्वमेव विस्तरात्प्रत्युक्तमिति । अनादिभावत्वे सति ज्ञाननिवर्त्यत्वमज्ञानलक्षणम् । तत्र—सादिशुक्त्यवच्छिन्नचैतन्या-वारकाज्ञानेष्वव्याप्तिस्तेषामनादित्वायोगात् । आरोपितसाद्य-भावोपादानाज्ञाने भावत्वाभावादव्याप्तेश्च । अथाज्ञाननिवर्तकासिद्ध्याऽपि तदसिद्धिः । विकल्पासहत्वात्तथा हि शुद्धं चिन्मात्रमज्ञाननिवर्तकं चिद्विषया वेदान्तश्रवणादिजन्यापरोक्षवृत्तिर्वा । नाद्यः–तस्याज्ञानसाधकत्वेन तदविरोधित्वानङ्गीकाराच्च । न द्वितीयः । कथमसतः सज्जायेत यदि द्वैतस्य मिथ्यात्वं नाभ्युपेयते । तदा तात्त्विकानां पदार्थानां ब्रह्मणा सहैक्यं कथमुपपद्येत ।

---

अशोभनीय कोई वस्तु नहीं है—श्रुति में ''तावदेव चिरं न विमोक्ष्ये–अथ सम्पत्स्ये'' इन पदों के द्वारा प्रारब्ध भोग का प्रतिबन्धक वर्तमानकाल में मोक्षाभाव है तथा भावी मोक्ष है; ऐसा साक्षात् कथ्यमान वस्तु को जानकर अथवा न जानकर कहनेवाला व्यक्ति अपने इष्ट की सिद्धि धूलिप्रक्षेप करके भी करना चाहता है, ऐसे व्यक्ति के लिये कुछ भी अशोभनीय (दूषण) नहीं है ।

अतः प्रमाण के अभाव में जीवन्मुक्ति की सिद्धि नहीं हो सकती है ।

वेदान्तशास्त्र का मोक्ष के प्रति प्रयोजक न होने से वैयर्थ्य दोष होगा । इसलिए केवलाद्वैतमत असंगत है यह सिद्ध हो गया ।

अध्यास-अज्ञान-इनके निवर्तकों का निरास परमतगिरिवज्र नामक ग्रन्थ में बड़े विस्तार से किया गया है, अधिक ज्ञान के लिए उस ग्रन्थ का अवलोकन करें । इसलिए यहां पर इसका विस्तार नहीं करते हैं ।

**ननु द्वैतस्याध्यस्तत्वानङ्गीकारे परमार्थतो भिन्नानां पदार्थानां ब्रह्मैक्यासम्भवात् स्वमुखेन भवद्भिरपि निरस्तत्वाच्च। पूर्वोक्तश्रुतीनां ब्रह्मैकत्वप्रतिपादिकानां भेदप्रतिषेधकानां च विरोधात् सिद्धान्ताभावप्रसङ्गः स्यादिति चेन्न। सच्छास्त्रसिद्धान्तावरक्षणार्थं भगवत्पुरुषोत्तमाज्ञयावनितलावतीर्णानां श्रीसनत्कुमारसम्प्रदायप्रवर्तकाऽऽचार्य्याणां सिद्धान्ते श्रुतिविरोधगन्धस्याप्यभावात्। तथा हि—न तावत्सदेवेति श्रुतिविरोधः। अग्रे सृष्टेरादौ इदं शब्दवाक्यस्य कार्यस्य जगतः सच्छब्दवाच्ये कारणे अतिसूक्ष्मरूपत्वेन सत्त्वेऽपि**

---

अभेदबोधकानां भेदनिषेधकानाञ्च श्रुतीनां विरोधात् कथं द्वैताद्वैतसिद्धान्त उपपद्यत इति शङ्कते—**नन्विति**। परिहरति—**नेति**। सदेवेति श्रुतिविरोधं परिहरति—**न तावदिति**। श्रुत्यर्थं विवृणोति-**अग्र इति**। विपक्षे बाधकतर्कमुपन्यस्यति—**अन्यथेति**। कार्यकारणयोरैक्यानङ्गीकार इति तदर्थः। सत्कार्यवादसिद्ध्यर्थं श्रुतिसूत्राण्युदाहरति—**तदिति**। तत् = ब्रह्म, सद् आसीदित्यर्थः। तदनन्यत्वमारम्भणशब्दादिभ्यः। तस्य कार्यस्य जगतः कारणाद् ब्रह्मणोऽनन्यत्वमिति सूत्रार्थः। कार्यकारणयोरनन्यत्वे हेत्वन्तरमाह—सत्त्वाच्चा। सदेव सोम्येदमग्र आसीदिति सामानाधिकरण्यनिर्देशादवरस्य कार्यस्येदम्पदवाच्यस्य कारणे सत्त्वात्तदनन्यत्वं निश्चीयत इति सूत्रार्थः। "असद्वा इदमग्र आसीदि"त्यन्यद्व्यपदेशात् कार्यस्य सृष्टेः प्रागसत्त्वमिति चेन्न। सूक्ष्मत्वेन

---

यदि अद्वैतवादियों द्वारा यह कहा जाय कि—द्वैत का अध्यस्तत्व स्वीकार किया जायेगा तो परमार्थरूप से भिन्न पदार्थों के ब्रह्मैक्य होने से द्वैतवादी अपने आप निरस्त हो जायेंगे। ब्रह्मैक्य के प्रतिपादक तथा भेद के प्रतिषेधक-श्रुतियों का विरोध होगा, उनके द्वैतसिद्धान्त की हानि होगी। अतः भेद का अध्यस्तत्व द्वैतवादियों को न चाहते हुए भी मानना पड़ेगा। इस प्रकार उनकी शंका असंगत है, क्योंकि सच्छास्त्र के संरक्षणार्थ भगवान् पुरुषोत्त की आज्ञा से पृथ्वीतल पर अवतीर्ण निम्बार्क सम्प्रदाय के प्रवर्त्तक आचार्य श्री सनत्कुमार भगवान् के सिद्धान्त में श्रुतिविरोध का गन्ध भी नहीं है।

जैसे-"तावदेवेति" श्रुति का विरोध नहीं है, क्योंकि सृष्टि के आदि इदं शब्द का वाच्य नामरूपात्मक जगत् का सच्छब्द से वाच्य कारणभूत परमात्मा में अतिसूक्ष्मरूप से रहने पर भी नामरूप के विभाग का अभाव होने से पृथक् रूप से नामरूपजगत् के ग्रहण करने योग्य न होने के कारण सदेवेति कथन संगत है। नामरूप के अनर्ह होने के कारण सत् ब्रह्म के साथ ऐक्य की प्रतीति हो रही है। ऐक्य प्रतीति का विषय जगत् का निषेध नहीं है, क्योंकि जगत् नामरूप के अनर्ह होता हुआ अतिसूक्ष्म रूप से सद् ब्रह्म में रहता है। जगत् के असत्त्व पक्ष में कारण सद् ब्रह्म

**नामरूपविभागाभावेन पृथग्ग्रहणानर्हत्वात् सदेवेति । कारणेनैक्यनिर्देशः सूपपन्नः, अन्यथा सच्छब्दवाच्यस्य कारणस्य ब्रह्मण इदमित्यङ्गुल्या निर्देशायोगात् कार्य्यस्य कारणे सूक्ष्मरूपेण सत्वानङ्गीकारे च असत्कार्यवादाभ्युपगमापत्या तत् सदासीत् । सत्वाच्चावरस्य । ब्र. २।१।१४। असद् व्यपदेशादिति चेन्न-धर्मान्तरेण वाक्यशेषात् ब्र. सू. २।१।१७। युक्ते शब्दान्तराच्च, ब्र. २।१।१८। पटवच्च इत्यादिशास्त्रावगतसूत्रकारमतबहिर्भूतत्वप्रसङ्गः स्यात् ।**

**किञ्च इदमा निर्दिष्टस्य कार्यस्य पूर्वमभावाङ्गीकारे आसीदिति पूर्वकालसम्बन्धो न स्यात् । श्रुत्यर्थश्च तत्र सच्छब्दः स्वतन्त्रवाचकः । ''सत्त्वं स्वातन्त्र्यमुद्दिष्टमिति'' वाक्यात् । एकशब्दश्च कारणैकत्वं विदधाति,**

---

तादृग्व्यपदेशोऽस्ति, कुतोऽवगम्यते तत्सदासीति वाक्यशेषात् । यद्यसदेव कार्यमुत्पद्यते तर्हि वह्नेर्यवाद्यङ्कुरोत्पत्तिः कुतो नास्तीति युक्तेः । 'सदेव सोम्येदमग्र आसीदि'ति शब्दान्तराच्चेति सूत्रार्थः । पटवच्च । यथा च सम्वेष्टितः पटः पटत्वेनागृह्यमाणोऽपि नासद्भवति किन्तु प्रकारान्तरेण स्थितः सदेव भवति । पुनः प्रसारितस्तु पटत्वेन गृह्यते । एवं खलु सृष्टेः प्रागनभिव्यक्तनामरूपत्वाद्विश्वत्वेनागृह्यमाणमपि विश्वं सदेव भवति सृष्टिवेलायामभिव्यक्त-नामरूपत्वात्स्पष्टमिदं विश्वं गृह्यत इत्यर्थः ।

यदि कार्य्यस्यासत्त्वमभ्युपेयते तदा आसीदित्यस्यानन्वयापत्तेरित्याह—**किञ्चेति** । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतिं व्याचष्टे-**श्रुत्यर्थश्चेति** । ब्रह्मणा सह चिदचितोस्तादात्म्यप्रतिपादिकां श्रुतिमुदाहरति—**तत्त्वमसीति** । तत्पदार्थवृत्ति-

---

का अंगुल्या निर्देश नामरूप रहित होने के कारण नहीं हो सकता । किन्तु नामरूप जगत् को ही इदं पद से वाच्य होने के कारण अंगुली से निर्देश हो सकता है । इससे सिद्ध होता है कि यह नाम-रूपात्मक जगत् सृष्टि के आदि में नामरूप के अनर्ह होने से अतिसूक्ष्मरूप से परमात्मा में वर्तमान था उसका निषेध नहीं था ।

यदि सृष्टि के आदि में जगत् की सूक्ष्म रूप से सत्ता स्वीकार न करें तो असत् कार्यवाद की आपत्ति होगी । अतः सृष्टि के आदि में जगत् सत् था—यह सिद्ध हो गया ।

''सदेव सोम्येदमग्र आसीत्'' इस श्रुमि में ''आसीत्'' क्रियावाचक पद से तथा इदम् पद से निर्दिष्ट नाम-रूपात्मकजगत् का सृष्टि के पूर्वकाल के साथ सम्बन्ध था, यह प्रतीति होती है । यदि उस समय जगत् की सत्ता नहीं मानेंगे तो 'आसीत्' इस पद का वैयर्थ्य हो जायेगा ।

''सदेव सोम्येदमग्र आसीत्'' श्रुति का अर्थ इस प्रकार है—श्रुतिघटक

**एवकारश्चान्ययोगव्यवच्छेदार्थकस्तत्समं निषेधति । अद्वितीयशब्दश्च तदाधिक्यं निषेधतीति ''न तत्समश्चाभ्यधिकश्च दृश्यते'' इति श्रुत्येकार्थत्वात्** ।। अन्यथा **एकपदेनैव अद्वैतसिद्धौ-अन्यपदयोर्वैयर्थ्यापत्तेः । अथ ''तत्त्वमसि'' ''अयमात्मा ब्रह्म'' ''सर्वं खल्विदं ब्रह्म'' इत्यादिश्रुतीनां चिदचिदात्मनोर्ब्रह्मात्मकत्वेन, तदायत्तस्थिति-प्रकृतिकत्वेन तद्व्याप्यत्वेन च ब्रह्मतादात्म्यप्रतिपादनेन स्वार्थे-एव प्रामाण्यात् सर्वं समञ्जसम् । तत्र ब्रह्मात्मकत्वं नाम-ब्रह्म-आत्मा यस्य**

---

स्वतन्त्रसत्ताश्रयाभिन्नब्रह्मात्मकपरतन्त्रसत्ताश्रयाभिन्नस्त्वंपदार्थः । तत्पदार्थो विश्वात्मा। त्वम्पदार्थः क्षेत्रज्ञान्तरात्मा तयोर्भेदः घटो द्रव्यं पृथिवी द्रव्यमित्यादिवन्मुख्य एवेत्यर्थः। **ब्रह्मात्मकत्वेनेति** । यो यदात्मकः स तदभिन्नो दृष्टो यथा मृदात्मको घटो मृदभिन्ननिदेशार्हस्तद्वत् । तत्र = प्रागुदाहृतवाक्ये, आत्मा अन्तर्यामी ब्रह्म आत्मा यस्येत्युक्तं तं श्रुतिमुखेन प्रमाणयति—**एष म आत्मेति** । आत्मेति तूपगच्छन्तीति । परमात्मा ममांशभूतस्यात्मा, अंशित्वात्, अहञ्च तदात्मकस्तन्निरपेक्ष-स्थितिप्रवृत्तिरहितत्वात् । यथा स्वांश्वपेक्षया सहस्रांशुः स्वाधीनस्थितिप्रवृत्तिमान् । तेषामात्मा, ते च तदात्मकास्तदभिन्नाः । एवं तादात्म्यसम्बधेन भगवान् वेद्यः । तुशब्दो जीव-परमात्मनोरज्ञसर्वज्ञयोः स्वरूपेण भेदं द्योतयति । द्वयोः पदार्थयोः केनापि प्रकारेणाभेदे सति तादात्म्यलक्षणः सम्बन्ध उपपद्यते । न गवाश्वयोस्तादात्म्यमुपपद्यते न चैकस्याप्यश्वस्य तादात्म्यमुपपद्यते । अपि तु कार्यकारणयोर्गुणगुणिनोः शक्तिशक्तिमतोर्भिन्नाभिन्नयोः पदार्थयोरेव तादात्म्यसम्बन्धः । अन्यथा ''सर्वं खल्विदं ब्रह्म'' इत्यत्रापि चिज्जडात्मकस्य

---

सच्छब्द–स्वतन्त्र वस्तु का वाचक है, ''सत्वं स्वातन्त्र्यमुद्दिष्टम्' यह वाक्य इसमें प्रमाण है ।

''एकमेवाद्वितीयम्'' इस श्रुति के घटक एकपद से कारण के एकत्व का बोध होता है ।

एव शब्द का अन्ययोगव्यवच्छेद अर्थ है और परमात्मा के समान पदार्थ का निषेधक है । श्रुति से प्रतिपाद्य परमात्मा की एकता मात्र की सिद्धि होती है न कि प्रपंच के मिथ्यात्व की सिद्धि ।

अद्वितीय शब्द परमात्मा से अधिक का निषेध करता है । अद्वैत को स्वीकार करने पर एक पद से ही अद्वैत की सिद्धि हो जायेगी । अन्य पदों के वैयर्थ्य की आपत्ति होगी । अतः जगत् का मिथ्यात्व एवं अद्वैत की सिद्धि नहीं हो सकती ।

यदि पुनः शङ्का हो कि—''तत्त्वमसि'', ''अयमात्मा ब्रह्म'', ''सर्वं खल्विदं ब्रह्म'' इत्यादि श्रुतियों का चित् (जीव) अचित् (प्रकृति) के ब्रह्मात्मकत्व, परमात्मा

**चेतनाचेतनरूपवस्तुजातस्य तद् ब्रह्मात्मकं तस्य भावस्तत्वम्। तेन ''एष मे आत्मान्तर्यामी एष ते आत्मान्तर्यामी एष सर्वभूतान्तरात्मा सर्वव्यापी सर्वभूतान्तरात्मा पतिं विश्वस्यात्मेश्वरम्। आत्मेति तूपगच्छन्ति ग्राहयन्ति च। ब्र. ४।१।३।**

**''अहमात्मा गुडाकेश!सर्वभूताशयस्थितः'' ''सर्वस्य चाहं हृदि सन्निविष्टः'' ''यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः'' ''अहं भवो भवन्तश्च सर्वे नारायणात्मकाः'' ''क्षेत्रज्ञं चापि मां विद्धि'' ''इन्द्रियाणि मनो बुद्धिः सत्त्वं**

---

जगतो हि स्वरूपेण ब्रह्माभिन्नत्वं स्यात्। तस्मादुपासितुर्ब्रह्मांशभूतस्य स्वरूपेण भिन्नस्यैव भगवानात्मा, पत्रस्य वृक्षवत्, प्रभायाः प्रभावानिव, प्राणानां मुख्यप्राणवच्च। इह भेदाऽपि मुख्यः, अभेदोऽपि मुख्यः, उभयोः स्वाभाविकत्वात्।

उक्तार्थं श्रीमुखवचनेनापि दृढयति—**अहमिति**। सर्वेषां भूतानां प्राणिनामाशये हृदयेऽन्तर्यामिरूपेण स्थित आत्माऽहं भूतानामादिरुत्पत्तिश्च मध्ये स्थितिश्च अन्तश्च नाशः। सर्वभूतानामुत्पत्तिस्थितिनाशहेतुरहमेवेत्यर्थः। **सर्वस्येति**। सर्वस्य ब्रह्मादिप्राणिमात्रस्य हृदि सम्यगन्तर्यामिरूपेण निविष्टः। एतेन सर्वचेतनाचेतनवस्तुजातस्य भगवदायत्तत्वं स्वस्य च स्वतन्त्रत्वं सर्वधीप्रवर्त्तकत्वञ्चोक्तं भवति।

स्मृत्याप्युक्तार्थं द्रढयति—**यदाहेति**। एतदुक्तं भवति–यथा घटो द्रव्यं पृथिवी द्रव्यमित्यादौ द्रव्यत्वावच्छिन्नेन सह घटत्वावच्छिन्नपृथिवीत्वावच्छिन्नत्वयोः सामानाधिकरण्यं

---

के आधीन जगत् की स्थिति और परमात्मा का प्रकृतिकत्व, ब्रह्म से व्याप्यत्व रूप से जगत् का ब्रह्मतादात्म्य का प्रतिपादन करने से जगत् मिथ्यात्व और परमात्मा के सत्यत्व की सिद्धि होती है। क्योंकि श्रुतियों का स्वार्थ के प्रतिपादन में प्रामाण्य है, यह श्रुति संगत है। इस प्रकार की अद्वैतियों की शंका संगत नहीं है, क्योंकि चेतनाचेतन वस्तु मात्र का ब्रह्म आत्मा होने से सम्पूर्ण चेतनाचेतनात्मक वस्तु ब्रह्मात्मक कहे जाते हैं। उनमें ब्रह्मात्मकत्व धर्म रहता है, पाणिनि महर्षि ने भाव (धर्म) अर्थ में त्व और तल् प्रत्यय का अनुशासन किया है। ''एष मे आत्मान्तर्यामी, एष ते आत्मान्तर्यामी, एष सर्वभूतान्तरात्मा, सर्वव्यापी-सर्वभूतान्तरात्मा'' 'पतिं विश्वस्यात्मेश्वरम्' श्रुतियों द्वारा चेतनाचेतनात्मक जगत् के अन्तर्यामी रूप ब्रह्म की सिद्धि होती है। इससे सिद्ध है कि जीव-प्रकृति और ईश्वर ये तीनों सत्य हैं, न कि केवल ब्रह्म ही सत्य है, तदतिरिक्त निखिल प्रपंच मिथ्या है।

''आत्मेति तूपगच्छन्ति ग्राह्यन्ति च'', ''ब्रह्म सूत्र द्वारा एवं अहमात्मा गुडाकेश सर्वभूताशयस्थितः, सर्वस्य चाहं हृदि सन्निविष्टः, यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः'' ''अहं भवो भवन्तश्च सर्वे नारायणात्मकाः, क्षेत्रज्ञं चापि मां विद्धि'' इन्द्रियाणि

**तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेववा" इत्यादिश्रुति-स्मृतिसूत्रेभ्यः । यो यदात्मकः स तदभेदव्यपदेशार्हः सुवर्णकुण्डलादिव-दितिव्याप्तेश्चातिप्रसिद्धत्वात् । तदायत्तस्थितिप्रवृत्तिकत्त्वेन, तत्तस्य ब्रह्मण आयत्ता अधीना स्थितिप्रवृत्तिश्च यस्य वस्तुमात्रस्य तत्तथा तस्य भावस्तत्त्वम् । 'तेन सन्मूला सोम्येमाः सर्वाः प्रजाः' 'सदायतनाः सत्प्रतिष्ठा', "एतस्य वाऽक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" "भीषास्माद्वातः पवते भीषोदेति सूर्यः, भीषादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" "किमनेन जगन्नाथ ! सर्वं त्वद्वशगं जगत् विश्वं चेदं यद्वशे विश्वयोने" "नमोऽस्तु ते शार्ङ्गचक्रासिपाणे।**

---

मुख्यमेव विशेषस्य सामान्याभिन्नत्वनियमात् । एवं प्रकृतेऽपि सार्वज्ञ्याद्य-नन्ताचिन्त्यापरिमितविशेषावच्छिन्नेनापरिच्छिन्नशक्तिविभूतिकेन तत्पदार्थेन परब्रह्मणा स्वात्मकचेतनाचेतनत्वावच्छिन्नयोस्तदात्मरूपयोस्त्वमादिपदार्थयो: सामानाधिकरण्यं मुख्यमेवेति व्याप्तिमभिनीय दर्शयति—**यो यदात्मक इति** । तदायत्तस्थितिप्रवृत्तिकत्वं व्याख्यातुकाम: तत्प्रतीकमुपादत्ते—**तदायत्तेति** । उक्तार्थं श्रुतिमुखेन प्रमाणयति–**सन्मूला इति** । हे सोम्य ! इमा: सर्वा: प्रजा: सन्मूला: सत् परब्रह्म मूलं यस्या: सा तथोक्ता: । सदायतना सत् परब्रह्म, आयतनमाधारं यस्या: सा । सत्प्रतिष्ठा = सति परब्रह्मणि प्रतिष्ठासम्बन्धो यस्या: सा । प्राणिनां भगवदायत्तस्थितिप्रवृत्तिकत्वं श्रुतिस्मृतिमुखेन दर्शयति—**एतस्येति** । एतस्य ब्रह्मण: प्रशासने आज्ञायां सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यर्थ: । यस्य भयाद्वायुभानु-मृत्युवह्नीन्द्रादय: स्वीयस्वीयकार्ये प्रवर्तन्त इति श्रुतिमुखेन

---

मनोबुद्धि: सत्वं तेजो बलं धृति: वासुदेवात्मकान्याहु: क्षेत्रं क्षेत्रज्ञमेव वा" इत्यादि स्मृतियों द्वारा जीव-परमात्मा–शरीरादि के भेद की सिद्धि अद्वैती के मत में स्वीकार्य अद्वैत की सिद्धि नहीं होती है । सुवर्ण कुण्डलादि के समान जो वस्तु जिस रूप में होती है, उसी रूप में अभेद रूप से उसका व्यपदेश (कथन) होता है । जैसे–सुवर्णत्व रूप से सुवर्ण और कुण्डल का अभेद है—अवस्था रूप से भेद है । अत: भेदाभेद सम्बन्ध कार्यकारण का है, न तो अत्यन्त भेद है, न तो अभेद, अपितु भेदाभेद सम्बन्ध कार्य कारण का है । यह सिद्धान्त सिद्ध हुआ ।

परमात्मा के आधीन चेतनाचेतनात्मक सम्पूर्ण जगत् की स्थिति और प्रवृत्ति होने से जगत् परमात्मा के आधीन स्थिति प्रवृत्तिक हुआ और जगत् में स्थिति प्रवृत्तिकत्व रहा, इससे भी परमात्मा के अन्तर्यामित्व की सिद्धि होती है । इस प्रकार 'तेन सन्मूला: सोम्येमा: सर्वा: प्रजा:, सदायतना: सत्प्रतिष्ठा:, एतस्य वाऽक्षरस्य प्रशासने, गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठत:, भीषास्माद् वात: पवते, भीषोदेति सूर्य:, भीषादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम:' इत्यादि श्रुतियों से परमात्मा के जगदाधारत्व नियन्तृत्वादि गुणों की अवस्थिति सिद्ध होती है ।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।।"

"ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् । जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरम्" ।। इत्यादिश्रुतिस्मृतिभ्यः । तथा च यद्यदायत्तस्थितिप्रवृत्तिकं वस्तु तत्तदभेदव्यपदेशार्हमिति व्याप्तिराम्नायते छान्दोगैः प्राणसम्वादे "न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसि", इत्याचक्षते प्राण इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवतीत्यादिना ।

किञ्च तदा व्याप्यत्वेन तत्तस्य ब्रह्मणो व्याप्यं यत्तद्व्याप्यं तस्य भावस्तु तत्त्वम् । तेन "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।। अन्तर्बहिश्च

---

निर्वक्ति—**भीषास्मादिति** ।

**ईश्वर इति** । उदाहृतश्रुतिनिर्णीतं सर्वस्य प्राणिनः परमेश्वराधीनत्वमाह-**ईश्वर इति** । ईश्वरः = सर्वचेतनाचेतननियमनशीलो भगवान्वासुदेवः सर्वभूतानां हृद्देशे हे अर्जुन ! तिष्ठति, किं कुर्वन्, सर्वभूतानि मायया निजशक्त्या, भ्रामयन् तत्तदनादिबीजभूतकर्मानुसारेण शुभाशुभकर्मसु प्रवर्तयन् । कथंभूतानि यन्त्रारूढानि प्रकृतिपरिणामदेहेन्द्रियरूपं यन्त्रमारूढान्यारोपितानि, यथा दारुमययन्त्रमारूढानि कृत्रिमाणि पक्षिमृगादिभूतानि सूत्रबद्धानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः । महाभारतवचनेनाप्युक्तार्थं दृढयति-**ससुरासुरेति** । श्रुत्यनुगृहीतमनुमानं दर्शयति—**यद्यदायत्तमिति** । यत् = इन्द्रियवर्गम् । यदायत्तस्थितिप्रवृत्तिकम् = प्राणायत्तस्थितिप्रवृत्तिकम् । तत् = इन्द्रियवर्गम् । तदभेदव्यपदेशार्हम् = प्राणाभेदव्यपदेशार्हम् । उक्तव्याप्तौ मानमाह-**छान्दोगैरिति** ।

ब्रह्मव्याप्यत्वेनापि वस्तुजातस्य तत्तादात्म्यमित्याह—**किञ्चेति** । तद्व्याप्यत्वेनेत्यस्यार्थं स्वयं विवृणोति-**तत्तस्येति** । तद्व्याप्यत्वेनापि तत्तादात्म्योपपादक-

---

'किमनेन जगन्नाथ ! सर्वं त्वद्वशंग जगत् । विश्वं चेदं यद्वशे विश्वयोनेः नमोऽस्तु ते शार्ङ्गचक्रासिपाणे । ईश्वरः भूतानां हृद्देशेऽर्जुन! तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।' ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् । जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरम् ।" इन श्रुति स्मृतियों द्वारा परमात्मा के आधीन स्थिति-प्रवृत्तिशाली सम्पूर्णजगत् का परमात्मा के साथ अभेदत्व प्रतिपादित है । यही अर्थ वेदशास्त्र के मर्मज्ञ प्राणों (इन्द्रियों) इन्द्रियों के विवेचन में—'न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसि, ऐसा स्वीकार करते हुए प्राण को ही आत्मा के रूप में स्वीकार करते हैं, यतः प्राण से सब भूतों की उत्पत्ति होती है, इत्यादि विवेचन श्रुतियों में उपलब्ध है ।

ब्रह्मणः व्याप्यम् = ब्रह्मव्याप्यं (जगत्) तस्य भावः (धर्मः) ब्रह्मव्याप्यत्वं जगन्निष्ठम् । इस व्युत्पत्ति के अनुसार जगद् ब्रह्मव्याप्य है ऐसी प्रतीति सहज है । जगत् के ब्रह्मव्याप्यत्व में श्रुतिप्रमाण है । 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।

**तत् सर्वं व्याप्य नारायणः स्थितः । द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः । म. न. ११।६'' इत्यादिशास्त्रात् । ''यो यद्व्याप्यः स तद्रूपः'' इत्यत्र ''योऽयं तवागतो देव! समीपं देवतागणः । स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान्'' । पुराणं सर्वं समाप्नोषि ततोऽसि सर्वः, सर्वगतत्वादनन्तस्य स एवाहमवस्थितः'' इत्याद्याः स्मृतयः प्रमाणत्वेन बोध्याः । एतदुक्तं भवति–सत्ता तावद् द्विविधा–स्वतन्त्रपरतन्त्रभेदात् । तत्र स्वतन्त्रसत्ता नाम–आत्माश्रितत्वे सति स्वायत्तस्थितिप्रवृत्तिकता । सा परब्रह्मविश्वात्मनिष्ठा ''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'' ''एतस्य वाऽक्षरस्य प्रशासने गार्गि । सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'' भीषास्माद् वातः पवते, आत्मा हि**

---

वाक्यजातमुदाहरति—**यच्चेति** । यद् उक्तं भवति तदेतद् भवति, सत्तां विभजते—**सत्तेति** । तत्र तयोर्मध्ये सा = स्वतन्त्रसत्ता । तस्या आधारं दर्शयति– **परब्रह्मेति** । उक्तार्थं श्रुतिमुखेन प्रमाणयति—**सदेवेति** । अस्यार्थः प्रागुपदर्शितः । **एतस्येति** । वैशब्दोऽवधारणे । एतस्याक्षरस्य ब्रह्मणः प्रशासने = आज्ञायां सूर्यचन्द्रमसौ विधृतौ = विशेषेण धृतौ तिष्ठतः प्रकृष्टं शासनं क्वचिदप्यप्रतिहतत्वमेव शासनस्य

---

अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ।। द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः । म. न. ११।६। इन शास्त्रों द्वारा भगवद्व्याप्ति इस जगत् में सिद्ध है । जो जिससे व्याप्य होता है उसको तद्रूप माना जाता है, जैसे घटादि मृद् से व्याप्य है इसलिये घटादि मृत्स्वरूप है । यह स्वीकार किया जाता है । जगत् ब्रह्म से व्याप्य है इसलिए वह भी ब्रह्म स्वरूप है । हे देवों आपके समीप सभी देवगण हैं, सत्त्व ही जगत् का स्रष्टा है । इसलिए सभी चेतनाचेतनात्मक जगत् के भीतर आप वर्तमान है ।

'पुराणं सर्वं समाप्नोषि ततोऽसि सर्वः, सर्वगतत्वादनन्तस्य स एवाहमवस्थितः' ये स्मृतियां भी परमात्मा के सर्वान्तर्यामी होने के कारण सम्पूर्ण जगत् की ब्रह्मात्मकता का प्रतिपादन करती हैं । अभेद प्रतिपादक श्रुतियां भी जगत् के परमात्मा की अधीनता का प्रतिपादन करती हुई–स्वातन्त्र्य का निषेध करती हैं, त्रिविध भेद का निषेध नहीं करती हैं ।

सत्ता स्वतन्त्र-परतन्त्र भेद से दो प्रकार की है ।

**स्वतन्त्र सत्ता**–आत्मा के आश्रित होती हुई, स्वायत्तस्थिति-प्रवृत्तिजनिका स्वतन्त्रसत्ता होती है । यह सत्ता परब्रह्म विश्वात्मा में रहती है । ''सदेव सोम्येदमग्र आसीत्'' ''एकमेवाद्वितीयम्'' ''एतस्य वाऽक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'' भीषास्माद् वातः पवते, आत्मा हि परमस्वतन्त्रोऽधिगुणः एष

**परमस्वतन्त्रोऽधिगुण: एष सर्वेश्वर: सर्वाधिपति:"। "स कारणं कारणाधिपाधिप:, न तस्य कश्चिज्जनिता न चाधिप:"। श्वे. ६।१। इत्यादिश्रुतिभ्य: ।**

**"सर्वस्य चाहं हृदि सन्निविष्टो मत्त: स्मृतिर्ज्ञानमपोहनं च" गी. १५।१५। शास्ता विष्णुरशेषस्येत्यादिस्मृतिभ्यश्च । एवं स्वतन्त्रसत्ताश्रयो निरस्तसाम्यातिशयो विश्वात्मा परब्रह्म भगवान् श्रीपुरुषोतम इति सिद्धम् । परतन्त्रसत्त्वं च परायत्तस्थितिप्रवृत्तिकत्वम् । "तच्च चेतनाचेतनात्मकनियम्यवर्गवृत्ति यदासीत्तदधीनमासीत्" "जीवोऽल्पशक्तिरस्वतन्त्रोऽवर:" इत्यादिश्रुतिभ्य: ।**

---

प्रकर्ष: । सर्वविषयकशासनाधीनद्यावापृथिव्यादि-धारणवत्त्वमर्थस्तेन जीवप्रधानयोर्व्यावृत्ति: ।

**सर्वस्येति** । सर्वस्य ब्रह्मादिप्राणिमात्रस्य हृदि सम्यगन्तर्यामिरूपेण निविष्ट:, अतो मत्त एव हेतो: सर्वस्य पूर्वानुभूतार्थविषया स्मृति-र्भवति । ज्ञानं विषयेन्द्रियसंयोगजो यथावस्तुविषयानुभव: । अपोहनञ्च स्मृतिज्ञानयो: प्रमोषो मत्त एव भवतीत्यर्थ: । स्वतन्त्रसत्त्वं निरूप्य परतन्त्रसत्त्वं निरूपयति—परतन्त्रसत्त्वञ्चेति । तदाश्रयमाह-**सत्त्वञ्चेति** । परतन्त्रस्त्वञ्चेत्यर्थ: । उक्तार्थं श्रुतिमुखेन द्रढयति—**यदासीदिति** । परतन्त्रसवं विभजते—**परतन्त्रसत्त्वमिति** । तत्र = तयोर्मध्ये । तच्च कौटस्थ्यञ्च । तदाश्रय: = कूटस्थसत्ताश्रय: ।

---

सर्वेश्वर: सर्वाधिपति:, न तस्य कश्चिज्जनिता न चाधिप: श्वे. ६।१। इत्यादि श्रुतियों द्वारा स्वतन्त्रसत्ताविशिष्ट परमात्मा की सिद्धि होती है ।

एवं "सर्वस्य चाहं हृदि सन्निविष्ट: मत्त: स्मृतिर्ज्ञानमपोहनं च॥" गी. १५।१५।

अर्थात् मैं सभी प्राणियों के हृदय में निवास करता हूँ, मैं ही जीवों के कर्मानुसार उनके स्मरण और ज्ञान का आच्छादन कर देता हूँ, जिससे वे मेरा साक्षात्कार नहीं कर पाते हैं ।

"शास्ता विष्णुरशेषस्य" इन स्मृतियों द्वारा स्वतन्त्रसत्ताश्रय विष्णु हैं । निरस्त हो गया है साम्य-अतिशय जिस विष्णु से वे अपरिच्छिन्न होने के कारण निरस्त साम्यातिशय कहे जाते हैं । इस प्रकार विश्वात्मा परब्रह्म भगवान् श्रीपुरुषोत्तम की सिद्धि हुई ।

**परतन्त्र सत्ता—**पर के आधीन जिसकी स्थिति प्रवृत्ति होती है, वह परतन्त्रसत्तावाला है, उसे परतन्त्रसत्ता कहते हैं । वह परतन्त्र सत्ता चेतनाचेतनात्मक नियम्य वर्ग में रहती है ।

"यदासीत्तदधीनमासीत्" "जीवोऽल्पशक्तिरस्वतन्त्रोऽवर:" इत्यादि श्रुतियों द्वारा जीव के परमात्मपारतन्त्र्य का ज्ञान होता है। एवं 'मत्त: सर्वं प्रवर्तते' "सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे" 'अस्वातन्त्र्यात्तदन्येषामसत्वं विद्धि भारत' ! इन स्मृतियों द्वारा भी जीव के परतन्त्रसत्त्व का ज्ञान होता है ।

**"मत्तः सर्वं प्रवर्तते सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णो न चाऽपरे" "अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारत !"** इत्यादिस्मृतिभ्यः । परतन्त्रसत्त्वं **द्विविधं कूटस्थत्वं विकारशीलश्चेति । तत्र कौटस्थ्यं** नाम जन्मादिविकारशून्यत्वे **सति नित्यत्वम् । तच्च जीवात्मवर्गाश्रितम् ।** तदाश्रयो जीवः प्रत्यगक्षर-**पुरुषक्षेत्रज्ञादिशब्दाभिधेयः । "अजो ह्येको जुषमाणोऽनुशेते** जहात्येनां **भुक्तभोगामजोऽन्यः ।" "न जायते म्रियते वा विपश्चित् ।** अजो नित्यः **शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।"** इत्यादिवाक्येभ्यः । **द्वितीयं च विक्रियायुक्तत्वे सत्यनाद्यनन्तत्वम् । तत्तु प्रकृतिवर्गाश्रितम् ।** तदाश्रयञ्च **कार्यकारणात्मकं प्रधानप्रकृत्यादिशब्दवाच्यम् ।**

---

जीवस्य नित्यत्वबोधिकां श्रुति-मुदाहरति—**अज इति** । अयं पुरुषो न जायते नोत्पद्यतेऽतोऽजो न म्रियतेऽतो नित्यः, इति द्वाभ्यां पदाभ्यां जन्ममरणलक्षणे विक्रिये निरस्ते । अस्तित्वलक्षणविकारवारणायाह–**शाश्वत इति** । सनातनः प्राकृतवत्सद-सत्परिणामशून्यः । **वृद्धिलक्षणविक्रियावारणाय पुराण इति** । पुरापि नव एव यो हि सावयवः सोऽवयवोपचयाद्वर्द्धते परिशिष्टौ परिणामापक्षयौ जन्ममरणास्तित्ववृद्ध्यभावादेव निरस्तौ, एवं षड्विकारशून्य आत्मा = शरीरे हन्यमाने सति न हन्यते, शरीरमेव हननक्रियायाः कर्मभूतमित्यर्थः । द्वितीयम् = विकारशीलम् । तस्या आश्रयमाह—**तत्त्विति** । विकारशीलमित्यर्थः । तदाश्रयञ्च = विकारशीलसत्ताश्रयञ्च ।

---

कूटस्थ-विकारशीलभेद से सत्ता दो प्रकार की होती है ।

कूटस्थ सत्ता–जन्मादि विकार से जो रहित हो, तथा नित्य हो उसे कूटस्थ सत्ता कहते हैं । यह जीवादि वर्ग में रहती है उसका आश्रय जीव, प्रत्यक्, अक्षर, पुरुष, क्षेत्रज्ञादि शब्दों से कहा जाता है ।

"अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । न जायते म्रियते वा विपश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।" इन श्रुतियों द्वारा जीव का नित्यत्व सिद्ध होता है ।

यह पुरुष उत्पन्न नहीं है, अतः वह अज है । मरता नहीं है, अतः वह नित्य है ।

जायते एवं म्रियते इन दोनों पदों के द्वारा जन्म-मरण रूप विक्रिया का पुरुष में अभाव सिद्ध हुआ । आत्मा के अस्तित्वलक्षणविकार का वारण करने के लिए "शाश्वत" ऐसा कहा गया है । "सनातन" शब्द से प्राकृत के समान जीव की भी सदसत्परिणामशून्यता सिद्ध हुई । वृद्धिलक्षण विक्रिया के वारण हेतु "पुराण" कहा गया है ।

**"गौरनाद्यन्तवती जनित्री भूतभाविनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः"** इत्यादिश्रुतेः । त्रिगुणं तज्जगद्योनिरादिप्रभवाप्ययम् । **अचेतना परार्था च नित्या सततविक्रिया ।** तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । **आविर्भावतिरोभावजन्मनाशविकल्पवत्"** इत्यादिवैष्णववचनाच्च । तथा च **स्वतन्त्रसत्त्वविषयकाभेदवाक्यप्रवृत्तिस्तस्यैक्यात् । तेनैव तेषां नैराकाङ्क्ष्यम् । तथैव भेदनिषेधपराणां चापि चेतनाचेतनवस्तुवृत्तिस्वतन्त्रसत्त्वनिषेधपरत्वेन**

---

प्रधानस्य नित्यत्वबोधिकां श्रुतिमुदाहरति—**गौरनाद्यन्तवतीति** । गौः = प्रकृतिः आद्यन्तवती न । **त्रिगुणमिति** । त्रयो गुणा यस्य तत् । त्रिगुणं प्रधानम् । तत् जगत्कारणम् । अनादि = आद्यन्तरहितम् । अचेतना = चेतनरहिता जडाः पदार्थाः = स्वार्थरहिताः । नित्याः = प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम् । सततविक्रिया = अनवरतपरिणामिनी । उक्तार्थं श्रीपराशरमहर्षिवचसापि द्रढयति—**तदेतदिति** । सर्वात्मत्वं स्वतन्त्रसत्त्वञ्च पुरस्कृत्याभेदवाक्यजातस्य प्रवृत्तिः स्वतन्त्र-श्रीपुरुषोत्तमस्यैकत्वादित्याह— **तथा चेति** । तस्य = परब्रह्मणः । तेनैव = स्वतन्त्रसत्त्वविषय-कत्वेन । तेषाम् = अभेदवाक्यानाम् । चेतनाचेतनयोः स्वतन्त्रसत्त्वं निषेधन्ति भेदनिषेधक-वाक्यानीत्याह– **भेदनिषेधेति** । एवं परतन्त्रसत्त्वमादाय भेदवचनानां प्रवृत्तिरित्याह– **भेदवाक्यानामिति** । फलितार्थं दर्शयति–**एवञ्चेति** । यद्यद्रूपेण जगतो भिन्नाभिन्नत्वं परब्रह्मणस्तत्तद्रूपं

---

यह आत्मा पहले भी नया था, जो सावयव है उसमें वृद्धि और ह्रास होता है, आत्मा निरवयव है, उसमें वृद्धि और ह्रास की प्रसक्ति नहीं है । यह आत्मा षड्विधविकार शून्य है । शरीर के हन्यमान होने पर भी, आत्मा अहन्यमान है, क्योंकि वह नित्य है । विकार का आश्रय प्रकृति है । उस प्रकृति का आदि व अन्त नहीं है, वह भी नित्य है । प्रकृति सत्त्व-रजः-तमोरूपा जगत् का कारण है, अचेतन है, स्वार्थ रहित है । वह प्रकृति प्रागभाव व ध्वंस का प्रतियोगी न होने से नित्य है । निरन्तर परिणामिनी है । प्रकृति के नित्यत्व और सतत परिणाम को श्रीपराशर महर्षि के वचन द्वारा प्रमाणित करते हैं—'तदेतदक्षयमित्यादि' वह प्रकृति तथा प्रकृति परिणाम निखिल जगत् नित्य अक्षय हैं उसका केवल आविर्भाव-तिरोभाव होता है, उत्पत्ति विनाश नहीं होता है ।

स्वतन्त्रसत्त्व के आश्रय श्रीपुरुषोत्तम के ऐक्य को ही अभेद प्रतिपादक श्रुतियां प्रतिपादन करती हैं ।

अभेद प्रतिपादक श्रुतियां चेतनाचेतन की स्वतन्त्रसत्ता के प्रतिपादन में निराकांक्ष हैं, किन्तु श्री पुरुषोत्तम के ही स्वतन्त्र सत्ता के प्रतिपादन करने में साकांक्ष हैं । भेद प्रतिपादक वाक्यों की प्रवृत्ति परतन्त्रसत्त्व के प्रतिपादन में ही है ।

**स्वार्थ एव प्रामाण्यात् । भेदवाक्यानां तु परतन्त्रसत्त्वविषयत्वेनैव स्वार्थविधायकत्वात्सर्वं समञ्जसम् । एवञ्च स्वतन्त्रसत्वं परतन्त्रसत्वाभावं चाश्रित्य तत्त्वमस्यादिवाक्यानि भेदाऽभेदवाक्यानां परस्परविरुद्धानामविरोधेनान्वेतुकामानि जगद्भिन्नाभिन्नं ब्रह्म प्रतिपादयन्ति । तथा च विश्वात्मा पुरुषोत्तमः स्वाश्रितात्मसत्तया विश्वस्माद् भिन्नः । तथैवात्मीयचेतनाऽचेतननियम्यवर्गवृत्तिपरतन्त्रसत्वाभावरूपेण विश्वविलक्षणत्वाऽपरपर्यायेण सार्वज्ञ्यादिवद्भावरूपेणात्मासाधारणेन धर्मेणाऽस्थूलादिवाक्यप्रतिपाद्येन विश्वस्माद् भिन्न इति**

---

प्रदर्शयन् राद्धान्तमाह—**तथा चेति** । उभयविधवाक्यानि "सदेव सोम्येदमग्र आसीत्", "तत्त्वमसि", "सर्वं खल्विदं ब्रह्म", "अहमस्मि भगवो दैवतः" इत्याद्यभेदबोधकवाक्यानि । "द्वा सुपर्णा सयुजा सखाया । भोक्ता भोग्यं प्रेरितारं च मत्वा । प्रधानक्षेत्रज्ञपतिर्गुणेशः । परास्य शक्तिर्विविधैव श्रूयते" इत्यादीनि भेदबोधकवाक्यानि । भेदवाक्यानामभेदवाक्यानाञ्चाविरोधेन समन्वयप्रकारप्रदर्शनाय चेतनाचेतनयोर्ब्रह्मणा स्वाभाविकभेदाभेदसम्बन्धस्यैव । निर्दोषत्वख्यापनाय घटकश्रुतयः सन्ति ता उदाह्रियन्ते । **'एकः सन्निति'** । अत्रैकत्वेनाभेदः प्रदर्शितः । बहुत्वेन च भेदोऽभिहितः । एवमग्रेऽपि । एताभिश्च भेदाभेदशब्दस्य

---

इस प्रकार स्वतन्त्रसत्त्व, परतन्त्रसत्व के अभाव का आश्रयण करके, तत्त्वमस्यादि वाक्य भेदाभेद प्रतिपादक वाक्य जो परस्पर विरुद्ध हैं । उनको अविरुद्धरूप से अन्वय कराने की इच्छा से भिन्नाभिन्न ब्रह्म का प्रतिपादन करते हैं ।

अतः विश्वात्मा पुरुषोत्तम स्वाश्रित आत्मसत्ता द्वारा विश्व की अपेक्षा अभिन्न है । अर्थात् परमात्माधीन सत्ताश्रय होने के कारण परमात्मा के साथ विश्व का अभेद रूप व्यवहार होता है ।

आत्मीय चेतन-अचेतन जो परमात्मा द्वारा नियम्य है, इनमें रहनेवाली परतन्त्र सत्ता के अभाववत्त्व रूप विश्व से भिन्न रूप सार्वज्ञ रूप से अस्थूलत्वादि धर्म विशिष्ट परमात्मा विश्व से भिन्न है–तथापि स्वभावतः विश्व से भिन्नाभिन्न श्रीपुरुषोत्तम परब्रह्मस्वरूप भगवान् रमाकान्न ही सर्ववेदान्तों द्वारा प्रतिपाद्य हैं । इस प्रकार भेदाभेद सिद्धान्त की सिद्धि होती है ।

अभेद प्रतिपादक वाक्य—"सदेव सोम्येदमग्रआसीत्, तत्त्वमसि, सर्वं खल्विदं ब्रह्म, अहमस्मि भगवो देवते" ये अभेद प्रतिपादक वाक्य है ।

"द्वा सुपर्णा सयुजा सखाया, भोक्ता भोग्यं प्रेरितारं च मत्वा । प्रधान क्षेत्रज्ञपतिर्गुणेशः, परास्य शक्तिर्विविधैव श्रूयते" ये भेदबोधक वाक्य हैं । इन भेद प्रतिपादक वाक्यों का एवं अभेद प्रतिपादक वाक्यों का अविरोध रूप से समन्वय प्रदर्शन के लिए चेतन

**स्वभावतो विश्वभिन्नाभिन्नः श्रीपुरुषोत्तमः परब्रह्मभूतो भगवान् रमाकान्तः सर्ववेदान्तार्थ इति सिद्धान्तः ।** उभयविधवाक्यानि तु पूर्वमेवोदाहृतानि । **उक्तार्थघटकवाक्यानि कानिचिदुदाह्रियन्ते ।** एकः सन् बहुधा विचचार, एको **देवो बहुधा सन्निविष्टः ।** त्वमेकोऽसि बहुधा बहून् प्रविष्टः । इत्याद्याः श्रुतयः । **एकत्वे सति नानात्वं नानात्वे सति चैकता, अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हतीति भगवान्मनुः ।**

**"ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । एकत्वेन पृथक्त्वेन बहुधा विश्वतो-मुखम्" इति भगवद्वाक्यम् ।गी. ९।१५। ॐ नमो वासुदेवाय तस्मै भगवते सदा।।**

---

व्युत्पत्तिरपि दर्शिता, तथा च भेदे सत्येवाभेदो भेदाभेदः । निरुक्तभेदाभेदव्युत्पत्तौ महर्षिमनुवाक्यं प्रमाणयति—**एकत्वे सतीति ।**

श्रीमुखवचनेनाप्युक्तार्थं दृढयति—**ज्ञानयज्ञेनेति** । अन्येऽपि महात्मानो मामुपासते । किं कुर्वन्तो ज्ञानयज्ञेन चकारात्पूर्वोक्तैः कीर्तनादिभिश्च यजन्तः पूजयन्तः । ज्ञानप्रकारमाह—**एकत्वेनेति । पृथक्त्वेनेति** । सर्वाभेदेन सर्वभेदेन चेत्यर्थः तदेवोपपादयति–**बहुधेति ।**

---

अचेतन का ब्रह्म के साथ स्वाभाविक भेदाभेद सम्बन्ध की निर्दोषता का ज्ञान कराने के लिए घटक श्रुतियां हैं । उन श्रुतियों को उदाहरणरूप प्रस्तुत किया जा रहा है—'एकः सन्.........बहुधासन्निविष्टः ।' इत्यादि ।

यहां पर एकत्वरूप से अभेद, और बहुत्वरूप से भेद कहा गया है ।

भेद के रहने पर जो अभेद है, वही भेदाभेद है । इस प्रकार भेदाभेद की व्युत्पत्ति में मनु के वाक्य को प्रमाण रूप में प्रस्तुत करते हैं—'एकत्वे सतीति ।'

एकत्व के रहने पर ही नानात्व होता है और नानात्व के रहने पर ही एकत्व होता है । ब्रह्म का रूप अचिन्त्य है, उस परमात्मा को कौन जान सकता है, कोई नहीं जान सकता । यह भगवान् मनु का वाक्य है ।

अन्य महात्मा भी मेरी उपासना करते हैं । कैसे मेरी उपासना करते हैं ? ज्ञान यज्ञ द्वारा । चकार से कीर्तनादि द्वारा मेरी उपासना करते हैं ।

किस प्रकार के ज्ञान से मेरी उपासना करते हैं ? ऐसी जिज्ञासा होने पर समाधान—'एकत्वेनेत्यादि' है ।

कुछ लोग सर्वाभेद रूप से मेरी उपासना करते हैं । एवं कुछ लोग सर्वतः भिन्न रूप से मेरी उपासना करते हैं ।

इसी भेदाभेद को 'विश्वतोमुखम्' गी. ९।१५। भगवान् के इस वाक्य द्वारा

**व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः ।।वि.पु.१अं. १९।७८।**
**'नित्यानित्यप्रपञ्चात्मन् निष्प्रपञ्चामलाश्रित।**
**एकानेकनमस्तुभ्यं वासुदेवादिकारण ।**
**यः स्थूलसूक्ष्मः प्रकटप्रकाशो यः सर्वभूतो न च सर्वभूतः । विश्वं यतश्चैतद् विश्वहेतो नमोस्तु तस्मै पुरुषोत्तमाय।' वि. पु. अं १ अ. २०। श्लो. १२।१३। इति विष्णुपुराणे प्रह्लादवाक्यानि । तत्रैव ध्रुवस्तुतौ**

---

विश्वतो मुखं विश्वान्तर्यामिणमेकत्वेन बहुधा बहुप्रकारं व्यष्ट्यन्तर्यामिणं बहुत्वेन तद्वैलक्षण्येन चेत्यर्थः ।

श्रीपराशरोक्तवाक्यानां भेदाभेद-प्रतिपादकानामाह—**ओं नम इति** । ओमित्यस्यार्थः पूर्वाचार्योक्तदिशाऽवसेयः । तस्मै = लोक-वेदप्रसिद्धाय । भगवते = षड्गुणसम्पन्नाय । वासुदेवाय नमः । व्यतिरिक्तं न यस्यास्ति सर्वस्य तदात्मकत्वात्, व्यतिरिक्तोऽखिलस्य यः, कार्यभूताज्जगतो व्यतिरिक्तः । एतेन चिदचितो ब्रह्मणा स्वाभाविकभेदाभेदः प्रदर्शितः ।

**नित्यानित्येति** । अनित्यं घटादि तदपेक्षया नित्यं गगनादि, निष्प्रपञ्चः, = प्रपञ्चान्तर्गतः, प्रपञ्चोत्तीर्ण इत्यर्थः । अमलैर्भक्तैराश्रित-स्तस्य सम्बुद्धिः । **एकानेकेति** । कारणरूपेणैककार्यरूपेणानेक हे वासुदेव ! हे आदिकारण ! यः स्थूलसूक्ष्मेति । यो भगवान् विश्वरूपत्वेन स्थूलः सर्वेषां भूतानामन्तर्यामिरूपतया सूक्ष्मः । प्रकटः । निष्किञ्चनभक्तानां प्रकटस्वरूपः प्रकाशः स्वयंप्रकाशस्वरूपो यः सर्वभूतः । सर्वभूताभिन्नः,

---

प्रतिपादन करते हैं । विश्वतोमुख–अर्थात् सर्वान्तर्यामी भगवान् की ही अनेक प्रकार से उपासना करते हैं । इस व्यष्टि रूप जगत् में अन्तर्यामीरूप से विद्यमान भगवान् की बहुत्वरूप अर्थात् जगत् विलक्षणरूप से उपासना करते हैं ।

भेदाभेद प्रतिपादक विष्णुपुराण के वचनों को प्रमाण रूप में उद्धृत किये गये हैं ।

"ॐ नमो वासुदेवाय तस्मै भगवते सदा। व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः ।। वि. पु. अ. १९।७८।

यहां 'ओं पदार्थः' पूर्वाचार्यों द्वारा स्वीकार किया गया है, ऐसा ही समझना चाहिये । तस्मै–लोक और वेद में प्रसिद्ध षड्गुण सम्पन्न भगवान् वासुदेव को नमस्कार करता हूँ । भगवान् वासुदेव से भिन्न कुछ भी नहीं है । सम्पूर्ण जगत् वासुदेवस्वरूप है । वासुदेव चिदचिदात्मक जगत् से विलक्षण हैं । इससे सिद्ध होता है कि चिदचिदात्मकजगत् का ब्रह्म के साथ स्वाभाविक भेदाभेद है ।

'नित्यानित्यप्रपंचात्मन् निष्प्रपंचाऽमूलाश्रित!, एकानेकनमस्तुभ्य वासुदेवादिकारण यः स्थूलसूक्ष्मः प्रकटप्रकाशो य सर्वभूतो न च सर्वभूतः । विश्वं यतश्चैतद्विश्व हेतो

**पृथग्भूतैकभूताय भूतभूतात्मने नम इति, हरिवंशे घण्टाकर्णः श्रीकृष्णं प्रति— "केचिद् बहुत्वेन वदन्ति देवमेकात्मना केचिदिमं पुरातनम्। वेदान्तसंस्थापितसत्त्व-युक्तं द्रष्टुं तमीशं वयमुद्यतास्म:।। अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनि-विष्टचित्ताः। आहुर्यमात्मानमजं पुराणं द्रष्टुं तमीशं वयमुद्यतास्म: ।।" इत्याद्याः स्मृतयश्चिदचिद्भिन्नाभिन्नब्रह्माभिधायिका अनुसन्धेयाः, अलं विस्तरेण । नापि नानात्वनिषेधकवाक्यविरोधः । तस्य कारणे नानात्वनिषेधपरत्वात् । इह जगत्कारणे ब्रह्मणि नानात्वं नास्ति । कारणस्य सर्वशास्त्रेएकत्वप्रतिपादनात् । नानात्वदर्शनं तु तिष्ठतु नानेव दर्शनस्यैतावत् फलम्मृत्योः स मृत्युमाप्नोति य**

---

तद्व्याप्यत्वात्तदात्मकत्वाच्च । न च सर्वभूतः सर्वभूताभिन्नः यतो ब्रह्मणो विश्वं जायते । अविश्वहेतुः सृज्यकर्मसापेक्षत्वात्स्वतो विषमसृष्टेरहेतुरित्यर्थः । मृत्योः 'स मृत्युमाप्नोति य इह नानैव पश्यतीति' श्रुतेर्विरोधं परिहरन् तदर्थं विवृणोति—**नापीति** । तस्य = वाक्यस्य । कारणनानात्वदर्शनस्य फलं निर्वक्ति—**नानात्वदर्शनात्त्विति** । न

---

नमोऽस्तु तस्मै पुरुषोत्तमाय । वि. पु. अं. १। अ. २०। श्लोक १२-१२ विष्णुपुराण में ये प्रह्लाद के वाक्य हैं ।

अनित्य घटादि है, तथा नित्य गगनादि हैं । ये नित्यानित्यप्रपंच जिन अमलभक्तों द्वारा त्यक्त हो गये हैं, ऐसे भक्तों के आश्रय भगवान् हैं । हे भगवन् ! हे वासुदेव ! आप कारणरूप से एक हो एवं कार्यरूप से अनेक हो, आदिकारण हो, आप विश्वरूप से स्थूल हो, सब भूतों के अन्तर्यामीरूप से सूक्ष्म हो, अपने पर आश्रित भक्तों के लिए आप प्रकट हो, अर्थात् प्रकाश स्वरूप हो । आप सब भूतों से अभिन्न हैं, क्योंकि आप सब भूतों में व्याप्त हैं, और सब भूतों के आत्मा हैं । प्रह्लाद के प्रार्थनात्मक भावों से सिद्ध होता है कि चराचर जगत् का वासुदेव के साथ भेद और अभेद सम्बन्ध है ।

विष्णुपुराण में भी ध्रुवस्तुति में "पृथक्भूतैकभूताय भूतभूतात्मने नमः" इति । हरिवंश पुराण में–घण्टाकर्ण ने श्रीकृष्ण के प्रति कहा–"केचिद् बहुत्वेन वदन्ति देवमेकात्मना केचिदिमं पुरातनम् । वेदान्तसंस्थापित सत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यता स्म: ।।' इत्यादि । कुछ लोग भगवान् वासुदेव को बहुत्वरूप से जानते हैं, कुछ एकत्वरूप से पुरातन नित्य मानते हैं। जिस वासुदेव का सत्त्व वेदान्तों द्वारा संस्थापित है, उस ईश्वर के साक्षात्कार हेतु मैं उद्यत हूं ।

इसी प्रकार ध्रुव ने भी प्रार्थना की–चेतनाचेतन जगत् से परमात्मा विलक्षण है, अभिन्न भी है, ऐसे भूतों से भिन्नाभिन्न परमात्मा को नमस्कार करता हूँ ।

ये स्मृतियां भी चिदचिद् भिन्नाभिन्नब्रह्म का अभिधान करती हैं । इन श्रुति-

**इह नानेव पश्यतीति मृत्योरनन्तरं मृत्युमाप्नोति पुनः पुनर्जन्ममरणादि-रूपसंसारभाग्भवतीत्यर्थः । अतो नहि जगत्स्वरूपप्रतिषेधकमिदं वाक्यम् । विकल्पासहत्वात्-तथाहि किमिदं वाक्यं ब्रह्मेतरं वस्तुप्राप्तं निषेधति ? अप्राप्तं वा ? आद्ये सत्यम् ? असत्यं वा ?**

**नाद्यः । सत्यस्य निषेधायोगात् । अन्यथा ब्रह्मणोऽपि निषेधापत्तेः । न द्वितीयः । असत्यस्य प्राप्तेरेवासम्भवात् । न चाध्यस्तं मिथ्याभूतं प्रतिषेधयतीति**

---

ह्यनेन वाक्येन विश्वं निषिध्यत इत्याह—**अतो न हीति** । अत उक्तार्थाभ्युपगमात् । विकल्पं दर्शयति—**तथा हीति** । प्राप्तस्याप्राप्तस्य वा निषेधकमिति विकल्पार्थः । ब्रह्मेतरं वस्तु सत्यमसत्यम्वेति । विकल्पयति-**आद्य इति** ।

आद्यपक्षं निरस्यति—**नाद्य इति** । विपक्षे बाधकतर्कमुपन्यस्यति—**अन्यथेति** । सत्यस्यापि निषेध्याभ्युपगम इति तदर्थः । द्वितीयकल्पं निरस्यति-**न द्वितीय इति** । नानैव पश्यतीति वाक्यमध्यस्तं विश्वं प्रतिषेधतीत्याशङ्क्य परिहरति, **न चेति** । उक्तार्थं दृष्टान्तेन परबुद्ध्यारूढं करोति-**यथेति** । तदभावात् = प्रतीत्यभावात् । विपक्षे-बाधकतर्कमुपन्यस्यति-**अन्यथेति** । बाह्यमतप्रवेशापत्तेरिति । वेदबाह्या नास्तिकास्तेषां

---

स्मृति के प्रबल प्रमाणों द्वारा भेदाभेद सिद्धान्त की सिद्धि होती है ।

भेदाभेद सिद्धान्त में नानात्व निषेधक वाक्यों का विरोध भी नहीं होगा। भेदनिषेध वाक्य कारण के नानात्व का निषेध करते हैं, न कि कार्य के नानात्व का। इस जगत्कारण ब्रह्म में नानात्व नहीं है । क्योंकि जगत्कारण ब्रह्म का एकत्व सभी शास्त्रों में प्रतिपादित है ।

नानात्वदर्शन का फल-'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इति ।' जो व्यक्ति परमात्मा से भिन्न चेतनाचेतन जगत् को देखता है, वह कर्मफल भोग कर पुनः संसाररूप मृत्यु (दुःख) को प्राप्त करता है । भाव यह है कि पुनः पुनः जन्म-मरणादिरूप संसार का पात्र होता है ।

"तत्त्वमस्या"दि अभेद प्रतिपादकवाक्य जगत् स्वरूप के प्रतिषेधक वाक्य नहीं हैं—क्योंकि ये विकल्प को सहन नहीं कर सकते हैं—ये अभेद प्रतिपादक वाक्य क्या ये ब्रह्मेतर वस्तु प्राप्ति का निषेध करते हैं ? अप्राप्त वस्तु का निषेध करते हैं ?

प्रथमपक्ष असंगत है, क्योंकि सत्य का निषेध नहीं होता है । यदि सत्य का निषेध स्वीकार करेंगे तो सत् ब्रह्म के निषेध की आपत्ति होगी ।

द्वितीयपक्ष भी असंगत है, क्योंकि असत्य वस्तु की प्राप्ति ही नहीं होगी । इसलिए निषेध भी नहीं होगा । प्राप्त का ही निषेध होता है ।

**वाच्यम्। वेदस्य पूर्वभ्रान्त्यभावात्। यथा लोके दोषवतः पुरुषस्य भ्रान्त्या शुक्तौ प्रतीतं रजतं पुनः शुक्तिस्वरूपसाक्षात्कारान्नेदं रजतमिति स एवं प्रतिषेधति। तथा वेदस्य भ्रान्तिकारणाभावात् प्रतीत्यभावस्तदभावात् प्रतिषेधाऽसम्भवात्। अन्यथा वेदे दोषाऽङ्गीकारे बाह्यमतप्रवेशापत्तेः। न द्वितीयः। अप्राप्तस्य निषेधायोगात्। तस्मादुक्तार्थस्यैव वरीयस्त्वम्। किञ्च नानात्वदर्शनोक्तो दोषस्तु–अज्ञानकारणवादिमत एव समन्वितः। यतस्तैः शुद्धस्य सर्वधर्मशून्यस्य द्वैतापत्तिभयात् कारणत्वमनभ्युपगम्य ब्रह्मणः कारणत्वप्रतिपादक-शास्त्रबाधनिवृत्त्यर्थं तत्र मायावच्छिन्नस्य सर्वज्ञत्त्वसर्वशक्त्याश्रयस्येश्वराख्यस्य कल्पनात्। वैदिकसम्प्रदायनिष्ठानां तु एकस्यैव परब्रह्मणः शुद्धत्वाऽनन्तगुण-**

---

मते प्रविष्टा भवन्तो भवेयुरित्यर्थः। अप्राप्तपक्षं द्वितीयमपाकरोति–**न द्वितीय इति**। निगमयति–**तस्मादिति**। यो हि दोषोऽस्मत्पक्षेऽभिहितः स दोषः तन्मत एव सम्भवदुक्तिक इत्याह–**किञ्चेति**। तैः = अत्यन्ताभेदवादिभिः। तत्र = परब्रह्मणि, अस्मन्मते नोक्तदोषावकाश इत्याह– **वैदिकसत्सम्प्रदायेति**। तथैव = प्रागुपदर्शित-प्रकारेण यत्र द्वैतमिव भवतीति। श्रुतेर्विरोधं परिहरति–**यत्र हीति**। यत्र = यस्यामवस्थायां द्वैतमिव

---

यदि कहें कि अध्यस्त वस्तु मिथ्या होती है, इसलिए मिथ्याभूत जगत् का निषेधकत्व इन वाक्यों का हो जायेगा, परन्तु यह नहीं हो सकता है, क्योंकि भेद भ्रान्तिज्ञान का विषय नहीं है, सत्य है। जैसे–लोक में दोषवान् पुरुष के भ्रान्ति से शुक्ति में प्रतीत रजत पुनः शुक्तिस्वरूप का साक्षात्कार होने पर यह रजत नहीं है, ऐसा निषेध हो जाता है। अर्थात् दोष के कारण शुक्ति ही रजत रूप में भास रही थी। दोष निवृत्त हो जाने पर शुक्ति अपने रूप में प्रकाशने लगी। इस निषेध का भी विषय आपणस्थ शुक्ति है, अद्वैत मत सिद्ध प्रातिभासिक रजत नहीं है। यह नियम नहीं है, कि मिथ्या वस्तु का ही निषेध होता है, किन्तु सत्य वस्तु का भी निषेध होता है, ऐसा देखा जाता है। उसी प्रकार चेतनाचेतनात्मक जगत् परमात्मा से पृथक् सिद्ध नहीं है, यही इस निषेध का तात्पर्य है। जगत् का मिथ्यात्व निषेध में कारण नहीं है। वेद के अपौरुषेय होने तथा उसमें कोई दोष न होने से कारणरूप से प्रपंच और ब्रह्म के अभेद प्रतिपादक श्रुतियों का प्रामाण्य अविवादित है। इस प्रकार कार्यावस्था को लेकर चेतनाचेतनात्मकजगत् के साथ भेद प्रतिपादकश्रुतियां भी प्रामाणिक हैं। ब्रह्म के साथ चेतनाचेतनात्मकजगत् का भेदाभेद सम्बन्ध है। भेद भी सत्य है, अभेद भी सत्य है॥ न तो अत्यन्त अभेद है न अत्यन्त भेद है, किन्तु भेदाभेद है। यह सिद्धान्त स्थिर है।

यदि वेद में दोष स्वीकार करेंगे, तो बाह्यमत के स्वीकार की आपत्ति होगी। अतः वेद का निर्दोषत्व निर्विवाद है।

**शक्त्याऽऽश्रयत्वेश्वरत्वकारणत्वाद्यङ्गीकारान्नोक्तदोषगन्धस्पृष्टवातस्पर्शावकाश: ।। तथैव "यत्र हि द्वैतमिव भवति" इति श्रुतेरपि स्वतन्त्रद्वैतनिषेधपरत्वेन नैराकाङ्क्ष्यान्न कोऽपि विरोध: ।**

**तत्सिद्धं केवलाद्वैतवादिमते शास्त्रानर्थक्यमिति । तथैव केवलभेदवादिनां वेदैकदेशबाधस्योक्तत्वात्—नहि शास्त्रबाधनार्थमाचार्याऽऽविर्भावो भवति । अपि**

---

भवति स्वनिष्ठतया परमात्मन: पृथगिव भवति, स्वतन्त्र इव भवतीति यावत् । स्वातन्त्र्यस्याप्रामाणिकत्वद्योतनाय इवशब्द: । अत्र स्वतन्त्रद्वैतो निषिद्ध्यन्त इत्यर्थ: । अत्यताभेदवादिनां मते भेदप्रतिपादकवाक्यानां बाध: । अत्यन्तभेदवादिनां मतेऽभेदप्रतिपादकवाक्यानां बाध: स्यात्, तुल्यबलत्वात् । भेदपराणामभेदपराणां वचनानां बाध्य-बाधकभावो वक्तुं न शक्यते, तेषामुभयेषां षड्लिङ्गोपेतत्वात् ।

एवं सर्वेषां वचनानां स्वार्थप्रामाण्यसिद्धये भिन्नाभिन्नं ब्रह्म शास्त्रस्य विषय इत्येव वक्तव्यमित्याह—**तत्सिद्धमिति** । तत्प्रवर्तनार्थम् = शास्त्रप्रवर्तनार्थम् । विपक्षे

---

चेतनाचेतनात्मक जगत् को अप्राप्त नहीं कह सकते, क्योंकि लोकानुभाव से अप्राप्त का निषेध नहीं होता है । अत: भेद का सत्यत्व सिद्ध हो गया ।

किञ्च—नानात्वदर्शनरूप दोष अज्ञान को कारण मानने वाले अद्वैतियों के लिये ही शोभित होता है । जो लोग उपनिषत् को प्रमाण मानते हैं उनके लिये शोभाधायक नहीं है, यत: भेददृष्टि उनके मत में प्रशस्त है । अद्वैतवादी सर्वधर्मशून्य शुद्ध ब्रह्म को द्वैतापत्ति के भयसे जगत् का कारण नहीं मानते हैं–ब्रह्म के कारणत्व प्रतिपादकशास्त्र के बाध कारणार्थ मायावच्छिन्न ब्रह्म जो सर्वज्ञ है–सर्वशक्ति का आश्रय है, वह जगत् का कारण है, ऐसी कल्पना करते हैं । किन्तु वैदिक सम्प्रदाय में जिनकी निष्ठा है वे लोग एक ही परब्रह्म परमात्मा के शुद्धत्व-अनन्तगुणशक्ति का आश्रयत्व-ईश्वरत्व-कारणत्वादि धर्मों के स्वीकार में दोषगन्ध स्पर्श का अवकाश भी नहीं है, अर्थात् कोई दोष नहीं है, ऐसा मानते हैं ।

"यत्र हि द्वैतमिव भवति" इस श्रुति में स्वतन्त्र द्वैत का निषेध किया गया है, न कि भगवदाधीन द्वैत का । अभेद प्रतिपादक श्रुति का स्वतन्त्र द्वैत के निषेध प्रतिपादन में निराकांक्ष होने से कोई दोष नहीं है ।

अत: केवलाद्वैत में शास्त्र के आनर्थक्य दोष की आपत्ति होगी ।

उसी प्रकार केवल भेदवादी के मत में वेद का एक देश अभेद प्रतिपादक वेद भाग का बाध होगा । अत: केवलभेद भी नहीं माना जा सकता है । शास्त्र के बाधनार्थ आचार्यों का आविर्भाव नहीं होता है, किन्तु शास्त्र के प्रवर्तनार्थ होता है । यदि भेदवादी आचार्यों द्वारा एवं अभेदवादी आचार्यों द्वारा स्वाभाविक भेदाभेद स्वीकार किया जाता

**तु तत्प्रवर्तनार्थमिति भावः । यदि भेदवादिभिरभेदवादिभिश्च स्वाभाविकोऽभेदो भेदोऽप्यङ्गीक्रियते चेत्तर्हि सर्वोऽपि वेदः सार्थकः स्यात् । परन्तु ते स्वसिद्धान्तं त्यक्त्वा आगता अस्मन्मार्गे । अन्यथोक्तदोषाणामवर्जनीयवादलं विस्तरेण । चिदचिद्विशिष्टाद्वैतवादिमते तु नोक्तशास्त्रविरोधः । यद्यपि चेतनाचेतनयोर्ब्रह्मविशेषणत्वेनाङ्गीकृतयोरितरव्यावर्त्तकत्वविशेषणलक्षणत्वानुपपत्त्या ब्रह्मणस्तद्विशिष्टत्वासम्भवस्तथापि तयोर्ब्रह्मणा स्वाभाविकभेदाभेदस्यैवाऽङ्गीकारात् ।**

---

बाधकतर्कमुपन्यस्यति—**अन्यथेति** । स्वाभाविकभेदाभेदस्य शास्त्राविषयत्व इति तदर्थः । उक्तदोषाणाम् केवलभेदवादावलम्बने केवलाभेदवादावलम्बने च, अभेदपराणां वाक्यानां भेदपराणाञ्च वचनानामानर्थक्यरूपादिदोषाणाम् । उक्तशास्त्रविरोधः । भेदाभेदपरवचनानां विरोधः । **चेतनाचेतनयोरिति** । चेतना-चेतनवस्तुजातं परब्रह्मविशेषणभूतं तदुभयविशिष्टं सार्वज्ञ्याद्यचिन्त्यापरिमितकल्याणगुणाकरं जगदुदयविलयाद्यभिन्ननिमित्तोपादानकारणं ब्रह्मेति तेषां राद्धान्तः । व्यावर्तकत्वं तावद्विशेषणत्वं यथा रामो दाशरथिरित्यादिप्रयोगे रामशब्दो हि भार्गवबलरामरघुनाथेषु त्रिष्वपि शक्तस्तदुच्चारणे त्रयाणामप्युपस्थितिः समाना, तत्परत्वात्तस्य तत्र दाशरथिशब्दो द्वाभ्यां व्यावर्ताभ्यां व्यावृत्तं रघुनाथमुपस्थापयति । एवञ्च भार्गवबलरामौ तेन व्यावृत्तौ स्तः । दाशरथिशब्दस्य व्यावर्तकत्वाद्विशेषणत्वं तेन रघुनाथश्च व्यावृत्तः । तथा च व्यावर्तकस्य विशेषणस्य व्यावृत्त्ययोः सतोः साफल्यासामञ्जस्यमिति विदुषां प्रक्रिया । प्रकृते तु चेतनाचेतनात्मकविशेषणयोः सतोरपि व्यावृत्तरूपे विशेषे परब्रह्मणि सत्यपि व्यावृत्त्यस्यान्यपदार्थस्याभावाद्विशेषणसङ्ग्रहस्य निष्फलत्वमेव । चेतनाचेतननियन्तृभ्यः पदार्थेभ्यस्तत्त्वत्रयेभ्यो भवतामपि तत्त्वान्तरानभ्युपगमात् । व्यावृत्तव्यावर्त्यसद्भावसापेक्षत्व-नियमाद्विशेषणसाफल्यस्य व्यावर्त्याभावे व्यावृत्तासिद्धौ विशेषणासिद्धेः कुतो विशिष्टत्वम्, तस्माच्चेतनाचेतनयोः ब्रह्मणा स्वाभाविकभेदाभेदसिद्धान्त एवाभ्युपेय इति भावः ।

---

है, तो सम्पूर्ण वेद सार्थक होगा ।

अतः वेद की सार्थकता के लिए अपने सिद्धान्त का परित्याग करके इच्छा न होते हुए भी उनको भेदाभेद सिद्धान्त स्वीकार करना पड़ेगा । यदि ऐसा नहीं मानेंगे तो शास्त्रबाध दोष की आपत्ति होगी । इसके विवेचन की कोई अधिक आवश्यकता नहीं है । चिदचिद्विशिष्टाद्वैतवादी के मत में शास्त्र विरोध दोष नहीं होगा ।

यद्यपि चेतनाचेतन ब्रह्म के विशेषणत्वरूप से अङ्गीकृत है, तथापि इतर व्यावर्तकत्व विशेषलक्षणत्व अनुपपन्न होने से ब्रह्म के विशेषण नहीं हो सकते हैं । तथापि चेतनाचेतन का ब्रह्म के साथ स्वाभाविक भेदाभेद ही स्वीकर्तव्य है ।

**ननु यः पृथिव्यन्तरो यं पृथिवी न वेद यस्य पृथिवीशरीरं यः पृथिवीमन्तरो यमयतीत्यारभ्य, य आत्मनि तिष्ठन् यश्चात्मनोऽन्तरो यमात्मा न वेद यस्य आत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः इत्यादिश्रुतिभिश्चिदचितोः परमात्मशरीरत्वाभिधानात्। शरीरस्य च आत्मविशेषणत्वेन प्रसिद्धत्वात्। एवं सर्वावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुषः कार्य्यावस्थकारणावस्थजगद्रूपेणावस्थित इति कथं विशिष्टत्वासम्भव इति चेत्सत्यम्? श्रुतिभिश्चिदचितोः परमात्मशरीरत्वं प्रतिपाद्यते, इत्यत्र न कश्चिद् विवादः परन्तु तयोविशेषणत्वस्य वक्तुमशक्यत्वात्। तथा हि—यत्र**

---

तयो: चेतनाचेतनयो: बृहदारण्योक्तान्तर्यामिब्राह्मणे चैतन्याचैतन्ययो: परमात्मन: शरीरत्वमभिहितमतस्तद्वाक्यान्युदाहरति। **यः पृथिव्यन्तर इति**। य: पृथिव्यां स्थित: सोऽन्तर्यामी। सर्वपृथिव्यां तिष्ठतीति सर्वत्रप्रसङ्गो माभूदिति विशिनष्टि पृथिव्या अन्तरोऽभ्यन्तर:। तत्रैतत् स्यात् पृथिवीदेवतैवान्तर्यामीत्यत आह यमन्तर्यामिणं पृथिवीदेवतापि न वेद मय्यन्य: कश्चिद्वर्तत इति। **यस्येति**। य ईदृगीश्वरोऽन्त: प्रविश्य प्रवृत्तिनिवृत्तिलक्षणं नियमनं करोति। एषोऽन्तर्यामी ते = अमृत:। आत्मा निरुपाधिकामृतत्व-शालीत्यर्थ:। अत्र त आत्मेति व्यतिरेकनिर्देशादन्तर्यामिणो जीवस्य व्यतिरेक: सिद्धोऽमृतत्वविशेषणाच्च। तद्विशेषणं जीवव्यावृत्त्यर्थम्। अचिद्वस्तूनां ब्रह्मण: शरीरतया प्रकारत्वमभिधाय सम्प्रति जीवात्मा हि ब्रह्मण: शरीरतया प्रकारत्वाद्ब्रह्मात्मक इत्यत्र प्रमाणमाह-**आत्मनि तिष्ठन्निति**। उपदर्शिताभि: श्रुतिभिर्योऽर्थ: फलितस्तमाह-**चिदचितोरिति**। तत्प्रकार: = स चिदचित्पदार्थ:। प्रकार: विशेषणं यस्मिन्। कार्यावस्थमिति। नामरूपविभागविभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यावस्थमित्यर्थ:।

---

यदि 'य: पृथिव्यन्तरोयं पृथिवी न वेद, तस्य पृथिवी शरीरम्, य: पृथिवीमन्तरो यमयतीत्यारभ्य य आत्मनि तिष्ठन् यश्चात्मनोऽन्तरो यमात्मा न वेद, यस्य आत्मा शरीरम् य आत्मानमन्तरो यमयति स वै आत्मान्तर्यामी अमृत:' इन श्रुतियों द्वारा चित् और अचित् के परमात्मशरीरत्व का अभिधान होने से चेतनाचेतनरूप वस्तुद्वय परमात्मा के शरीर होने से इनके विशेषणत्व की सिद्धि हो गई।

इस प्रकार सर्वावस्थित अर्थात् अन्तर्यामीरूप से सर्वजगद् व्याप्य चिदचिद् वस्तु है, शरीर जिस परमात्मा के, वह परमात्मा चिदचिद् वस्तु शरीर होने से चित् और अचित् ये परमात्मा के प्रकार (विशेषण) हैं, वह परमात्मा कार्य में रहता है उसे कार्यावस्थ कहते हैं। कार्य कारण में अन्तर्यामी रूप से रहता हुआ जगद् रूप से अवस्थित है। इसलिए विशेषण से विशिष्ट होने के कारण चिदचिदात्मक जगत् के साथ अभेद नहीं हो सकता है? ऐसी शंका संगत नहीं है, क्योंकि श्रुतियों द्वारा

**यत्र शरीरत्वं तत्र तत्र विशेषणत्वमिति नास्ति नियमः प्रकृतेः तदभावात् । नहि व्यावर्त्तकत्वमन्तरेण विशेषणत्वं कस्यापि दृष्टं श्रुतं वा । तस्माद् व्यावर्त्यसत्वे एव शरीरस्य विशेषणत्वम् । अन्यत्र व्यावर्त्त्यानां सत्वेन शरीरस्य विशेषणत्वासम्भवात् । प्रकृतेः चिदचितोर्विशेषणत्वे चिदचिद् ब्रह्मेति तत्त्वत्रयादन्यस्याभावाद् भवद्भिरप्यनंगीकाराच्च ।**

**तस्मद् व्यावर्त्याभावाद् व्यावर्त्तकत्वविशेषणलक्षणत्वाभावस्तदभावे च ब्रह्मणो विशिष्टत्वाभावः सुतरां सिद्धः । मास्तु विशेषणत्वम् । एतावन्मात्रन्यूनत्वे**

---

**कारणावस्थमिति** । नामरूपविभागानर्हसूक्ष्मदशावत्प्रकृतिपुरुषशरीरं ब्रह्म कारणावस्थमित्यर्थः । तयोः = चिदचितोः विशेषणत्वासम्भवं विवृणोति—**तथा हीति** । व्याप्तिमभिनीय दर्शयति–**यत्रेति** । तदभावात् = विशेषणत्वाभावात् । प्रागुदाहृतश्रुतिभिः—चिदचितोः परब्रह्मणः शरीरत्वेऽपि तयोर्विशेषणत्वं नोपपद्यते, व्यावर्त्तकस्यैव विशेषणत्वादिति भावः । यस्य पृथिवी शरीरमित्यत्र पृथिवीरूपशरीरं ब्रह्मणो विशेषणं सम्भवति तत्र व्यावर्त्यस्य चेतनस्य सत्त्वादित्याशयेनाह—**अन्यत्रेति** । चिदचितोरुभयोर्ब्रह्मविशेषणत्वे न सम्भवति । व्यावर्त्याभावादित्याह—**प्रकृतेरिति** ।

व्यावर्तकत्वं विशेषणस्य लक्षणं तच्च प्रकृतेऽसात्त्वातच्च, चेतनाचेतनयोर्विशेषण-त्वमसम्भवदुक्तिकमित्याह—**तस्मादिति** । तदभावे = निरुक्त-विशेषणत्वलक्षणाभावे । तयोः चेतनाचेतनयोः । सर्ववस्तुशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदोऽभ्युपेयते ।

---

चिदचित् का परमात्मशरीत्व है, इसमें कोई विवाद नहीं है । चित् और अचित् ये दोनों परमात्मा के विशेषण हैं, ऐसा नहीं कहा जा सकता है, क्योंकि जहां-जहां शरीरत्व रहता है, वहां-वहां विशेषणत्व रहता है, यह नियम (व्याप्ति) नहीं है । चेतनाचेतनात्मक जगत् का ब्रह्म के साथ अभेद होने से ब्रह्म का व्यावर्तकत्वरूप विशेषणत्व चेतनाचेतनात्मक जगत् में नहीं हो सकता है। अतः अभेद होने से, भेद में ही व्यावर्त्य-व्यावर्तकभावसम्बन्ध होने से जगत् और ब्रह्म का परस्पर भेदाभेद सम्बन्ध मानना उचित है ।

किसी वस्तु का विशेषणत्व व्यावर्तकत्व के बिना नहीं है, अतएव व्यावर्तकत्व ही विशेषणत्व है । व्यावर्त्य वस्तु के रहने पर ही शरीर का विशेषणत्व हो सकता है । ब्रह्म के साथ चेतनाचेतनात्मक जगत् का अभेद होने से, कोई व्यावर्त्य न होने से चेतनाचेतनात्मक जो जगत् रूप है उसका व्यावर्तकत्व रूप विशेषणत्व नहीं हो सकता है ।

यदि प्रकृत में चित् और अचित् का विशेषणत्व स्वीकार करने पर चिदचिद्

**न कापि क्षतिः । तयोर्ब्रह्मणा स्वाभाविकभेदाभेदाङ्गीकारेण सर्वेषां वाक्यानां स्वार्थे प्रामाण्यात् । तथा च तेषां ब्रह्मसूत्रभाष्ये । अत्रेदं तत्त्वम् । अचिद्वस्तुनश्चिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः ।**

**अस्मान्मायी सृजते विश्वमेतत्तस्मिँश्चान्यो मायया स निरुद्धः, मायान्तु**

---

एकब्रह्मनानाभूचिदचित्प्रकारनानात्वेनावस्थितमिति भेदाभेदाज्जीवानां स्वरूपं ज्ञानात्मकमित्यचित्स्वरूपापेक्षया चितां स्वरूपवैलक्षण्यं चिदीश्वरयोस्तु यद्यपि ज्ञानात्मकं स्वरूपं सत्यमेव तथापीश्वरस्वरूपं विभुजीवानां त्वण्विति चिदीश्वरयोः स्वरूपवैलक्षण्यम् । इत्याशयेन स्वाभाविकभेदाभेदाङ्गीकार इत्युक्तम् । अचिद्वस्तूनान्तु भोग्यभूतानाम-चेतनत्वमपुरुषार्थत्वं विकारास्पदत्वमित्यादयः स्वभावाः । चिद्रूपाणां जीवात्मनामसकुञ्चिता-परिच्छिन्ननिर्मलज्ञानरूपाणामनादिकर्मरूपाविद्यावेष्टितानां तत्तत्कर्मानुरूपज्ञानसङ्कोचाविकासौ भोग्यभूताचित्संसर्गस्तदनुगुणसुखदुःखोपभोगद्वयद्वारा भोक्तृता भगवत्प्रतिप-त्तिर्भगवत्प्राप्तिरित्यादयः स्वभावाः । परमेश्वरस्य भोक्तृभोग्ययोरन्तर्यामि-रूपेणावस्थानम-परिच्छिन्नज्ञानैश्वर्यवीर्यतेजःप्रभृत्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणतास्व-सङ्कल्पप्रवृत्तस्वेतरसमस्तचिदचिद्वस्तुजातता, स्वाभिमतस्वानुरूपैकरूपा दिव्यरूपनिरतिशय-विविधानन्तभूषणतेत्यादयः स्वभावास्तस्मात्त्रयाणां परस्परस्वभाववैलक्षण्याद् भेदः । अमुमर्थमाह-**अत्रेदं तत्त्वमिति** ।

उक्तार्थं श्रुतिमुखेन प्रमाणयति-**अस्मान्निति** । अनेन ब्रह्मणो जगत्कर्तृत्वस्वभावम-भिहितम् । अनादिकर्मरूपाविद्यावेष्टितत्वं प्रत्यगात्मनां स्वभावमाह-**तस्मिंश्चान्य इति** ।

---

ब्रह्म इस तत्त्वत्रयवस्तु से अन्य कोई वस्तु न होने से व्यावर्त्य वस्तु के अभाव होने से चेतनाचेतनात्मक जगत् का विशेषणत्व नहीं हो सकता ।

चेतनाचेतनात्मक वस्तु को ब्रह्म का शरीर होने से, चेतनाचेतनात्मक जगत् परमात्मा का विशेषण है । ऐसा स्वीकार करने पर पक्ष में भी चित्-अचित्-ईश्वर इन तत्त्वत्रय से अन्य कोई वस्तु के होने से व्यावर्त्य के अभाव होने से व्यावर्तकत्वरूप विशेषणत्व चेतनाचेतनजगत् का नहीं हो सकता है । विशेषण के अभाव होने से विशिष्ट ब्रह्म का अभाव स्वयं सिद्ध हो गया ।

चेतनाचेतनात्मक जगत् का ब्रह्म का विशेषणत्व न होने पर भी कोई क्षति नहीं है—चेतन और अचेतन दोनों का ब्रह्म के साथ स्वाभाविक भेदाभेद को स्वीकार करने से सर्ववेदान्त वाक्यों का स्वार्थ में प्रामाण्यसिद्धि हो जायेगी ।

उन वेदान्त वाक्यों का ब्रह्मसूत्रभाष्य में ऐसे तत्त्व का वर्णन किया गया है- अचित् और चित् दोनों पर ब्रह्म के भोग्य होने एवं परमात्मा को भोक्ता ईशिता होने

**प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्। क्षरप्रधानममृताक्षरं हर: क्षरात्मना वीक्षते देव एक:। अमृताक्षरं हर इति भोक्ता निर्दिश्यते। प्रधानमात्मनो भोग्यत्वेन हरतीति हर:। स कारणं करणाधिपाधिप: न तस्य कश्चिज्जनिता न चाधिप:। प्रधानक्षेत्रज्ञपतिर्गुणेश:, पतिं विश्वस्यात्मेश्वरम्, शाश्वतं शिवमच्युतम्, ज्ञाज्ञौ द्वावजावीशानीशौ, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। भोक्ता भोग्यं प्रेरितारं च मत्त्वा, तयोरन्य: पिप्पलं स्वाद्वत्त्यन-श्नन्नन्योऽभिचाकशीति। पृथगात्मानं प्रेरितारं च मत्त्वा, जुष्टस्ततस्तेनामृतत्वमेति,**

---

चिच्छब्दवाच्या जीवात्मन: परमात्मन: सकाशाद्भिन्ना: नित्या: नाना इति श्रुतिमुखेन दृढयति–**ज्ञाज्ञौ द्वावजावीशानीशाविति**। ज्ञ: = सर्वविषयकप्रत्यक्षानुभवाश्रय:, तथात्वं परमात्मन: स्वभाव:। अज्ञ: = अज्ञानाश्रयत्वं प्रत्यगात्मनां धर्म:। एतेन ब्रह्मणोऽज्ञानाश्रयत्वं वदन्त: प्रत्युक्ता:। कस्यचित्सुखं कस्यचिद्दु:खं कश्चित्संसरति कश्चिन्मुच्यते। इति व्यवस्था यतो दृश्यतेऽतो जीवात्मनो नानाभूता:, न तु जीवैक्यमिति। नित्यो

---

से दोनों के स्वरूप में भिन्नता है, इसका प्रतिपादन कुछ श्रुतियां इस प्रकार करती हैं—'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्योमायया सन्निरुद्ध:, मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्। क्षर प्रधानममृताक्षरं हर: क्षरात्मना वीक्षते देव एक:। अमृताक्षरं हर' इति भोक्ता निर्दिश्यते।

श्रुति द्वारा ब्रह्म का जगत् कर्तृत्व है, यह सिद्ध होता है, जैसे–अस्मान्मायीति। इस श्रुति द्वारा ब्रह्म के जगत् कर्तृत्व स्वभाव को कहा गया है, और अनादि कर्मरूप अविद्या से वेष्टितत्व जीव का स्वभाव है। इसको 'तस्मिंश्चान्यो' इस श्रुति द्वारा दर्शाया गया है।

चित् शब्द से जीवात्मा लिए गये हैं—प्रधान प्रकृति परिणामिनी है अतएव क्षरणशील है। जीव अक्षर और अमृत है। वह जीव प्रकृति को क्षरण स्वभाव में देखता है। अमृत अक्षर जो हर है वही भोक्ता है, जीव है, वह जीव प्रकृति को क्षरणस्वभाव रूप में देखता है। प्रधान प्रकृति को भोग्यत्व रूप से हरण करने के कारण ही जीव को हर कहा गया है। परमात्मा भोक्ता नहीं है।

परमात्मा कारण है। शरीरादि का अधिप स्वामी जीव है। उस जीव का स्वामी (परमात्मा) है उस परमात्मा का न कोई जनयिता है, और न कोई उसका स्वामी कोई अन्य है, वह किसी के पराधीन नहीं है। अर्थात् स्वतन्त्र है, वह परमात्मा प्रधान क्षेत्रज्ञ (जीव) का अधिपति है–अर्थात् स्वामी है, सत्व-रजस्तम: स्वरूप प्रकृति का स्वामी है।

सम्पूर्ण जगत् का पालनकर्त्ता अन्तर्यामी आत्मा ईश्वर त्रिकालाबाध्य कल्याणस्वरूप

**अजामेकां लोहितशुक्लकृष्णां बह्वी प्रजां जनयन्तीं सरूपाम्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य:' इत्यादीनि बहुश: श्रुतिस्मृति-वाक्यानि पठित्वा, अग्रे, एवं सर्वावस्थावस्थितचिदचिदवस्तु शरीरतया तत्प्रकार: परमपुरुष एव कार्य्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतय: कारणावस्थं कार्य्यावस्थं जगत् स एवेत्याहु: ।**

---

नित्यानामित्यादिश्रुतीनामर्थ: प्रागुपदर्शितरीत्याऽवसेय: । एकस्यैव ब्रह्मण: शरीरतया प्रकारभूतं सर्वं चेतनाचेतनात्मकं वस्त्विति सर्वस्यात्मतया सर्वप्रकारं ब्रह्मैवावस्थितमित्याह- **एवमिति । सर्वेति** । सर्वावस्थायां कार्यावस्थाकारणावस्थायां स्थितं यत् चिदचिद्वस्तु तत् = शरीरं यस्य सा शरीरता तयेत्यर्थ: । तत्प्रकार इत्यत्रापि बहुव्रीहि: । सर्वं हि जगत्परमात्मशरीरतया परमात्मस्वरूपमित्यभेदोऽभ्युपेयते । स: परमात्मा एव ।

---

सदा एक रूप में स्थित परमेश्वर है । सर्वविषयप्रत्यक्षानुभव का आश्रयत्व परमात्मा का स्वभाव है, और अज्ञानाश्रयत्व जीव का स्वभाव है ।

एक परमात्मा सर्वविषयक प्रत्यक्षानुभव का आश्रय है । जीव अज्ञान का आश्रय है । 'न जायते इति अज:' इस व्युत्पत्ति के अनुसार जीव और परमात्मा दोनों अज हैं, क्योंकि दोनों का जन्म नहीं होता है ।

जीव भोक्ता है, भोग्य अचेतन जड़ वस्तु है । परमात्मा प्रेरिता अर्थात् जीव और प्रकृति को प्रवृत्ति कराने वाला है । जीव परमात्मा के मध्य, जीव कर्मफलों का भोक्ता है, किन्तु परमात्मा कर्मफलों का भोक्ता न होते हुए देदीप्यमान होता है ।

जीव को परमात्मा के आयत्त और परमात्मा को स्वतन्त्र रूप से पृथक् समझने वाला व्यक्ति प्रसन्न होता हुआ अमृतत्व प्राप्त करता है । सत्व-रजस्तमोरूपा प्रकृति अज है, अर्थात् नित्य है, एक है, जीव और परमात्मा दोनों अज हैं । 'न जायते इति अज:' जिनका जन्म से संबन्ध न हो, उसे अज कहते हैं ।

सत्वरजस्तमोरूपाप्रकृति एक परिणामी नित्य होती हुई, अपने समान त्रिगुण अचिन्त्य नाम-रूपात्मक जगत् की सृष्टि करती है ।

एक जीवरूप अज-त्रिगुणात्मक प्रकृति का ही सेवन करता हुआ उसमें ही आसक्त है । एवं अन्य अज (जीव) भुक्तभोग प्रकृति का त्याग करता है । अर्थात् सांसारिक व्यक्ति सत्त्व-रजस्तमो रूप प्रकृति में आसक्त रहता है, श्रुतिस्मृति वाक्यों का अध्ययनकर ज्ञानी व्यक्ति भुक्तभोग प्रकृति को समझ कर त्याग देता है। तत्पश्चात् सर्वावस्थावस्थित चिदचिद्वस्तु है शरीर जिस परमात्मा का अत: वह परमात्मा चिदचिद्वस्तु शरीर रूप से चिदचिद्वस्तुप्रकारक परमपुरुष परमेश्वर कार्यावस्थ-कारणावस्थ होकर जगद्रूप से अवस्थित है ।

**'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' छा. ६।२।१। तदैक्षत बहुस्यां प्रजायेयेति, छा. ३।३। 'तत्तेजोऽसृजतेत्यारभ्य' छा. ६।२।३। सन्मूला: सोम्येमा: सर्वा: प्रजा: सदायतना: सत्प्रतिष्ठा: । छा. ८।७।१। ऐतदात्म्यमिदं सर्वं तत्सत्यम्, छा. ६।८।७। स आत्मा तत्त्वमसि श्वेतकेतो इति । तथा सोऽकामयत बहुस्यां प्रजायेयेति छा. ६।२।१। स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजतेत्यारभ्य, सत्यं चानृतं च सत्यमभवदित्याद्या तै. २।३।१।**

---

जगत्कारणावस्थमिति श्रुतिमुखेनोदाहरति--**सदेवेति** । अग्रे सृष्टेरादौ इदंशब्दवाच्यस्य कार्य्यस्य जगत: सच्छब्दवाच्ये कारणेऽतिसूक्ष्मत्वेन सत्त्वेऽपि नामरूपविभागाभावेन पृथग्-ग्रहणानर्हत्वात् सदेवेति कारणेनैक्यनिर्देश: सूपपन्न: । तेन विश्वस्य कारणावस्थत्वं बोध्यत इत्यर्थ: । **तदैक्षत इति** । तत्परं ब्रह्म विचित्रानन्तचिदचिन्मिश्रव्यष्टिजगद्रूपेणाहमेव बहु स्यां तदर्थं चादौ प्रजायेय प्रकर्षेण तेजोऽन्नादिरूपेण जायेयेत्यर्थ: । एतेन सृक्षमाणकार्य-बहुत्वावस्था व्यपदिश्यते । अयञ्च जगदुत्पत्तिप्राक्कालिको ब्रह्मण: सङ्कल्प:, एतादृशो जगदुत्पत्तिविषयक: सङ्कल्पश्च ब्रह्मणोऽखिलदोषराहित्येनानन्तकल्याणगुणाश्रयत्वे सम्भवति नान्यथेति, तादृशधर्मवैशिष्ट्यं ब्रह्मण: सिद्ध्यति । अतस्तथाविधमेव ब्रह्माग्रे तत्त्वमसीत्यत्र तत्पदेन परामृश्यत इत्यर्थ: । **तत्त्वमसीति** । अत्र तत्पदं निरस्तसमस्तदोषानवधिकातिशया-

---

इस अर्थ का ज्ञान कराने के लिए कुछ श्रुतियां कारणावस्थ-कार्यावस्थ जगत् परमात्मरूप है, इसका प्रतिपादन करती हैं—

''सदेव सोम्येदमग्र आसीत्'' ''एकमेवाद्वितीयम् छा. ६।२।१। तदैक्षत बहुस्यां प्रजायेय, छा. ३।३। तत्तेजोऽसृजत'' यहां से प्रारम्भ करके छा. ६।२।३। 'सन्मूला: सोम्येमा: सर्वा: प्रजा: सदायतना: सत्प्रतिष्ठा: ७।१। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो!' इति ।

सभी कार्यावस्था एवं कारणावस्था में वर्तमान चिदचिद्वस्तु शरीर है जिस परमात्मा का, वह चिदचिदात्मकवस्तु शरीर पद से गृहीत है । इस प्रकार चिदचिदात्मक प्रकार में बहुव्रीहि समास है ।

अर्थात् सम्पूर्ण जगत् परमात्मा का शरीर होने से परमात्मस्वरूप है । इस प्रकार अभेद स्वीकार किया जाता है ।

वह परमात्मा ही जगत् कारणावस्थ है, इसको ''सदेव'' इत्यादि श्रुति प्रमाण द्वारा सिद्ध किया गया है । सृष्टि के आदि में 'इदम्' शब्द वाच्य कार्यजगत् का सच्छब्द से कारणब्रह्म में अतिसूक्ष्म रूप से रहने पर भी नामरूपविभाग के अभाव से पृथक् रूप से उनका ग्रहण न होने से सत् कारण के साथ ऐक्य का निर्देश किया गया है ।

**इत्युक्त्वा कार्य्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात् कार्य्यस्यानन्यत्वेन कार्यस्य विज्ञाततया एकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरम्। हंताहमिमास्तिस्रो देवता। अनेन जीवेनात्मनानुप्रविश्य 'नामरूपे व्याकरवाणीति' तिस्रो 'देवता' कठ. २।१९। इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाः**

---

संङ्ख्येयकल्याणगुणास्पदं जगदुदयविभवलयलीलं ब्रह्म प्रतिपादयति। तत्सामानाधिकरणं त्वंपदं चाचिद्विशिष्टजीवशरीरकं ब्रह्माचष्टे प्रकारद्वयविशिष्टैकवस्तुपरत्वात् सामानाधिकरणस्येत्यर्थः। अचिद्वैशिष्ट्यञ्च, अचिता जडेन देहेन विशिष्टो यो जीवस्तच्छरीरकं ब्रह्मेति विशिष्टं ब्रह्मैव त्वंपदार्थो न तु जीवमात्रमिति। परमात्मव्यतिरिक्तस्य प्रपञ्चस्य सत्यत्वे परमात्मन एकस्य ज्ञानेन प्रपञ्चस्य ज्ञानं न सम्भवति। न हि घटज्ञानेन पटज्ञानं भवितुमर्हति। तथा चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा छान्दोग्यश्रुत्युक्ता विरुद्धा स्यादित्याशङ्कामपनेतुमाह- **कार्यावस्थ इति**। ब्रह्मणस्तथाविधस्थूलभावश्च सृष्टिरित्यभिधीयत इत्यर्थः। नामरूपविभाग-विभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यावस्थम्। नामानर्हसूक्ष्मदशावत् प्रकृतिपुरुषशरीरं ब्रह्म कारणावस्थम्। एतन्नामक ईदृशश्चायमित्येवं

---

इस निर्देश से विश्व की कारणावस्थता का ज्ञान होता है।

इस प्रकार ब्रह्म विचित्र-अनन्त चिदचित् से मिश्र व्यष्टि जगद् रूप से मैं ही बहु रूप से हो जाऊं, इसके लिए आदि में तेजोऽन्नादि रूप से हो जाऊँ।

इस प्रकार सृज्यमान कार्य की बहुत्वावस्था को दर्शाया गया है। जगत् उत्पत्ति के पूर्व जायमान ब्रह्म का यह संकल्प जगत् के उत्पत्ति विषयक है। वह अखिलदोषराहित्य तथा अनन्त कल्याणगुणों के आश्रयत्व को ब्रह्म में स्वीकार करने पर ही हो सकता है। अस्वीकार पक्ष में वह संकल्प उपपन्न नहीं हो सकता। इस प्रकार ब्रह्म सर्वदोष रहित और अनन्तकल्याणगुणों का आश्रय है, यह सिद्ध हुआ।

इस प्रकार सर्वदोष से रहित अनन्त कल्याण गुणों का आश्रय ब्रह्म सृष्टि के आदिकाल में "तत्त्वमसि" इस वाक्य में तत्पद से विचार का विषय होता है।

"तत्त्वमसि" इस वाक्य में तत्पद निरस्तसमस्त दोष-अनवधिक-अनतिशय-असंख्येय-कल्याणगुणों का आश्रय, जगत् के उदयविभव-लय करना जिसकी लीला मात्र है, ऐसे ब्रह्म का प्रतिपादन करता है। तत्पद का समानाधिकरण त्वं पद अचिद्विशिष्ट जीव है शरीर जिसका, ऐसे ब्रह्म का अभिधान करता है। प्रकारद्वय विशिष्ट एक वस्तु का बोधकत्व ही सामानाधिकरण्य है।

अचिद्वैशिष्ट्यम्—अचित् जड़ के साथ अर्थात् देहेन्द्रिय विशिष्ट जो जीव,

**शब्दा अचिज्जीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् ।**

**अतः स्थूलसूक्ष्मचिदचिद्वस्तुप्रकारं ब्रह्मैव कार्यं कारणञ्चेति ब्रह्मोपादानं जगदिति प्रतिपादितम् । न चैवमद्वैतमागतमिति वाच्यम्, तस्य तत्रैव दूषितत्वात् । तद्यथा निर्विशेषवस्त्वैक्यवादिनः सर्वे ब्रह्मात्मभावोपदेशाः परित्यक्ताः स्युः ।**

---

यो नामरूपविभागस्तदनर्हा या सूक्ष्मावस्था तद्युक्ता प्रकृतिर्महत्तत्त्वादिरूपेणापरिणतेति यावत् । तथाविधाश्च ये पुरुषा जीवा अयं देवो अयं मनुष्य इत्यादिरूपेण निर्देष्टुमशक्यास्तच्छरीरकं ब्रह्म कारणावस्थम् । इयमवस्थैव प्रलय इत्युच्यत इति तदर्थः ।

**स्थूलमिति** । मूलकारणं प्रधानमपि ब्रह्मशरीरत्वाद् ब्रह्मैव प्रधानं सूक्ष्मं शरीरम् । तद्विकारभूतं ब्रह्माण्डन्तु स्थूलशरीरम्, सूक्ष्मशरीरविशिष्टात्मज्ञानेन च स्थूलशरीरविशिष्टात्मज्ञानं सुलभमेव । यथा कश्चिद्देव-दत्तादिः पूर्वं बाल्यावस्थायां दृष्टः स एव पुनस्तारुण्ये स्थूलशरीरको दृष्टश्चेत्सोऽयमित्येव ज्ञायते, तद्वत् सूक्ष्मशरीरविशिष्टविज्ञानेन तद्विकारभूतस्य स्थूलस्य ज्ञानमिति तात्पर्यम् । सूक्ष्मशरीरञ्च

---

वह जीव है शरीर जिस ब्रह्म का, इसलिए ब्रह्म जीवशरीर हुआ । अत: विशिष्ट ब्रह्म ही 'त्वम्' पदार्थ है, जीवमात्र 'त्वम्' पदार्थ नहीं है ।

"स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वम् असृजतेत्यारभ्य, सत्यं चानृतं च सत्यमभवदित्याद्याः ।"

प्रपंच के सत्य होने पर एक परमात्मा के ज्ञान से प्रपंच का ज्ञान नहीं हो सकता, क्योंकि घट के ज्ञान से, पट का ज्ञान नहीं होता । उसी प्रकार एक आत्मा के ज्ञान से प्रपंच का ज्ञान नहीं हो सकता है । इसलिए एक विज्ञान से सर्व विज्ञान प्रतिज्ञा छान्दोग्य श्रुति में उक्त विरुद्ध हो जायेगी ।

इस शंका का परिहार "कार्यावस्थ" इस ग्रन्थ द्वारा करते हैं ।

कार्यरूप तथा कारण रूप से स्थूल-सूक्ष्म चिदचिद् वस्तु है, शरीर है जिस परमात्मा का वह परमात्मा चिदचिद् वस्तु शरीर है–वह परमपुरुष ही है, क्योंकि कारण की अपेक्षा कार्य की अनन्यता होने से कारण के ज्ञान से कार्य का विज्ञान हो जायेगा । अत: एक के विज्ञान से सर्वज्ञान की प्रतिज्ञा का कोई विरोध नहीं होगा । "हन्ताहमिति" इत्यादि से सिद्ध है ।

घटपटादि वाचक सर्वशब्द अन्तर्यामी परमात्मपर्यन्त के वाचक है, घटपद के कम्बुग्रीवादिविशिष्ट घट मात्र में ही शक्ति नहीं है, किन्तु घटान्तर्यामिपर्यन्त, घट पद

**एकस्मिन् वस्तुनि कस्य तादात्म्यमुपदिश्यते। तस्यैवेति चेत् ? स्ववाक्येनैवा-वगतमिति न तादात्म्योपदेशावसेयमस्ति किञ्चित्। कल्पितभेदनिरसनमिति चेत् ? तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयम्। सामानाधिकरण्यन्तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेदित्यादिना। भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात् तत्प्रयुक्ता जीवावगता दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणात्मकब्रह्माऽत्मभावोपदेशा हि विरोधादेव परित्यक्ताः**

---

स्थूलस्य परिणाम्युपादानकारणं मृदादिर्घटादेरिवेति दृष्टान्तदार्ष्टान्तिकयोः परिणामित्वांशेनापि साम्यादुपपन्नतरत्वमित्याशयेनाह —**परमपुरुष एवेति**। **कारणादिति**। **हन्ताहमिति**। **सर्वे वाचका इति**। सर्वे एव शब्दा घटपटादयस्तदन्तर्यामिपरमात्मपर्य्यन्तार्थकाः, घटपटादीनां सर्वेषां वस्तूनां ब्रह्मशरीरत्वेनैव वस्तुत्वात्।

न च घटपटादिशब्दानां सर्वेषां परमात्मार्थकत्वेन पर्यायत्वमिति वाच्यम्। घटशब्दो हि घटव्यक्तिद्वारा तदन्तर्यामिवाचकः। पटशब्दस्तु पटव्यक्तिद्वारेति, प्रकारीभूतद्वारभेदात्। यथा देव-मनुष्यादिशरीराणि तदभिमानिजीवस्य शरीरतया तत्प्रकारभूतानि, तथा सर्वाणि वस्तूनि ब्रह्मात्मकानि। ब्रह्म आत्मा येषां तादृशानि सन्त्येव वस्तुत्वमापन्नानि। काष्ठशिलादिष्वप्यनुद्भूतं चैतन्यमस्त्येवेति देवादिशब्दवत्

---

की शक्ति है। घटपटादिकों का ब्रह्म का शरीर होने से ही उनका वस्तुत्व है, अर्थात् वे वस्तु हैं।

"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीतितिस्रो देवता" कठ. २।१९। इस श्रुति द्वारा अचिद् वस्तु का निर्देश करके उसमें स्वस्वरूपजीवरूप से प्रवेश द्वारा नाम-रूप से व्याकरणवचन द्वारा सम्पूर्ण वाचक शब्द अचिज्जीवविशिष्ट परमात्मा के ही वाचक है। इस प्रकार कारणावस्थ परमात्मा के वाचक शब्द द्वारा कार्य के वाचक शब्द का सामनाधिकरण्य मुख्य अर्थ है। भिन्नप्रवृत्तिनिमित्तक शब्दों का अर्थात् प्रवृत्ति निमित्त शक्यतावच्छेदक धर्म परस्पर विरुद्ध हो और दोनों पदों की एकार्थवाचकता को सामानाधिकरण्य कहते हैं। इस सामनाधिकरण्य सम्बन्ध से अभेद की प्रतीति होती है। इस प्रकार स्थूल-सूक्ष्म चिदचिद्वस्तुप्रकार ब्रह्म ही कार्य कारण है, तथा जगत् ब्रह्मोपादानक है, यह प्रतिपादित हुआ।

ब्रह्म के कार्य-कारणरूप होने से, अद्वैत की ही सिद्धि हुई— ऐसी शंका नहीं करनी चाहिए, क्योंकि इस विषय में दूषण दिया चुका है। जैसे—निर्विशेष वस्तु ब्रह्म के ऐक्य को स्वीकार करने वाले अद्वैतियों के ब्रह्मात्मत्वोपदेश त्यक्त हो जायेंगे। यतः सजातीय-विजातीय-स्वगतभेद-शून्य ब्रह्म में किसका तादात्म्य रूप से उपदेश है ? अर्थात् उपदेश नहीं हो सकता है। यदि कहें कि उसका होगा, तो ऐसा नहीं कह

**स्युरित्यादिना चौपाधिकभेदाभेदस्यापि निरस्तत्वात् । वेदार्थसङ्ग्रहेऽपि "एकविज्ञानेन सर्वविज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति सत्यमिथ्यात्वयोरेकता प्रसक्तिर्वा" इत्यादिना । वेदान्तदीपे च—अत्रेदं वेदविदां प्रक्रिया—"अचिद्वस्तुनः स्वरूपतः स्वभावतश्चात्यन्तविलक्षणस्तदात्मभूतश्चेतनः प्रत्यगात्मा तस्माद्बद्धान्मुक्तान्नित्याच्च निखिलहेयप्रत्यनीकतया सर्वावस्थचिद-**

---

काष्ठादिशब्दा अपि तत्तदर्थाभिमानिजीवान्तर्यामिपरमात्मेत्येवार्थमभिदधति । जीवस्य तदन्तर्यामिणश्चाप्रत्यक्षत्वेन लोकाः केवलं बाह्यमेवार्थं तत्तच्छब्दवाच्यं मन्यन्ते । निगमयति—**अत इति** । कार्यकारणयोरनन्यत्वे, अद्वैतवादस्य प्रसक्तिरित्याशङ्क्य परिहरति—**न चैवमिति** । तस्य = अद्वैतवादस्य तत्रैव = श्रीभाष्ये । दूषणप्रकारकाह—**तद्यथेति** । निर्विशेषवस्तुनि न किमपि सविशेषं ब्रह्मात्मभावमुपलभ्यत इत्याह—**निर्विशेषेति** । **प्रकारद्वयेति** । यथा नीलो घट इत्यत्र—नीलगुणरूपप्रकारविशिष्टं वस्तु नीलपदवाच्यं घटत्वजातिरूपप्रकारविशिष्टं वस्तु घटपदवाच्यं वस्तुनश्चैकत्वान्नीलघटपदयोः सामानाधिकरण्यमित्यर्थः । औपाधिकभेदाभेदे ब्रह्मण्युपाधिसंसर्गाज्जीवब्रह्मणोर्गुणदोषसाङ्कर्यं प्रसज्येत इत्याह—**भेदाभेदवाद इति** । तत्प्रयुक्ताः = उपाधिसंसर्गप्रयुक्ताः । तत्पक्षे निर्दोषब्रह्मतादात्म्योपदेशाविरुद्धा इत्याह—**निरस्तेति** । ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वे सर्वस्यासत्त्वादेवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा बाध्येत इत्याह—**वेदार्थसङ्ग्रहेऽपीति** ।

---

सकते, क्योंकि अपने वाक्य से ज्ञात वस्तु वह तादात्म्य रूप से उपदेश का विषय नहीं हो सकता है । यदि भेद कल्पित कहा जाय, और निरसनीय (खण्डनीय) है । ऐसा नहीं कह सकते, क्योंकि 'तत्त्वमसि' वाक्य से सामानाधिकरण्यरूप तादात्म्योपदेश नहीं हो सकेगा । प्रत्युत ब्रह्म में सामानाधिकरण्य का प्रकारद्वय (चिदचिद्) के प्रतिपादन से विरोध होगा ।

भेदाभेद सिद्धान्तानुसार ब्रह्म में ही उपाधि सम्बन्ध से उपाधि के कारण जीवगत दोष ब्रह्म को ही दूषित करेंगे । अतः सम्पूर्ण कल्मषरूप दोष अपगत हैं जिस ब्रह्म से ऐसे कल्याणस्वरूप ब्रह्मात्मोपदेश ही विरोध के कारण परित्यक्त हो जायेंगे । भेदाभेद सिद्धान्त में औपाधिक भेदाभेद नहीं माना जाता, तात्विक भेदाभेद ही माना जाता है ।

वेदार्थ संग्रह (रामानुजार्य प्रणीत ग्रन्थ विशेष) में भी एक ब्रह्म के विज्ञान से सर्व का विज्ञान हो जाता है, इन सबके मिथ्यात्व होने से किसी भी ज्ञातव्य वस्तु के अस्तित्व की सिद्धि ही नहीं होगी । सम्पूर्ण ज्ञातव्य वस्तु के अभाव से सर्वविज्ञान की सिद्धि नहीं होगी, सत्य मिथ्यावस्तु के एकत्व की आपत्ति होगी ।

वेदान्तदीप में भी वेदार्थ को जो जानते हैं उनका कथन है कि—अचिद् वस्तु

**चिद्व्यापकतया नियन्तृतयाशेषितया चात्यन्तविलक्षण: परमात्मा।** तदुक्तं **भगवता–**

**"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरमेव च। उत्तम: पुरुषस्त्वन्य: परमात्मेत्युदाहृत:।। यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वर:।**

---

चिदचिदीश्वराणां स्वरूपस्वभाववैलक्षण्यादसङ्कराच्च भेद इत्याह—**अत्रेदं वेदविदामिति**। तदात्मभूतश्चेतन: = अचिद्वस्त्वात्मभूतश्चेतन:। **निखिलेति**। निखिला: सर्वे हेयास्तेषां प्रत्यनीकं शत्रुभूतं तस्य भावस्तत्ता तयेत्यर्थ:।

उक्तार्थं श्रीमुखवचनेन प्रमाणयति–**द्वाविमाविति**। अन्नमय: पुरुषश्चेतनाधिष्ठितो देह: क्षरशब्दार्थ:। कूटस्थ: = परिणामनाशरहितो पुरुषोऽक्षरशब्दवाच्य उत्तम:। अत्युत्कृष्टतम: पुरुषस्तु क्षराक्षरशब्दनिर्दिष्टाभ्यां द्वाभ्यामन्यो विलक्षण: परमात्मेत्युदाहृत:। य आत्मतया लोकत्रयमाविश्य बिभर्ति—धारयति, पालयति च, यस्मात् क्षरं पुरुषं भोग्यं भूतं सर्वभूतात्मकं जडमतीतोऽहम्। अक्षरात् कूटस्थाद् भोक्तुर्विज्ञानमयपुरुषादपि उत्तम:, उत्कृष्टस्तस्यापीशनशीलत्वात्। अतोऽहं लोके वेदे च पुरुष: प्रथित: प्रख्यातोऽस्मि। उक्तार्थं श्रुतिमुखेनापि दृढयति—**श्रुतिश्चेति**। **प्रधानेति**। प्रधानं प्रकृति: क्षेत्रज्ञ: जीवात्मा तयो: पति:। उक्तार्थे सूत्रकारस्य सम्मतिमाह—**सूत्रकारश्चैवमिति**।

---

के स्वरूप और स्वभाव से अत्यन्त विलक्षण और उनका आत्मा प्रत्यगात्मा (जीव) है। वह प्रत्यगात्मा बद्ध-मुक्त-नित्य भेद से तीन प्रकार का होता है, परमात्मा निखिल हेय गुणों के विरोधी अनन्तकल्याण गुणों से युक्त होने के कारण सर्वावस्थ होकर व्यापकरूप से नियन्ता और शेषी स्वामी है। इसलिए चिद् अचिद् दोनों से अत्यन्त विलक्षण है।

यह स्वयं भगवान् वासुदेव द्वारा उक्त है। जैसे–'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरमेव च॥ उत्तम: पुरुषस्त्वन्य: परमात्मेत्युदाहृत:। यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वर:। उत्तम: यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम:।'

'अतोऽस्मि लोके वेदे च प्रथित: पुरुषोत्तम:।' इति। श्रुतिश्च–प्रधानक्षेत्रज्ञ पतिर्गुणेश:। विश्वस्यात्मेश्वरं पति अन्तर्वहिश्च तत्सर्वं व्याप्य नारायण: स्थित:।।' इत्यादिका। महाना०। 'सूत्रकारश्चैवं वदति नेतरोऽनुपपत्ते:, भेदव्यपदेशाच्च, अनुपपत्तेस्तु न शारीर:। कर्तृ-कर्मव्यपदेशाच्च, पत्यादिशब्देभ्य:, अधिकन्तु भेदनिर्देशात्।'२।१।२१।

'अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनादित्यादिभि:।' भगवान् वासुदेव का कथन है कि मैं ही इस लोक वेद में व्यापक रूप से वर्तमान हूँ। इसलिए मैं पुरुषोत्तम नाम से प्रसिद्ध हूँ।

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।। अतोऽस्मि लोके वेदे च प्रथितःपुरुषोत्तमः'' ।। इति ।। गी. अ. १५।१६।१७। श्रुतिश्च प्रधानक्षेत्रज्ञपतिर्गुणेशः । श्वे० ६।१६।२१।**

**विश्वस्यात्मेश्वरम् पतिम्, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थित इत्यादिका । महानारायण.उ. । सूत्रकारश्चैवं वदति–नेतरोनुपपत्तेः,**

---

नेतरोऽनुपपत्तेः (ब्र. सू. १।१।१७)। इतरो जीवो नानन्दमयपदेनात्रग्राह्यः । कुतो अनुपपत्तेः । आनन्दमयं प्रकृत्य ''सोऽकामयत बहु स्यां प्रजायेय'', ''स इदं सर्वमसृजत'' इत्यादिश्रूयमाणं सर्वजगत्कर्तृत्वादिजीवे नोपपद्यते तस्मादानन्दमयं ब्रह्मैवेत्यर्थः । भेदव्यपदेशाच्च । (ब्र.सू. १।१।१८)। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवतीति वाक्येन लब्धृलब्धव्ययोर्भेदव्यपदेशाज्जीवो नानन्दमय इत्यर्थः । अनुपपत्तेस्तु न शारीरः (ब्र.सू. १।२।३)। मनोमयत्वेन ब्रह्मैव गृह्यते, उपासनार्थम्, न तु शारीरः शरीराभिमानी जीवः । कुतः सत्यसङ्कल्पत्वादीनां जीवेऽनुपपत्तेः । कर्तृकर्मव्यपदेशाच्च (ब्र.सू. १।२।४)। मनोमयः प्राणशरीरश्चेतोऽपि शारीरो न बोध्यः । कुतः ? एतमितः प्रत्यभिसम्भवितास्मीति शारीरस्य कर्तृत्वेनोपासकत्वेन व्यपदेशात् । परमात्मनः कर्मत्वेनोपास्यत्वेन प्राप्यत्वेन च व्यपदेशात् । एतं प्रकृतं मनोमयत्वादिगुणमुपास्यं

---

इस की पुष्टि हेतु श्रुति को प्रमाणरूप में प्रस्तुत करते हैं—'प्रधानक्षेत्रज्ञपतिरिति ।' भगवान् प्रधान (प्रकृति) और क्षेत्रज्ञ (जीव) के पति हैं–रक्षक नियन्ता हैं । सत्त्व-रजस्तमो रूप प्रकृति के नियन्ता स्वामी हैं, वे सम्पूर्ण विश्व के अन्तर्यामी होने से आत्मा हैं । सबके रक्षक सम्पूर्ण जगत् के भीतर बाह्य व्याप्य (व्याप्त) होकर नारायण रूप से स्थित है । ऐसी श्रुतियां कहती हैं । इसमें सूत्र भी प्रमाण हैं—

परमात्मा से भिन्न जीव और प्रकृति जगत् के कर्ता नहीं हो सकते, क्योंकि जीव और प्रकृति में जगत् कर्तृत्व का सामर्थ्य नहीं है, परमात्मा में ही जगत् कर्तृत्व का सामर्थ्य है ।

यह जीव रस स्वरूप परमात्मा को प्राप्त करके आनन्दित होता है । इस वाक्य से लब्ध और लब्धव्य के भेद व्यपदेश होने से जीव आनन्दमय नहीं है, यह सिद्ध होता है । मनोमय स्वरूप से ब्रह्म का ही ग्रहण होता है–उपासना के लिए शारीर-शरीराभिमानी जीव का ग्रहण नहीं होता है, क्योंकि कर्मकर्तृ का व्यपदेश होने से सत्यसंकल्पत्वादि धर्मों के सम्बन्ध जीव में नहीं हो सकते हैं । मनोमयत्व रूप से प्राणशरीर चेतनजीव को ग्रहण नहीं कर सकते, यतः– 'एतमितः प्रत्याभिसम्भवितास्मीति'– इस श्रुति द्वारा कर्तृत्वरूप से एवं उपासकत्व जीव का व्यपदेश होने से मनोमयत्व रूप से जीव का ग्रहण नहीं है, किन्तु ब्रह्म का ग्रहण करना चाहिये ।

**भेदव्यपदेशाच्च, अनुपपत्तेस्तु न शारीर:, कर्तृकर्मव्यपदेशाच्च, पत्यादिशब्देभ्य:, अधिकन्तु भेदनिर्देशात्, २।१।२१। अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनादित्यादिभि: । न चाविद्याकृतमुपाधिकृतं वा भेदमाश्रित्यैते निर्देशा: ।**

---

ब्रह्म, अहं मुमुक्षुरित: शरीरपातादूर्ध्वं प्रारब्धकर्मध्वंसानन्तरं भवितास्मि प्राप्तोऽस्मि, एवं व्यवसायवानुपासको ब्रह्म प्राप्नोतीत्यर्थ: । पत्यादिशब्देभ्य: (ब्र.सू. १।३।४४) । जीवपरमात्मनोरभेद एव । कुत: ? पत्यादिशब्देभ्य: । सर्वस्याधिपति: । सर्वस्य वशी सर्वस्येशान: सर्वमिदं प्रशास्ति, एष सर्वेश्वर इत्यादिभ्य इत्यर्थ: । **अधिकन्त्विति** । सुखदु:खभोक्तु: शारीरादधिकमुत्कृष्टं ब्रह्म जगत्कर्तृ ब्रूम: । आत्मानमन्तरो यमयतीति भेदव्यपदेशान्न तयोरत्यन्ताऽभेदोऽस्ति यतो हिताकरणादिदोषप्रसक्ति: स्यादित्यर्थ: । अधिकोपदेशात् (ब्र.सू. ३।४।८) । जीवात् कर्तुरधिकस्य सर्वेश्वरस्य सर्वनियन्तु-र्वेद्यत्वेनोपदेशात् । "पुरुषार्थोऽन्त:" । इति भगवतो बादरायणस्य मतम् । एष सर्वेश्वर:, अन्त:प्रविष्ट: शास्ता जनानां सर्वस्येशान:, तं त्वौपनिषदं पुरुषं पृच्छामि "सर्वे वेदा यत्पदमामनन्तीत्यादितद्दर्शनादित्यर्थ: । औपाधिकभेदपरत्वमाश्रित्य भेदप्रतिपादकवचनानां तथात्वप्रतिपादकानां सूत्राणां प्रवृत्तिरिति शङ्कां निराकुर्वन्नाह–**न चेति** ।

---

परमात्मा का कर्मत्व और उपास्यत्व रूप से बोध होता है। परमात्मा मनोमयत्वादि गुण से युक्त उपास्य है। मुमुक्षु शरीरपात के पहले प्रारब्ध कर्मध्वंस के अनन्तर मैंने प्राप्त कर लिया, ऐसा व्यवसायवान् उपासक ब्रह्म को प्राप्त करता है।

'पत्यादिशब्देभ्य:' ब्र. १।३।४४। 'अधिकन्तु भेदनिर्देशात् ब्र. २।१।२१। अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनादित्यादिभि: ।' जीव और परमात्मा का भेद है, यत: परमात्मा सम्पूर्ण चराचर जगत् का अधिपति है। इस प्रकार श्रुतियों में पति इत्यादि शब्दों का श्रवण होने से जीव और परमात्मा में भेद की सिद्धि होती है। परमात्मा सभी का अधिपति है। सभी परमात्मा के आयत्त हैं। सम्पूर्णजगत् का नियन्ता है, इस नाम रूप जगत् का शास्ता है। वही सब का–सर्वेश्वर है।

सुख-दु:ख के भोक्ता जीव से परमात्मा अधिक उत्कृष्ट जगत् का कर्त्ता है। आत्मा के भीतर अन्तर्यामी रूप से नियमन करता है। जीवात्मा और परमात्मा का भेद रूप से निर्देश होने से जीवात्मा का परमात्मा के साथ अत्यन्ताभेद का निषेध किया जाता है। अर्थात् जीव का परमात्मा के साथ अत्यन्त अभेद नहीं है। इसलिए परमात्मा में हिताकरणादि दोष की आपत्ति नहीं है।

जीव से उत्कृष्ट जगत् के कर्त्ता परमेश्वर को सर्वनियन्तृत्व-वेद्यत्व रूप से उपदेश किया गया है। यह बादरायण का मत है, क्योंकि वह परमात्मा सर्वेश्वर है। चेतन प्राणी के अन्त: में प्रविष्ट होकर सब का शास्ता है। तुम से उस उपनिषत्प्रमाणवेद्य परमात्मा को पूछता हूँ, सम्पूर्ण वेद उस परमात्मा पद का वर्णन करते हैं।

**"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।" गीता. १४।२। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति, मु.उ. १।३।३। मुक्तोपपसृप्यव्यपदेशाच्च, ब्र. सू. १।३।२। उत्तराच्चेदाविर्भूतस्वरूपस्तु, सू. १।३।१९। सम्पद्याविर्भावः स्वेन शब्दात् ब्र. सू. ४।४।१। जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ब्रह्मसूत्र ४।४।१७। भोगमात्रसाम्यलिङ्गाच्चेति सर्वाविद्योपाधिविनिर्मुक्तस्यैव भेदोपपादनात् ।**

---

**इदमिति** । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्यानुष्ठाय मम साधर्म्यमागतामत्साम्यं प्राप्ताः सन्तः, सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते, गर्भवासदुःखं नानुभवन्ति । तथा प्रलये न व्यथन्ति प्रलयकालिकदुःखानि नानुभवन्ति । न पुनरावर्तन्त इत्यर्थः । तदा विद्वान् पुण्यपापे विधूय = निरस्य निरञ्जनः प्रकृतितत्कार्यदेहादिसबन्ध-लक्षणोपाधिविनिर्मुक्तः सन् साम्यमुपैतीत्यर्थः । **मुक्तेति** । संसारबन्धान्मुक्तानां प्राप्यत्वेन व्यपदेशाच्च द्युभ्वाद्यायतनं ब्रह्मैव इत्यर्थः । उत्तराज्जीवपरात्प्रजापतिवाक्याज्जीवेऽप्य-पहतपाप्मत्वादिगुणाष्ट-कमवगम्यतेऽतः स एव दहराकाशोऽस्ति चेदुच्यते ? पूर्वोक्तगुणयुक्तो नित्याविर्भूतस्वरूपः परमात्मा दहर आविर्भूतस्वरूपो जीवस्तु न इत्यर्थः । **सम्पद्येति** । जीवोऽर्चिरादिकेन मार्गेण परं सम्पद्य स्वाभाविकेन रूपेणाविर्भवतीति "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति वाक्येन प्रतिपद्यते, स्वेनेति शब्दादित्यर्थः । भोगमात्रेति (४।४।२१) । "सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चितेति" भोगमात्रे खलु मुक्तस्य परमसाम्यबोधक-लिङ्गाच्च मुक्तैश्वर्य्यं जगद्व्यापारवर्जमिति गम्यत इत्यर्थः ।

---

अविद्या या उपाधि कृत भेद का आश्रयण करके पूर्वोक्त निर्देश विवक्षित नहीं हैं। ये मनुष्य, शास्त्र प्रतिपाद्य मेरे स्वरूपज्ञान की उपासना करके हमारा साम्य प्राप्त करके सृष्टि में पुनः उत्पन्न नहीं होते हैं। अर्थात् पुनः गर्भवासजनित दुःख का अनुभव नहीं करते हैं। प्रलयकालिक दुःख का अनुभव नहीं करते हैं, और न पुनः इस संसार में उनका आवर्त्तन होता है। गी. १४।२।

हमारे स्वरूपज्ञान की उपासना करके ज्ञानी व्यक्ति पुण्य-पाप का विधूनन करके दोष रहित परमात्मा का साम्य प्राप्त कर लेता है। मु.उ. १।३।३।

मुक्तोपसृप्यव्यपदेशाच्च। ब्र. १।३।२।

उत्तराच्चेदाविर्भूतस्वरूपस्तु। ब्र. १।३।१९।

संपद्याविर्भावः स्वेन शब्दात्। ब्र. ४।४।१।

जगद् व्यापारवर्ज प्रकारणादसन्निहितत्वात्त्व। ब्र. ४।४।१७।

**श्रुतिस्मृतिसूत्रेषु सर्वत्र भेदनिर्देशे चिदचिदीश्वरभेदः स्वभाविको विवक्षित इति निश्चीयते—इति प्रतिपादितम्। गीताभाष्येऽपि ''न त्वेवाहं जातु नाशं न त्वं नेमे जनाधिपा:'' इत्यस्य श्लोकस्य भाष्ये। औपाधिकभेदात्मवादे ह्यात्मभेदस्यातात्त्विकत्वेन तत्त्वोपदेशसमये भेदनिर्देशो न संगच्छते। भगवदुक्तात्मभेदः स्वाभाविक इति श्रुतिरप्याह—''नित्यो नित्यानां चेतनश्चेतनानामेको बहूनाम्'' इत्यादिनाऽद्वैतस्य निरस्तत्वात्। नन्वेवं चेत्तर्हि**

---

उक्तश्रुतिस्मृतिसूत्रै: प्रधानजीवेश्वराणां तात्त्विक: स्वाभाविको भेद: पूज्यपादश्रीरामानुजाचार्य्यैरभिहित इत्याह—**श्रुतिस्मृतिसूत्रेष्विति**। अयमेवार्थ: समर्थित: पूज्यपादश्रीरामानुजाचार्य्यै: स्वनिर्मितगीताभाष्य इत्याह—**गीताभाष्य इति**। **न त्वेवाहमिति**। सर्वात्मनां मध्ये यथा अहं सर्वेश्वर:, अत: पूर्वस्मिन् काले जातु कदाचिन्नासं नाभवमिति न, अपि त्वासमेव। तथा त्वं नासीरिति न किन्त्वासीरेव। तथेमे जनाधिपा नासन्निति न किन्त्वासन्नेवेत्यर्थ:,। 'अहं त्वमिमे' इति प्रत्ययानां तात्त्विकभेदावगाहित्वमेव न त्वौपाधिकभेदावगाहित्वमित्याह—**औपाधिकभेदात्मवाद इति**। श्रुतिमुखेनाप्युक्तभेद: पारमार्थिक: स्वाभाविकश्चेत्याह—**त्वदुक्त इति**। आक्षिपति—

---

संसाररूप बन्धन से मुक्त जीवों का प्राप्य ब्रह्म ही है, यह श्रुतियों में उपदिष्ट है। जीव परक प्रजाति वाक्य से जीव में भी अपहतपापमत्त्वादिगुणाष्टक के विद्यमान होने से जीव ही दहराकाश है—ऐसी शंका नहीं करनी चाहिये, क्योंकि अपहतपापमत्त्वादि-गुणाष्टक से नित्य आविर्भूत है स्वरूप जिस परमात्मा का, वह परमात्मा ही दहराकाश है, जीव नहीं हो सकता है।

जीव अर्चिरादिमार्ग से परमात्मा को प्राप्त करके अपने स्वाभाविक रूप से आविर्भूत होता है।

मुक्त जीव ब्रह्म के साथ सर्वकामों का भोग करता है। अर्थात् परमात्मा के साथ मुक्त जीव का भोगमात्र में साम्य है। मुक्त जीव का परमात्मा के साम्यलिङ्ग द्वारा, मुक्त के जगद् व्यापारवर्ज ऐश्वर्य का ज्ञान होता है।

सम्पूर्ण अविद्योपाधि रहित परमेश्वर चराचर जगत् से भिन्न है, ऐसा शास्त्रों में उपपादन किया गया है। श्रुति-स्मृति-सूत्रों में सर्वत्र भेद निर्देश होने पर चिदचिद् और ईश्वर का भेद स्वाभाविक विवक्षित है। ऐसा निश्चय किया जाता है। ऐसा भेद प्रतिपादित है।

गीताभाष्य में भी—''न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपा:'' इस श्लोक भाष्य में सभी आत्माओं के मध्य मैं सर्वेश्वर स्वरूप हूँ। अत: पूर्वकाल में मैं नहीं

**कथं विशिष्टाद्वैतमिति सिद्धान्तसिद्धिरद्वैतस्य** निरस्तत्वादिति **चेन्न? सूक्ष्मचिदचिद्विशिष्टस्थूलचिदचिद्विशिष्टयोर्ब्रह्मणोरेवाऽद्वैताभ्युपगमान्न तु विशेषणविशेष्ययोरपीति भावः ।**

**न च तर्हि केवलभेद** आगत इति वाच्यम् । तस्याऽपि–सूत्रभाष्ये एव **निरस्तत्वात् । तथा हि केवलभेदवादिनां चात्यन्तभिन्नयोरेकेनापि प्रकारेणैक्यासम्भवादेव भावोपदेशो ब्रह्मात्मभावोपदेशो न सम्भवतीति सर्ववेदान्तपरित्यागः स्यादित्यनेन परिशेषात् स्वाभाविकभेदाभेद एव तयोः सम्बन्धः सिद्धः । तथा चोक्तं स्वयमेव विशेषणस्य विशिष्टवस्त्वेक-**

---

**नन्वेवमिति** । सूक्ष्मचिदचिद्विशिष्टब्रह्मकारणावस्थं सस्थूल-चिदचिद्विशिष्टं ब्रह्म कार्य्यावस्थम् । एवञ्च कार्यकारणयोरनन्यत्वमित्याशयेनोक्तशङ्कां परिहरति—**नेति** ।

विशिष्टयोर्ब्रह्मणोरद्वैताभ्युपगमे तु केवलयोर्ब्रह्मणोर्भेदः प्राप्त इत्याशङ्क्य परिहरति—**न चेति** । तस्य = केवलभेदस्य । तन्निरासप्रकारमेव विवृणोति—**तथा हीति** । केवलभेदस्य केवलाऽभेदस्य च निरस्तत्वात् । स्वाभाविकभेदाभेदपक्ष एवादरणीय इत्याह—**परिशेषादिति** । तयोः = चिदचितोः । चिदचिद्विशेषणविशिष्टं वस्तु ब्रह्म तस्यैकदेशो विशेषणं तस्मिन् समुदायैकदेशत्वेनाभेदव्यवहार इत्याह—**विशेषणस्येति** । चिदचिदीश्वराणां स्वरूपस्वभाववैलक्षण्याद् भेद इत्याह—**विशेषणविशेष्ययोरिति** ।

---

**था, ऐसा नहीं, किन्तु पूर्वकाल में भी मैं था । इस प्रकार तुम भी पूर्वकाल में नहीं थे ऐसा नहीं, किन्तु तुम भी पूर्वकाल में थे ।**

**औपाधिक भेदात्मवाद में ही आत्मभेद के अतात्विक होने से तत्त्वोपदेशके समय भेद का निर्देश संगत नहीं है ।**

**भगवान् द्वारा कहा गया आत्मभेद स्वाभाविक है । इसमें श्रुति भी प्रमाण है–"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनाम्" इस श्रुति द्वारा अद्वैत का निरास हो जाता है ।**

**यदि अद्वैत का निरास माना जाय तो विशिष्टाद्वैतसिद्धान्त की सिद्धि कैसे होगी ? यह शंका संगत नहीं है–सूक्ष्मचिदचिद्विशिष्ट स्थूल चिदचिद्विशिष्ट ब्रह्म का अद्वैत स्वीकृत है—विशेषण-विशेष्य का अद्वैत विवक्षित नहीं है ।**

**पूर्वोक्त युक्तियों द्वारा केवल भेद की सिद्धि होती है, ऐसी शंका उचित नहीं है—क्योंकि केवल भेद और केवल अभेद दोनों पक्षों का निरास होने से स्वाभाविक भेदाभेद पक्ष ही आदरणीय है । केवल भेद पक्ष में–अत्यन्त भिन्न वस्तुओं की ऐक्य सिद्धि न होने से ब्रह्मात्म भाव का उपदेश सम्भव नहीं होगा । अतएव सर्व वेदान्तों के त्याग की आपत्ति होगी । इस प्रकार–परिशेष से भेदाभेद ही परमात्मा के साथ**

**देशत्वेनाभेदव्यवहारो मुख्यः। विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्य इति तथैव लघुवेदार्थसंग्रहेऽपि–अणुगीतासु "द्वाविमौ पक्षिणौ नित्यौ संज्ञेयौ चाप्यचेतनौ। एताभ्यां तु परो योऽन्यश्चेतनावान् स उच्यते" इति सत्त्वपुरुषवैलक्षण्यं परमात्मनः प्रतिपाद्य, अनुमानाद्विजानीयात् पुरुषं सत्त्वसंश्रयमिति पुरुषस्य सत्त्वाश्रयत्वमुक्त्वा सत्त्वञ्च पुरुषश्चैकस्तत्र**

---

चितां जीवानां स्वरूपं ज्ञानात्मकमित्यचित्स्वरूपापेक्षया चितां स्वरूपवैलक्षण्यम्। चिदीश्वरयोस्तु यद्यपि ज्ञानात्मकं स्वरूपं सममेव तथापीश्वरस्वरूपं विभु जीवानां त्वण्विति। चिदीश्वरयोः स्वरूपवैलक्षण्यमित्यर्थः। तथैव = चिदचिदीश्वराणामभेदव्यवहारो मुख्यः। तेषां भेदव्यवहारोऽपि मुख्यः। एतावता प्रबन्धेन भगवत्पादैः श्रीरामानुजाचार्यैः चिदचिदीश्वराणां स्वाभाविकभेदः। अभेदश्च प्रदर्शित इत्युक्तं भवति। अणुगीतास्वपि चिदचिदीश्वराणां पारमार्थिकभेदश्च संसर्गोऽभिहित। इत्याह—**अणुगीतास्विति। द्वाविमाविति।** इमौ सत्त्वजीवात्मानौ पक्षिणो पक्षिसादृश्याद् रूपकातिशयोक्तिः। नित्यौ = उत्पत्तिविनाशरहितौ। छत्रिणो गच्छन्तीत्येकेनापि छत्रिणा बहूनां छत्रित्वोपचारदर्शनादेवमेकस्य सत्त्वधर्मस्याचेतनत्वाद् द्वयोरचेतनोक्तिरुपचारादुपपद्यते। एताभ्याम् = सत्त्वपुरुषाभ्याम् अन्यो भिन्नोःयः परः = परमोत्कृष्टः परमात्मा। स चेतनावान् = विजातीयबुद्ध्याश्रय उच्यत इत्यर्थः। अनुमानादिति = अनुमानप्रमाणान्निश्चीयते

---

चिदचिद् का मानना उचित है। कहा गया है कि स्वयं चिदचिद् विशेषण विशिष्टवस्तु परमेश्वर के एक देश होने से अभेद व्यवहार मुख्य है।

चित् जीवों का स्वरूप ज्ञानात्मक है, इसलिए अचित् जड़भूत प्रकृति के स्वभाव से विलक्षण है। यद्यपि जीव और ईश्वर ज्ञानात्मक है, तथापि ईश्वर का स्वरूप विभु (व्यापक) है, और जीव का स्वरूप अणु है। इसलिए चिदचित् ईश्वर का स्वाभाविक भेद मुख्य है।

लघुवेदार्थ संग्रह ग्रन्थ तथा अणुगीता में–सत्त्व (बुद्धि) और जीवात्मा पक्षी के सदृश होने से, यहां रूपक अतिशयोक्ति अलंकार है–ये दोनों नित्य हैं अर्थात् उत्पत्ति-विनाश रहित हैं। जैसे–"छत्रिणो गच्छन्ति" वाक्य में एक के (छत्रधारी) छत्री होने पर भी उपचार से सभी को छत्री कह दिया जाता है, उसी प्रकार सत्त्व और जीव के मध्य सत्त्व के अचेतन होने पर भी, उपचार से जीव को भी अचेतन कह दिया गया है।

सत्त्व (बुद्धि) और पुरुष से भिन्न अन्य जो परमात्मा है, वह चेतनावान्, है अर्थात् बुद्धि का आश्रय है, ऐसा कहा जाता है। इस प्रकार सत्त्व और पुरुष से

**सत्त्वविचारेणेत्याश्रयाश्रयिणो: सत्त्वपुरुषयोरैक्यं वा भेदो वेति विचारणीयमि-त्युक्त्वा क्षेत्रक्षेत्रज्ञयोरैक्यमित्येतन्नोपपद्यते पृथग्भूतं तत: सत्त्वमित्येतद-विचारितमिति सत्त्वक्षेत्रज्ञयो: केवलैक्यवादवत्केवलभेदवादोऽप्यविचारणीय इति व्युत्पाद्य तथैवैकत्वनानात्वमित्येव विदुषां नय: ।**

**मशकस्योदुम्बरे चैक्यं पृथक्त्वमपि दृश्यते मत्स्यो यथाऽन्य: स्यादप्सु**

---

पुरुषं सत्त्वसंश्रयम् । सत्त्वं क्वचिदाश्रितं धर्मत्वादिति प्रयोगेण पुरुषस्य सत्ताश्रयत्वं सिद्ध्यतीत्यर्थ: । सत्त्वात्मको धर्म: पुरुषादतिरिक्तो वाऽनतिरिक्तो वेत्याशयेनाह— **सत्त्वं च पुरुषश्चैक इति** । सत्त्वधर्मतदाश्रयपुरुषयोरभेदो वा भेदो वेति विवेचनीयमित्याह— **आश्रयिणोरिति** । क्षेत्रज्ञसत्त्वयोरत्यन्ताभेदवादं दूषयति **क्षेत्रज्ञसत्त्वयोरिति** । क्षेत्रज्ञसत्त्वयोरत्यन्तभेदवादमपाकरोति **पृथग्भूतमिति** । सत्वपुरुषयो: भेदाभेदसिद्धान्तमाह— **तथैवैकत्वनानात्वमिष्यत इति** । सत्त्वपुरुषयोरेकत्वमभेद:, नानात्वं भेदश्च इष्यते । विदुषां नय: युक्ति: तप इति पाठे तु आलोचनपूर्वको निश्चय: ।

उक्तार्थं दृष्टान्तेन परबुद्ध्या रूढं करोति—**मशक इति**, उदुम्बरफलमशकयोरैक्यम-भेद:, मशकस्योदुम्बरफलापृथक्सिद्धत्वाद् उदुम्बरफलोदरे बाह्यस्यस्यास्य प्रवेशायोगात्तदव-

---

परमात्मा के वैलक्षण्य का प्रतिपादन करके अनुमान प्रमाण द्वारा भी इसका निश्चय किया जाता है ।

जैसे—सत्त्व (बुद्धि) किसी (चेतन पुरुष) के आश्रित है, धर्मत्व होने के कारण, घटत्वधर्म के समान । जैसे—घटत्व धर्म में धर्मत्व होने के कारण उसमें घटाश्रिततत्व स्थित है । उसी प्रकार सत्त्व में धर्मत्व होने के कारण उसमें भी किसी का आश्रयत्व स्थित है । आश्रय को पुरुष कहते हैं । इस अनुमान द्वारा पुरुष सत्त्व का आश्रय है, यह सिद्ध होता है ।

पुन: शङ्का होती है कि—उस सत्त्व धर्म का पुरुष के साथ अभेद है, या भेद इसकी विवेचना करनी चाहिये । सत्त्व और पुरुष का अत्यन्त अभेद अनुपपन्न है, क्योंकि पुरुष चेतन है, और सत्त्व जड़ रूप है, एवं क्षेत्रज्ञ और सत्त्व का अत्यन्त भेद पक्ष भी असंगत है, क्योंकि सत्त्व-क्षेत्रज्ञ ये दोनों परमात्मा के अधीन हैं । अत: सत्त्व पुरुष का भेदाभेद सिद्धान्त ही स्थिर सिद्ध हुआ ।

सत्त्व-क्षेत्रज्ञ का एकत्व व नानात्व दोनों इष्ट हैं । यह भेदाभेद सिद्धान्त स्वीकार करने वाले विद्वानों का मत है ।

इस भेदाभेद को दूसरों के भी बुद्ध्यारूढ़ करने के लिए मशक और मत्स्य दृष्टान्त द्वारा भेदाभेद को कहते हैं—जैसे मत्स्य को जल से भिन्न होने के कारण उसमें

**संप्रयोगस्तु तथा तयोरिति । महाभा. अश्वपर्व अ . ४८।१२।१२। उदुम्बरफलजलाश्रययोर्मशकमत्स्ययोरिव यथा स्वाश्रयापेक्षया भेदाभेदव्यपदेशावुभावपि मुख्यौ तथा सत्त्वपुरुषयोरपीत्युपसंहृतम् ।**

**अनेन मोक्षशास्त्रे चिदचिदीश्वराणां भेदव्यपदेशस्तेषां स्वरूपवैलक्षण्यान्मुख्य: । अभेदव्यपदेशोऽप्याश्रयाश्रयिभावेन मुख्य एवेत्युक्तं भवति । तथा च विष्णुपुराणे–''विष्णु: शास्त्रेषु युस्मासु मयि चासौ यथा स्थित:''।। वि. पु. अं. १।१७।३३। सर्वगतत्वादनन्तस्य स एवाहमवस्थित: वि. पु.**

---

यवमशकिदेहस्तत: पृथक्कत्वमपि भिन्नमपि दृश्यत इत्यर्थ: । मत्स्यजलयोरभेदो जलीयत्वेन, आधाराधेयभावेन भेदोऽपीत्याह-**मत्स्य इति**। अप्सु जले सम्प्रयोग: = सम्प्रयोगं मत्स्यस्य यथा जलादन्य: । तयो: जलमत्स्ययो: । तथा = जलीयत्वेनाभेदोऽपीत्यर्थ: । सम्बन्धस्तोयविन्दूनां पर्णे कोकनदस्य चेति तस्योत्तरभाग: । कोकनदस्य=कमलस्य पर्णे तोयबिन्दूनां सम्बन्ध: । तथा सत्त्वपुरुषयो: सम्बन्ध इत्यर्थ: । उक्तमहाभारतवचनयोरर्थं सङ्क्षिपति–**उदुम्बरफलेति** ।

स्वपदवाच्यो धर्म: फलितार्थं दर्शयति–**अनेनेति**। अणुगीतोक्तप्रकारेणेत्यर्थ: । अचित्स्वरूपापेक्षया चिदीश्वरयो: स्वरूपवैलक्षण्याद्भेद: । त्रयाणां तेषामभेद:, ब्रह्माधीनत्वात् । ब्रह्मव्याप्यत्वात्तदाधेयत्वाच्चेत्याह—**चिदीश्वराणामिति** उक्तार्थं श्रीमहर्षिपराशरवचसापि द्रढयति–**तथा चेति** । दैत्यान् प्रति श्रीप्रह्लादोक्तिरियम् । **विष्णुरिति** । सर्वव्याप्तिलक्षणमैश्वरगुणाश्रय इत्यर्थ: । तदर्थमेव व्यनक्ति । **शस्त्रेष्विति** । असौ भगवान् शस्त्रेषु दैत्येषु मयि च व्यवस्थित व्याप्त इत्यर्थ: । तदेवं विष्णोर्ब्रह्मतया सर्वात्मकत्वं भावयन् सर्वस्यापि ब्रह्मात्मकत्वेन तदभेदं पश्यन्नाह–**सर्वतत्त्वादिति** । अनन्तस्य भगवतो:-जगद्व्यावृत्तस्य सच्चिदानन्दस्वरूपस्य सर्वगतत्वाद् व्याप्तत्वात् स एवाहमवस्थित: । सर्वत्रात्मत्वेनावस्थिततत्वात् सर्वाभिन्नोऽहमित्यर्थ: । अत एवाग्रे

---

भेद है, और जलीयत्वरूप से अभेद है ।

जैसे–उदम्बर फल के अन्त: स्थित मशक उदम्बर से अपृथक् सिद्ध होने के कारण उदम्बर के साथ अभेद रूप से व्यवहार होता है, उनके अवयवों के भेद से उनमें भेद भी है ।

मोक्षशास्त्र में चिद् अचिद् और ईश्वर का स्वरूप वैलक्षण्य होने से भेद रूप से व्यपदेश होता है । वह भेद मुख्य है । अभेद भी आश्रयाश्रयिभावरूप से मुख्य है ।

विष्णुपुराण में–''विष्णु: शास्त्रेषु युष्मासु मयि चासौ यथा स्थित:'' वि. पु. अं. १। अं १७।३३।।

**अं. १।२०।८५। चिन्तयन् सर्वभूतस्थमात्मन्यपि च केशवम्। वि. पु. अ. १९।७।**

**मय्यन्यत्र तथा शेषभूतेषु भुवनेषु च। तथैव व्याप्तिरैश्वर्यसंसूचिका प्रभोरिति, वि. पु. अं. १। अ. १९।७२। भगवत: सर्वत्रावस्थितिरेव सर्वाभेदव्यपदेशहेतुरित्युक्तम्, अतो न भेदाभेदव्यपदेशयोर्विरोध इति प्रतिपादितम्। एवञ्च केवलभेदकेवलाभेदयो: शास्त्रविरुद्धत्वेन निरस्तत्वाच्चिदचितोर्ब्रह्मणा सह स्वाभाविकभेदाभेदस्यैवाङ्गीकारो निश्चितो भवति। अन्यथा शास्त्रे**

---

मत्त: सर्वमहं सर्वं मयि सर्वं सनातने, इत्युक्तम्। सर्वेश्वरस्य सर्वान्तर्यामितया सर्वभूतस्थितत्वात्सर्वस्मादभिन्नमित्याह। **चिन्तयन्निति**।

परमेश्वरस्य सर्वत्र व्याप्तिं दर्शयति—**मय्यन्यत्रेति**। **ऐश्वर्यमिति**। ऐश्वर्य्य—सामर्थ्यातिशयं गुणाश्च सत्यसङ्कल्पादीन्संसूचयतीत्यैश्वर्यगुणसंसूचकी तथैव सच्चिद्रूपस्य व्याप्ति:। चिदचितो: ब्रह्मणा सह स्वाभाविको भेदाभेदसम्बन्ध: सूत्रकारमतानुगैर्मनीषिभिर्मन्तव्यस्तत्र न कोऽपि विरोध इत्याह— **अत इति**। श्रुतिस्मृतिविरुद्धत्वात् केवलोऽभेद:, तथा केवलभेदपक्ष: सारासारविवेचनकुशलानां हेय इत्याह—**एवञ्चेति**। भेदाभेदव्यपदेशस्या-विरुद्धत्वादेवेत्यर्थ:। विपक्षे बाधकतर्कमुपन्यस्यति—**अन्यथेति**। तयोर्ब्रह्मणा सह स्वाभाविकभेदाभेदसम्बन्धानङ्गीकार इति तदर्थ:। चिदचितोर्ब्रह्मणा सह

---

वह परमात्मा तुममें और मुझमें अन्तर्यामी रूप से वर्तमान है–देशत: कालत: और वस्तु से उसका परिच्छेद नहीं है, अतएव अनन्त है। अनन्त होने से सर्वगत है। उसी परमात्मरूप से हम अवस्थित हैं–अर्थात् परमात्मा के साथ हमारा अपृथक् सिद्धसम्बन्ध है, यही अपृथक्सिद्धसम्बन्ध अभेदपद से विवक्षित है।

चिद्-अचिद् और ईश्वर का अभेद है–इसका तात्पर्य है कि चिद् और अचिद् ये दोनों ब्रह्म के आधीन-ब्रह्म से व्याप्य-ब्रह्म का आधेय अर्थात् शेष हैं। यह उक्ति प्रह्लाद् की दैत्यों के प्रति विष्णु पुराण में उपलब्ध है। विष्णु सर्वव्यापी सर्वगुणों के आश्रय हैं। प्रह्लाद कहते हैं कि भगवान् अन्तर्यामी रूप से दैत्यों में एवं मुझ में अवस्थित हैं, अर्थात् व्याप्त हैं।

इस प्रकार विष्णु के ब्रह्म होने से, उनकी सर्वात्मकता की भावना करते हुए सम्पूर्णजगत् का ब्रह्मात्मकत्व रूप होने से चिदचिद् का ब्रह्म के साथ अभेद रूप से व्यवहार किया जाता है।

इस प्रकार अनन्त स्वरूप जगद् से व्यावृत्त सच्चिदानन्द रूप भगवान् का सर्वगतत्व-सर्वव्याप्तत्व होने से 'स एवाहमवस्थित:' अर्थात् अपने को ब्रह्म से अभिन्न समझता है। सर्वत्र आत्मत्त्व रूप से अवस्थित होने के कारण सबसे अभिन्न

**सम्बन्धान्तराभावेन पूर्वोक्तेष्वेकतराङ्गीकारे तत्र स्वमुखोक्तदूषणानां स्वसिद्धान्त एवापातादतो नान्यः पक्षः परिग्रहीतुं शक्यते । तस्मादकामैरपि चिदचिदीश्वराणां स्वाभाविकभेदाभेदमेव सम्बन्धमङ्गीकृत्य पुनर्विशिष्टत्वाङ्गीकारो गौरवाव-होऽप्यनुपपन्नोऽपि स्वसम्प्रदायस्य स्वातन्त्र्यसिद्ध्यर्थम् इति सिद्धम्, अलं विस्तरेण ।**

**।। इति श्रीसनत्कुमारनारदसम्प्रदायप्रवर्तकाचार्यश्रीभगन्निम्बार्काचार्य्यानुगतेन निखिलशास्त्रपारावारीणस्वाभाविकभेदाभेदसमर्थन-कुशलेनानन्तरामेण विरचितो वेदान्ततत्त्वबोधः समाप्तः ।।**

---

स्वाभाविको भेदाभेदसंसर्ग इति मत्वा पुन: विशिष्टैक्यमिति स्वीकारे गौरवमेवेत्युपपादयन्नुपसंहरति—**तस्मादिति** ।

**कृतामोलकरामेण तर्कादिविदुषा मया ।**
**टीका सा तत्त्वबोधस्य वितनोतु सतां मुदम् ।।**

।। इति श्री १०८ भगवदवतारश्रीसनन्दनादिप्रवर्तितसत्सम्प्रदायानुगतनिखिलरसिक-चक्रचूडामणि–श्री १०८ स्वामिहरिदासपदाश्रिताश्रितश्रीस्वामिनीशरणपदाश्रितामोलकराम-विरचिता वेदान्ततत्त्वबोधस्य "बालबोधिनी"–टीका समाप्ता ।।

---

हूं, ऐसी प्रतीति होती है । सर्वेश्वर भगवान् को सर्वान्तर्यामी होने से सर्वभूतों में अवस्थित होने के कारण सबसे अभिन्न है ।

इस प्रकार भेदाभेद व्यपदेशों में कोई विरोध नहीं है, यह प्रतिपादित हुआ ।

पूर्वोक्त युक्तियों द्वारा केवल भेद और केवल अभेद को शास्त्र विरुद्ध होने से स्वीकार नहीं किया जाता है । अत: चित् और अचित् का ब्रह्म के साथ स्वाभाविक भेदाभेद है यह निश्चित होता है ।

अन्यथा शास्त्र में सम्बन्धान्तर का अभाव होने से भेदाभेद में एकतर को स्वीकार करने पर अपने द्वारा कहे गये दूषणों की आपत्ति, अपने ही सिद्धान्त में होगी । इसलिए केवल भेद पक्ष अथवा केवल अभेद पक्ष को ग्रहण नहीं किया जा सकता है । अत: इच्छा के होते हुए भी चिद् अचिद् और ईश्वर का स्वाभाविक भेदाभेद सम्बन्ध स्वीकार करके पुन: विशिष्टरूपता स्वीकार भी दोषावह होने से अनुपपन्न है । अत: स्वसम्प्रदाय की स्वतन्त्रतासिद्धि के लिए, भेदाभेद सम्बन्ध स्वीकार्य है । इत्यलं विस्तरेण ।

**।। इस प्रकार डॉ. जयप्रकाश नारायण त्रिपाठी द्वारा प्रणीत 'वेदान्ततत्त्वबोध' की हिन्दी व्याख्या पूर्ण हुई ।।**

●